# शब्दापशब्दविवेकः

( तत्तत्प्रयोगसाधुत्वचिन्तको बुद्धिवैशद्यकारकश् छात्राणामुपाध्यायानां च सममुपकारको ग्रन्थविशेषः )

अयं

लवपुरीये श्रीदयानन्दकालेजे संस्कृतसाहित्याध्यापकपूर्वेण वाक्यपदीयस्य संस्कर्त्रा श्रीगान्धिचरितस्य प्रणेत्राऽनुवादकलोपसर्गार्थचन्द्रिका-प्रस्तावतरङ्गिणी वाक्यमुक्तावलि व्याकरणचन्द्रोदयादि-ग्रन्थानां निर्मात्रा श्रीरामकृष्णतनुजनुषा एम्० ए० एम्० ओ० एल्० इति विरुदभाजा

श्रीचारुदेवेन शास्त्रिणा

प्रणीतः

सोऽयं

जालन्धरस्थैः भारतीयसंस्कृतभवनस्वामिभिः श्रीकृष्णानन्द-शास्त्रिभिः स्वेन व्ययेन प्रकाशितः । पुनर्मुद्रणाद्य-धिकारश्च तैरेव स्वायत्तीकृतः ।

प्रथमं संस्करणम् ]                                        संवत् २०११ वैशाखसङ्क्रान्तौ

ओं नमः परमात्मने ।

नमो भगवते पाणिनये । नमः पूर्वेभ्यः पथिकृद्भ्यः । नमः शिष्टेभ्यः ।

# भूमिका

इह वयं वाग्व्यवहारमधिकृत्य किञ्चित्प्रस्तुमः । न खलु यथा तथा प्रवर्तमानो वाचो व्यवहारो नो विमर्शस्य विषयः । सामान्येन हि तेन विमृष्टेन नार्थः । न चापि यस्याः कस्याश्चिद् वाच एव स विवक्षितः । किन्तर्हि पारम्पर्यागतः शिष्टाभ्यनुज्ञातः संस्कृतव्यपदेशभाजो दैव्या वाचो विशिष्टो व्यवहार एवाभिप्रेतः । यानि यथा वा पदानि शिष्टैरुच्चार्यन्ते तानि तथैव साधूनि भवन्ति । तथा साधुत्वमभ्युपेत्य चेतरैरप्यनुवृत्यानि भवन्तीत्यत्र पृषोदरादीनि यथोपदिष्टम् इति सूत्रकारवचनमेव मानम् । यदि शिष्टाः शब्देषु प्रमाणं किमष्टाध्याय्या क्रियते । शिष्टपरिज्ञानार्थाष्टाध्यायीति भाष्यमपि सूत्राशयं स्फारं स्फारयच्छिष्टानां वाचि प्रामाण्यमङ्गीकुरुते । के पुनः शिष्टा इत्याकाङ्क्षायामित्याहुर्भगवन्तो भाष्यकाराः—आर्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या[1] अलोलुपा अगृह्यमाणकारणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्र भवन्तः शिष्टाः। वयं तु पश्यामः शिष्टाः खलु न केवलं पृषोदरप्रकारेष्वविहितलोपागमविकारेषु शब्देष्वेव प्रमाणमपि त्वन्यत्रापि वाङ्मयेऽविशेषेणेत्यत्र निरुक्ता यदि शिष्टाः शब्देष्वित्यादिर्भाष्यकृदुक्तिरेव ज्ञापिका । शास्त्रे तावत् तिङ्कृत्तद्धितसमासैरभिधानमुक्तमर्थानाम् । तद्यथा श्राद्धे शरदः(४।३।१२।।) इति शास्त्रंशरच्छब्दाच्छ्राद्धेऽभिधेये ठञं विधत्ते । तेन शारदिकशब्दश्च निष्पद्यते । श्राद्धशब्देन चोभयमुच्यते श्रद्धावत्कर्म श्रद्धावान् पुरुषश्च । इह तु श्रद्धावान् पुरुषो न



१ स्वकुटुम्बपोषणे षडहमात्रपर्याप्तधान्याः ।

गृह्यते । तत्कस्मात् । अनभिधानात् । किमिदमनभिधानं नाम । शिष्टैरप्रयुक्तत्वम् । नहि शिष्टाः श्राद्धे पुरुषे विषये शारदिकशब्दं प्रयुञ्जते । महाभागास्ते सामान्येन विहितमपि ठञ् तत्रार्थे नेच्छन्ति । तेन दीव्यति खनति जयति जितम् ( ४।४।२।। ) । अत्र जितमित्यर्थे सामान्येन ठग्विहितः, देवदत्तेन जितमित्यत्र न भवति, अनभिधानात् । एवमङ्गुल्या खनतीत्यत्रापि न, अनभिधानादेव । तस्येदम् (४।३।१२०।।) इति सामान्येनाणादयो घादयश्च विधीयन्ते । अण्युपगोरिदमौपगवम् । परं देवदत्तस्यानन्तरमित्यत्र न भवत्यण्, अनभिधानात् । समानकर्तृकेषु तुमुन् (३।३।१५८।।) इत्यनेनेच्छार्थेषु धातुषूपपदेषु धातुमात्रात्तुमुन्विहितः । इह कस्मान्न भवति । इच्छन्करोति । अनभिधानादेव । इत्यलं निदर्शनाय शिष्टप्रयोगाः प्रधानमुपसर्जनं व्याकरणमित्यस्यार्थस्य । अयमत्र सारः । शिष्टैः प्रयुक्तपूर्वा एव शब्दाः शास्त्रेण संस्क्रियन्तेऽनुशिष्यन्तेऽन्वाख्यायन्ते वा । तस्माद् व्याकरणमन्वाख्यानस्मृतिरिति संविज्ञायते । तत्रापि नेदं युज्यते वक्तुं तावन्त एव शब्दाः सन्ति यावन्तश्शास्त्रेण परिगृहीता इति । अनन्वाख्याता अपि भूयस इति तेषां साधुत्वेपि शिष्टा एव मानम् ।

शिष्टा एव सर्वत्र वाग्व्यवहारे प्रमाणमिति यदुक्तमधस्तात्तत् सम्प्रति प्रसिषाधयिषामः । इदं तावद् व्यवस्थितं यां वाग्वर्तनीमनुवर्तन्ते शिष्टास्तामेवानुविवृत्सति लोकः । का नाम निरवद्या वाक्यप्रणीतिरिति शिष्टपद्धतेरेव शक्यमञ्जसा विज्ञातुम् । तत्र हि त एव प्रमाणं नेतरे । तन्मुखप्रेक्षी लोको यथाजातीयकं वाग्विन्यासं ते प्रयुञ्जते तथाजातीयकमेव स प्रमाणीकुरुते । यया विधया ते तं तमर्थं सन्दृभन्ति तामेवानुकरोति लोकः । व्याकरणे च पदान्येव संस्क्रियन्ते न वाक्यानि, तेन न तदायत्तो वाक्यसाधुत्वप्रत्ययः । वाक्यं च न केवलं साध्विष्यते साधीयश्च, साधिष्ठमपि चेष्यते । इदं च तारतम्यं शिष्टप्रयोगतोऽवसातव्यं भवति नान्यतः । अनलङ्कर्मीणं तत्र व्याकरणम् । नैतदेव । एवं नाम व्यवस्थितो वाग्व्यवहारो यत्तत्रादृतो जनः शास्त्रमपि नाद्रियते । तदेतद्भगवन्तो भाष्यकारा इत्थङ्कारं निदर्शयन्ति—देवश्चेद् वृष्टो निष्पन्नाः शालयः । तत्र भवि-

तव्यं सम्पत्स्यन्ते शालय इति। सिद्धमेतत्। कथम्। भविष्यत्प्रतिषेधात्। यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयो न मृष्यति। कश्चिदाह देवश्चेद्वृष्टः सम्पत्स्यन्ते शालय इति। स उच्यते मैवं वोचः, सम्पन्नाः शालय इत्येवं ब्रूहीति (३।३।१३३॥)। यद्यप्यन्वयवन्त्यर्थवन्ति च पदानि वाक्यं भवति तथापि तेत्रैकेन तिङन्तेन भवितव्यमिति नियम्यते। तच्च तिङन्तं पदं न सर्वत्र यते, क्वचिद् गम्यते चापि। क्व चेदमनुक्तमपि गंस्यते। काऽस्य परिहारो न केवलं वाक्यदुष्टये न भविष्यत्युपस्कृतये चापीति शिष्टशैलीत एव शक्यमध्यवसातुम्। अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोप्यस्तीति भाष्याच्छक्यतेऽनुमातुमस्तेर्लट्परकस्याप्रयोगोपि दोषावहो न भवतीति। † कोऽसौ। का प्रवृत्तिः। एको देवः सर्वभूतेषु गूढः। असाधुदर्शी किलाऽसौ। अहो मधुरमासां दर्शनम्। अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोश्वा इत्यादिष्वप्रयोगोस्तेर्वाक्यस्य लाघवाय भवति माधुर्याय च। भाष्यवचने पुरुषग्रहणमतन्त्रम्। अन्यत्राप्यस्तेस्त्यागो न दोषाय कस्त्वं भो इत्यादिषु। परं त्यागः काचित्कः प्रयोगस्तु प्रायिकः। परमस्तिरयं न शक्यो वाक्योपक्रमे परित्यक्तुम्। अस्ति पुण्यकृतामधिवासो वासवावास इव वसुधामवतीर्णः...श्रीकण्ठो नाम जनपद इति श्रीहर्षचरिते। अन्यत्रापि धात्वन्तरस्याप्यप्रयोगमनुमन्यन्ते शिष्टाः। प्रविश पिण्डीम्। इह भुङ्क्ष्वेति त्यक्तम्। तदन्तरेण तदर्थगतेः। इति शङ्करभगवत्पादाः, इति गुरुचरणा इत्यादिषु मतोपन्यासात्मकेषु वाक्येष्वाहुर्मन्यन्ते पश्यन्ति प्रतिजानत इत्यादि तिङन्तं गम्यमानमपि वाक्यालंकृतये भवति। जुषन्ते हि शिष्टास्तत्प्रकारमास्वादन्ते च रसज्ञा दोषज्ञाः। यत्रापि क्वचिद्योग्यक्रियाध्याहारो न दुष्करः, किन्तर्हि निगदसमकालं तत्तत्क्रियापदं बुद्धिमुपारोहति तत्रापि

---

† इदमत्र बीजं बोध्यम्—सर्वपदार्थेषु चास्ति वाक्यशक्तिः। वृक्ष इत्युक्तेऽस्तीति गम्यते। न सत्तां पदार्थो व्यभिचरतीति (सोमभाष्ये ३।१७॥)।

परिहरन्ति तत् प्रयोगचणाः। तद्यथा—यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्येन सर्वस्य कटुरेव सः॥ अत्र च्छिनत्त्यादयः क्रिया अश्रुता अपि स्फुटावगमाः। एवम्—मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा। वाहिनीजलभरः कुलिशं वा स्वस्ति तेस्तु लतया सह वृक्ष॥ इत्यत्रापि धाक्षीदित्यादयोनुक्ता अपि क्रियाः स्फुटमवभासन्ते इति निरवद्यं वचः। अस्त्येवञ्जातीयके विषये आदिकविना कृतः क्रियापदस्य परिहारः, स दृश्यताम्—शृणु मैथिलि मद्वाक्यं मासान्द्वादश भामिनि। (रा० ३।५६।२४) इति। अत्र प्रतीक्षिष्य इति शेषः सहसैवोपतिष्ठते न च यत्नं प्रतीक्षते। यश्चैवं कथने विच्छित्तिविशेषस्तस्य सहृदया अभिज्ञा इति नार्थो वाग्विग्लापनेन। संभ्रमे वाक्यकारो द्विरुक्तिं पदस्य विधत्ते। रक्ष रक्ष व्याघ्रो मामाघ्रातुमिच्छति। परं संभ्रमे तिङन्तपदपरिहारोपि दृश्यते। आपस्तावत्। इमा आपः। आसनं तावत्। इदमासनम्। इदमत्र तत्त्वं बोध्यम्। क्रियोच्चारो हि विलम्बयत्यर्थप्रतीतिं निर्दिश्यमानार्थप्रतिपत्तिं ❀ च। इष्यते चाकालहीनं प्रवृत्तिः। सा च लघुनैव न्यासेन शक्या न गुरुणेति सुग्रहं सुधीभिः। आपस्तावदाह्रियन्तामित्यधिककालोच्चार्यं वाक्यं समाहितस्येष्टं स्यान्न संभ्रान्तस्य।

इत्थम्भूते वाक्ये कीदृशः पदानां क्रम इत्यधिकृत्य किञ्चिद्ब्रूमः। पात्रमाहर, आहर पात्रमित्येवं वाक्ये पदानां यथेष्टमभिसम्बन्धः क्रियते। तेनान्यत्रापि नियतः पदानां क्रमः कश्चिन्नास्तीत्युक्तं भवति। रामः सीतां परिणिनाय। सीतां रामः परिणिनाय। परिणिनाय सीतां रामः। परिणिनाय रामः सीताम्। सीतां परिणिनाय राम इति रामकर्तृकः सीताकर्मको भूतानद्यतनपरोक्षवृत्तिः परिणय इत्यर्थो येन केनापि पदक्रमेण शक्यो वक्तुम्। अत्र वक्तॄणां कामचारः। परमिदं प्रायिकम्। क्वचिन्नियतापि पदानुपूर्वी काचिदस्तीति नापलापमर्हति। तद्यथा।



❀ अनुष्ठानम्।

उपाख्यानोपक्रमः प्रायेणास्तिना क्रियते। अस्त्ययोध्यायां चूडामणि-र्नाम क्षत्रिय इत्यादिः। अद्य सप्त वासरास्तस्येतो गतस्य। एतद्वाक्य-गतोपि पदक्रमो नियतप्राय इत्यवश्यमुररीकरणीयम्। अयमेव च क्रमोऽ-परपञ्चालेषु (पञ्जापदेशे) लोकभाषायामित्यस्य न्याय्यत्वे दृढं लिङ्गम्। अत्र हि संस्कृतं सर्वप्रथमं चिरतरं च प्रचचार। अत्रैव पाणिन्यादयो मुनयो जनिं लेभिरे। इदमेव च सारस्वतं धाम पूर्वे प्रपेदिरे वाच्यभि-विनयस्य कामुकाः। तथा च कौषीतकिन आमनन्ति—तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यते। उदञ्च उ एव यन्ति वाचं शिक्षितुं यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति (कौ० ७।६॥) तस्मादिहत्या वाक्छैली प्रकृतं क्रमं चेदुपोद्वलयति नूनं बद्धभूमिरयं भवति। यद्यपि 'यस्य येनास्ति सम्बन्धो दूरस्थेनापि तस्य सः', इति व्यवहितविप्रकृष्टोपि सो ऽवगम्यते, तथापि नेह निरवग्रहं प्रभवन्ति वक्तारो वक्तुम्। लोको हि वारयति। इच्छति च क्रमं कञ्चित्। अत एवाक्रमताऽस्थानस्थपदता संकीर्णता चेति दोषत्रितयं वाक्यगतं निर्दिशन्त्यालंकारिकाः। अक्रमता यथा—कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी। अत्र त्वमित्यस्यानन्तरं चकारो युक्तः। अस्थानस्थपदता यथा—हितान्न यः संश्रृणुते स किंप्रभुः। अत्र संश्रृणुत इत्यतः पूर्वं नञः स्थितिरुचिता। संकीर्णता यथा—चन्द्रं मुञ्च कुरङ्गाक्षि मानं पश्य नभोङ्गने। अत्र नभोङ्गने चन्द्रं पश्य मानं मुञ्चेति युक्तम्।

वाक्ये षष्ठ्यन्तं विशेषणं विशेषणान्तरेणाव्यवहितं विशेष्यात्पूर्वं प्रयुज्यत इति शिष्टव्यवहारः। सर्वगुणसम्पन्नस्तस्य सुतः कस्य स्पृहां न जनयति। एकातपत्रं जगतः प्रभुत्वमिति कालिदासश्च। न ह्यत्र जगत एकातपत्रं प्रभुत्वमित्येवं क्रमः शक्यो विपर्यासयितुम्। न ब्रूमो वृत्तभङ्गभयादिति। किन्तर्हि व्यवहारातिक्रमादिति। एवं हि व्युत्क्रमेणो-च्यमाने व्यवहारोतिक्रान्तो भवतीति। एवं सर्वैर्योषितां गुणैरलंकृतेत्य-नुक्त्वा योषितां सर्वैर्गुणैरलंकृतेति न युज्यते वक्तुम्। किं च भवति यद्युच्येत। वैरस्यमुद्वेगो वा। स नेष्यते। अयमेवेष्टः पदक्रम इत्यत्र

समासक्रमोपि ज्ञापकः। स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने इति नानार्थवर्गेऽमरः। तत्र वणिजो धनं वणिग्धनमिति पूर्वं षष्ठीसमासः। ततः किंलक्षणं तदित्याकाङ्क्षायां मूलं च तद्वणिग्धनं चेति मूलवणिग्धनमिति विशेषणसमासः। अन्यत्रापि स एव 'कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इति पठति। तत्रापि पूर्वम् इभस्य बन्धनमिभबन्धनमिति षष्ठीसमासः, ततस्तन्मध्यशब्देन विशिष्यते। एवं मालविकाग्निमित्रे सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्येति प्रयोगेपि पूर्वमन्तः पुरवनितानां व्यापार इति षष्ठीसमासः, ततः सर्वशब्देन कर्मधारयः।

बहुव्रीहौ समासेपि पदानां क्रमो वाक्यगतस्य क्रमविशेषस्य समर्थकः। वृतः श्रिया भास्वरसर्वदेहः ( रा० ३।७३।४६ ) इत्यत्र, तां दृष्ट्वा चारुसर्वाङ्गीम् ( रा० ६।८१।१७ ) इत्यत्र च सर्वशब्दस्य विशेष्यादव्यवहितपूर्वं निपातः, ततो विशेषणान्तरस्य भास्वरस्य चारुणश्च। सर्वोपसर्जनो बहुव्रीहिरिति यस्य कस्यैकतरस्य पूर्वनिपातो न्याय्यो भाति, न चैवं भवति। लोको नानुजानाति। वाक्येनाभिधाने प्राप्त एव समास आरभ्यत इति वाक्यगतः पदक्रम एव समास आश्रीयते, तस्यैव न्याय्यत्वात्। तेन वाक्येपि भास्वरः सर्वो देहोऽस्येति क्रमः। चारूणि सर्वाण्यङ्गान्यस्या इति च। तस्माद्वाक्ये सर्वादिभिः सर्वनामभिर्विशेष्यादव्यवहितपूर्वं निपतितव्यं विशेषणान्तरैश्च गुणवचनैस्ततो व्यवहितैरिति क्रमनैयत्यं भाति। एवं परमः स्वो धर्मोऽस्येति परमस्वधर्म इति समासान्तेषु दीक्षितवचोपि वाक्येऽमुमेव क्रममनुमापयतीति दिक्।

निघातयुष्मदस्मदादेशा वाक्यादौ न प्रयुज्यन्ते। नमस्त इति निर्दुष्टाऽऽनुपूर्वी, ते नम इति दुष्टा। कल्याणमस्तु व इति भवति, न तु वः कल्याणमस्त्विति। वाकारेण चकारेण एवकारेण च युक्ता अमी वाक्यमध्येप्यप्रयोज्याः। इदं ते च मे च साधारणं स्वमिति दुष्टो न्यासः। तव च मम चेत्यादिस्तु शिष्टः। इदं पारितोषिकं त्वाऽभिगच्छतु मा वेति वचनीयो विन्यासः। त्वां वाऽभिगच्छतु मां वेति तु प्रशस्यः।

अव्ययेषु तु पुनः खल्वादयो वाक्यादौ निषिद्धाः। तं तु देशं न पश्यामि यत्र भ्राता सहोदर इति साध्वी पदानुपूर्वी। ये पुनरधर्मेणैधते जनो न धर्मेणेति मते स्थितास्ते भ्रान्ताः। न खलु न खलु बाणः संनिपात्योऽयमस्मिन्। विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम। जघान कंसं किल वासुदेवः। अर्हति किल कितव उपद्रवम्। इमानि वाक्यानि पुनरादयो नारभन्त इति साधूनि भवन्ति। अत्र 'न पादादौ खल्वादय' इति काव्यालङ्कारसूत्रमप्यनुकूलम्। जातुशब्दोपि वाक्यादौ न प्रयुज्यते प्रायेण—न जातु कामः कामानामुपभोगेन शाम्यति। कच्चित्त्वादावपि शक्यमिदं प्रयोक्तुमित्यत्र न जात्वपूर्वम् (८।१।४७) इति पाणिनीयं सूत्रं लिङ्गम्। चेच्छब्दश्च न वाक्यादौ प्रयुज्यत इति चेत्कृष्णं नंस्यसि स्वर्गं यास्यसीति न शक्यं वक्तुम्। इदं चात्रापरमवधेयम्—चेच्छब्दप्रयोग उत्तरवाक्ये तदा तर्हीत्यादि पदं न दीयते। कृष्णं चेन्नंस्यसि तदा (तर्हि) स्वर्गं यास्यसीत्येवं वक्तारो व्यवहारमतियन्ति।

उक्तः पदक्रमः। लिङ्गसंख्ये सम्प्रत्युच्येते। इदं तावदभ्युपेयं दुर्ग्रहो लिङ्गभेदः। अन्तर्वाणयोप्यत्र मुह्यन्ति। वैयाकरणाः खलु प्रत्ययतो लिङ्गमुन्नयन्ति प्रायेण। न च सर्वत्र प्रत्ययाश्रय एव लिङ्गावसायो लोकाश्रयश्चापि। नदी कुमारी स्त्री गौरी मतिरीहा ब्रह्मबन्धूरित्यादिषु प्रत्ययतो लिङ्गोन्नयः। अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीषु तु लोकतः। कश्चिच्छब्द एकार्थक एव नानालिङ्गको दृष्टः। तटस्तटी तटम्। कश्चिदर्थभेदे लिङ्गभेदमुपगच्छति। यथा—काननवाच्यरण्यशब्दो नपुंसकम्, महत्त्वविशिष्टः स एव स्त्रियां भाष्यतेऽरण्यानीति। सरस्वच्छब्दः पुंसि समुद्रमाह, स्त्रियां तु नदीविशेषं सरस्वतीम्। गोष्ठमिति गवां स्थानमाह, गोष्ठीति च संसदम्। गन्धवहः पुमान् वायुमाचष्टे, गन्धवहा स्त्री तु नासिकाम्। दुरोदर इति कितवं वक्ति, दुरोदरमिति च द्यूतम्। सर इति कासार इत्युच्यते, सरसीति च महत्सरः। जलाशयो जलाधारो भवति, जलाशयं तूशीरम्। पिशुनं कुङ्कुमं भवति, पिशुनस्तु सूचकः, पिशुना तु सूचिका नारीत्यलं विस्तरेण।

आतश्च लोकाश्रयो लिङ्गावसायः। स्थूणेति टाबन्तं स्त्रीलिङ्गम्, गृहस्थूणमिति च नपुंसकम्। ऊर्णेति स्त्रियां नियतम्, शशोर्णमिति च क्लीबे। इह परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति शासनमतिक्रम्यते लोकश्च प्रमाणीक्रियते।

क्वचित्तु समानार्थत्वेपि प्रत्ययमात्रकृतो लिङ्गभेदो दृश्यते यदुच्यते स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ऽपीति। तद्यथा—सन्निधिः पुमान्, सान्निध्यं नपुंसकमिति ष्यञ्कृतो भेदः। रक्षो नपुंसकम्, राक्षसः पुमान्। गायत्री स्त्री भवति गायत्रं नपुंसकम्। अनुष्टुप् स्त्री भवति, आनुष्टुभं नपुंसकम् इत्यण्कृतः। स्मृतयः प्रमाणं वेदाश्च प्रमाणतरा इति तरप्प्रत्ययकृतः।

अन्यत्र च समानेपि प्रत्ययेऽर्थभेदाल्लिङ्गभेदः। तद्यथा—तयप्प्रत्ययान्तं धर्मवृत्ति स्त्रीनपुंसकयोः। वर्णानां चतुष्टयी, वर्णानां चतुष्टयम्। वेदानां त्रयी, वेदानां त्रयम्। धर्मिवृत्ति तु वाच्यलिङ्गम्—त्रय्यः स्थितयः, त्रयो लोकाः, त्रयाणि जगन्ति।

धातुनिर्देशे याविक्श्तिपौ तदन्तं पुंसि—अयं वृधिः। अयं पचतिः।

अव्ययं नपुंसकं भवत्यव्ययीभावश्च। शोभनं श्वः। इदं तिष्ठद्गु कालः। स्वरपि मे न मनोहरमुत्त्रसत्पृषतलोचनया रहितं त्वया। अत्र मनोहरमिति च रहितमिति च विशेष्यनिघ्नतया नपुंसकम्।

इदं चात्र शब्दस्वाभाव्यमालोच्यताम्। प्रतिहारीति स्त्रीलिङ्गो द्वारपालं द्वारपालिकां चाप्याह। प्रमाणयन्ति चैतदभिधानकृतः—द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तर इति। अयं पुंव्यक्तावपि स्त्रियामिति टीकाकारो महेश्वरः। शिवेति शृगालं शृगालीं चापि समं ब्रूते। आह च स्वामी—अयं शृगालेपि स्त्रीलिङ्गः। होत्रेति स्त्रियां नियतमेव ऋत्विगर्थे वर्तते। अमित्रशब्दः शत्रुपर्यायः स्त्रीपुंसयोर्नियतः। अमित्रा मित्ररूपेयं पाणिगृहीती ममेति श्रीरामायणे (                )।

सङ्ख्यामधिकृत्य न बहु वक्तव्यमस्ति। एकत्वादीनां वाचिका विभक्तयो यथाविषयं प्रवर्तन्ते। परं क्वचिदेकत्वेपि बहुवचनं श्रूयते। कथं

महाराजदशरथस्य धर्मदारा इयं कौसल्या। कष्टमभिज्ञायते सैवेयमिति। अत्र पत्न्याः कौसल्याया एकत्वेपि दारशब्दो बहुत्वे पुंसि प्रयुक्तः। कचिदात्मनि बहुमानेनापि बहुवचनं प्रयुज्यते यथोक्तं षड्गुरुशिष्येण वेदार्थदीपिकायाम्—

व्याख्येयार्थबहुत्वेन बहुमानेन चात्मनः।
व्याख्यात्रात्मन्यथारोप्य बहुत्वं तु प्रयुज्यते॥
यथा हि निधिमासाद्य प्रयुञ्जानस्तु दृश्यते।
एते वयं समृद्धार्था देवो ऽस्मासु प्रसीदति॥ इति।

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः (वैराग्य० श्लो० ५३) इति राजानं प्रति यतेरुक्ति बहुमानगर्भितेति युज्यते बहुवचनम्। परमन्तरेणापि बहुमानमेकस्मिन्वक्तरि बहुवचनं व्यवहारानुगं भवति। इह पुष्यमित्रं याजयाम इति वर्तमाने लडिति सूत्रे भाष्यकारस्यात्मानं प्रत्युक्तिः। तन्नरं वपुषि कुञ्जरं मुखे सन्महे किमपि तुन्दिलं मह इति मल्लिनाथः। अस्मदो द्वयोश्चेति शास्त्रमप्यत्रार्थे प्रमाणम्। तेन ग्रामे नः कृत्यमिति साधयामो वयमिति प्राकृतो प्यर्हति वक्तुम्। सविशेषणत्वे त्वेकवचनमेव यथाप्राप्तं भवति। देवदत्तोहं ब्रवीमि। आत्मशब्दप्रयोगोप्येकत्व एव दृश्यते बहुत्वेपि विवक्षिते। तद्यथा भारते प्रयोगः—मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ( प्रजागरपर्वणि ३४।४५। )। बहुधा च प्रयुञ्ज्महेऽज्ञा आत्मानं कृतिनं मन्यन्त इति। एक आत्मेति पक्ष एकवचनमुपपन्नमेव। नानात्मान इति नैयायिकादीनां पक्षेऽप्येकवचनं नायुक्तम्। प्रत्येकं वाक्यपरिसमाप्तेः। अज्ञाः प्रत्येकमात्मानं कृतिनं मन्यन्त इत्यर्थात्। यदिहात्मशब्दविषय उक्तं तदात्मवाचिनि स्वशब्देप्यवितथम्। एवं लपन्तोऽज्ञाः स्वस्य जाड्यमुदाहरन्ति। अत्र स्वेषामिति वदन् बाढं भवत्यपशब्दभाक्।

द्वयोर्द्वयोरर्थयोर्वाचकाः स्तनादयो बहुभिरभिसम्बध्यमाना अपि द्वित्वं न जहति प्रायेण। तदुक्तं वामनेन—स्तनादीनां द्वित्वाविष्टा जातिः प्रायेणेति। तद्यथा—इह स्थितानां नः श्रोत्रयोर्मूर्छति तूर्यनादः। चारै

पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः। श्रान्ता वयम्। नाम्रतो नश्चरणौ प्रसरतः। ये बाहुभ्यां नदीं तरन्ति ते बाहुका इत्युच्यन्ते। परं नायं नियमः। इदं प्रायिकमिति वामनेनैव शब्दत उक्तम्। तेन 'शूरबाहुषु लोकोऽयं लम्बते पुत्त्रवत्सदेति' भारते (शा० ९८।१७॥) बहुवचनं संगच्छते। तत्र शूराणां बाहवस्तेष्विति विग्रहः। पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः (रा० २।४३।१७)। यत्तु आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुश्श्रोत्रमथो बलमित्युपनिषद्येकवचनं तदिन्द्रियाभिप्रायेण। इन्द्रियं नामैकं भवति, गोलके तु द्वे, अतश्चक्षुषी श्रोत्रे इति द्विवचनम्। यच्च कुमारे (३।६७॥) उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानीति बहुवचनं तद् बहुत्वापेक्षम्। त्रिलोचनस्य भगवतः शिवस्य तानीति।

केचिच्छब्दाः पुम्भूम्नि नियताः। अथ ब्रह्मचर्यं परिसमाप्य दारान्कुर्वीत। पत्नीपरिग्रहं कुर्यादित्यर्थः। अक्षतास्तिलकक्रियायां प्रशस्ताः। वरवध्वौ लाजैरवकिरन्ति कन्याः। परे स्त्रियां बहुत्वे प्रयुज्यन्ते। उक्तं चामरेण—आपः सुमनसो वर्षा अप्सरः सिकतासमाः। एते स्त्रियां बहुत्वे स्युरेकत्वेप्युत्तरत्रयम॥ इति। उत्तरत्रयस्यैकत्व उदाहरणानि—उर्वशी नामाप्सराः पुरूरवसं चकमे। एका च सिकता तैलदानेऽसमर्था खार्यप्यसमर्था। समां समां विजायत (५।२।१२) इति भगवान् सूत्रकारः। सुमनःशब्दो मालतीवचनस्त्वेकत्वे प्रयुज्यतेऽनवग्रहम्। आह च सुमना मालती जातिः। कुसुमवचनत्वेपि बहुत्वं व्यभिचरन्दृष्टः। वेश्या श्मशानसुमना इव वर्जनीयेति मृच्छकटिकायाम्। अघ्रासातां सुमनसाविति च काशिकायाम्। जलौकेत्याकारान्तं त्रिषु वचनेषु यथापेक्षम् प्रयुज्यते। जलौक इति सकारान्तं तु बहुवचने नियतम्। पांसुशब्दः प्रायेण बहुवचनान्तः। पांसवः कस्मात्। पादैः सूयन्ते। पन्नाः शेरत इति निरुक्ते (३।१२।१९) निर्वचनदर्शनात्। व्याख्येयगतो बहुत्वे प्रयुक्त इति तस्यायमनुवाद इति मा स्म भ्रमीः। समूढस्य पांसुर इति हि तत्र मूलम्। सक्तुरपि तादृशः। अत्र करम्भो दधिसक्तव इत्यमरोक्तिः

प्रमाणम् । धानाचूर्णं सक्तवः स्युरिति क्षीरोद्धृतं कोषान्तरं च। धानाशब्दोपि प्रायेण स्त्रियां बहुत्वे । तथा चामरः पठति—धाना भृष्टयवे स्त्रिय इति। वासोदशाऽऽविश्चापि स्त्रियां बहुत्वे प्रयुज्येते। आविरिति प्रसववेदनोच्यते। यथा च चरके ( शारीर० ८।३६ ॥ ) प्रयोगः—ततोऽनन्तरमावीनां प्रादुर्भाव इति ।

क्वचित्कर्तृकर्मणोर्बहुत्वे प्येकवचनान्तमाख्यातपदं प्रयुञ्जते व्यवहारकोविदाः । तद्यथा—चरः शरीरावयवाः स्वभावो धातवः क्रिया । लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन्परीक्ष्यते ॥ ( चरके सूत्र० २७।३३१ )। उभयत्र दशाहानि कुलस्यान्नं न भुज्यते । दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥ (मनौ ५।६१ इत्यस्यानन्तरं क्षेपकः)। आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ इति। तस्य राज्यं च कीर्तिश्च प्रतापश्चापि वर्धत इति श्रीरामायणे ( ४।२९।११ )। अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी गुणश्चानिर्दिष्ट इति भाष्ये ( १।२।२ )। सम्यग्विपाकवीर्याणि प्रभावश्चाप्युदाहृत इति चरके ( सूत्र० २६।६६॥ )। तयैव देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यात इति चोत्तरे रामचरिते । अत्रोदाहरणेषु नपुंसकमनपुंसकेनेति शासनातिक्रमोपि न दोषाय । व्यवहारेणाभ्यनुज्ञानात् ।

गतं लिङ्गसंख्याभ्याम् । धात्वधिकरणकं किञ्चिद्ब्रूमः । धातूनां सकर्मकाकर्मकत्वं तावन्न सुकरं प्रतिपत्तुम् । अयथाप्रतिपन्ने च तस्मिन्दुष्यति सर्वोपि वाक्यविन्यास इति तदिह किञ्चिद्विशदयामः । शल हुल पत्लृ गताविति धातुपाठः । पततिरयं गमेरर्थे प्रयुज्यते । अधोगमनाद्यर्थावगमनं तु प्रकरणात् । तथा च शिष्टप्रयोगाः—नेज्जिह्मायन्त्यो नरकं पतामेति खिलपाठः ( ऋ० १०।१०६ सूक्तस्यानन्तरम् )। यथा महान्तमध्वानमाशया पुरुषः पतन् । स निराशो निवर्तेत कर्मैतन्नस्तथोपमम् ॥ इति भारते ( शा० १०।११ )। दिशः पपात पत्त्रेण वेगानिष्कम्पकेतुना ( रघौ १५।८४ )। पपात पूर्वां जहतो विजिह्मतां...प्रसक्तसंपातपृथक्-

कृतान्पथ इति च किराते (४।१८)। आश्वीनानि शतं पतित्वेति च काशिकायाम् (५।२।१९)। यथा गमिः सकर्मकस्तथा पततिरपि। तथैव चोदाहृतम्। ऊर्ध्वगमने तु प्रायेणाकर्मकः। पक्षिणः खे पतन्ति। अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् इति कौटलीयेर्थशास्त्रे (२।३०)। अधोगमनेर्थेपि प्रायेण तथा। क्षते प्रहारा निपतन्त्यभीक्ष्णम्। ऊर्ध्वगमनेपि पततिः क्वचित्सकर्मको दृष्टः—उत्पपातोदङ्मुखः खमिति मेघदूते। हन्तुं कलहकारोसौ शब्दकारः पपात खम् इति च भट्टौ (५।१००)। इदं चात्रानुषङ्गिकमुच्यते—अनुपसृष्टोपि पततिरुड्डयनेर्थे बहुलं प्रयुज्यत इत्यभिव्यक्तं प्रागुदाहृतेषु। अत एव शत्रन्तः पतच्छब्दः पक्षिपर्यायतां गतः। तथा च किराते (६।१) प्रयोगः—परमः पुमानिव पतिं पतताम् इति।

वृषु सेचन इति सकर्मकः। कर्मणः प्रसिद्धेस्तु तन्नोच्यत इत्यकर्मको भवति। देवो वर्षति। जलमित्यनुक्तमपि गम्यते। अर्थगत्यर्थः शब्दप्रयोगः। स चेदर्थोऽन्तरेणापि शब्दं गम्यते नासौ प्रयुज्यते। अत एव जलमिति नोपादीयते। जलातिरिक्तं कर्म तु न न प्रयुज्यते। पार्थः शरान्वर्षति। क्वचित्तु प्रसिद्धमपि जलादिकं कर्म श्रूयत एव। तद्यथा—तेन नापो यथाकालं देवो वर्षतीति चरके (विमान० ३।२४)।

दिवादयोऽकर्मकाः। अल्पा एव तु सकर्मका इति कृतान्तः। तेष्वल्पेषु मध्ये पुष पुष्टाविति प्रायेण सकर्मको दृश्यते। तथा च कवीनां प्रयोगाः—सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् इति शाकुन्तले। पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणीति च कुमारे (१।२५)। वेदे खल्वपि—नार्यमणं पुष्यति नो सखायम् (ऋ० १०।११७।६) इति। परमयमपि क्वचिदकर्मक इत्यत्र पुष्यसिध्यौ नक्षत्रे (३।१।११६) इति सूत्रं लिङ्गम्। पुष्य इत्यधिकरणवृत्तिः। पुष्यन्त्यर्था अस्मिन्निति पुष्यो नक्षत्रम्। अन्यत्राप्यकर्मकत्वाङ्गीकारेण व्युत्पत्तिर्दृश्यते। पुष्यति जले पुष्करः पद्मम्। पुष्णाति धान्यादिकमिति जलादिकमपि। पुष्यति शब्दोत्र वाद्यमुखे चेति पुषः

कित् ( उणा० ४।४ ) इति सूत्रे नारायणः। चरके खल्वपि पुषिरकर्मको दृष्टः। स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः। रुद्ध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः॥ इति ( विमान० ३।२४ )। स्रोतसा च यथा स्वेन धातुः पुष्यति धातुत इति च तत्रैव ( चिकि० ८।३६ )। भट्टिरपि पुषिमकर्मकं प्रयुङ्क्ते। तद्यथा—अस्त्रीकोऽसावहं स्त्रीमान्। स पुष्यतितरां तव। पतिरित्यब्रवीत् ( ४।२९ )। देह इहापुष्यत्सुरामिषैः ( १७।३२ ) इति च। अत्र देहमपुष्य इति पाठान्तरम्। तत्र देहं पोषित-वानसि। अन्तर्भावितण्यर्थो द्रष्टव्य इति जयमङ्गला।

दिवादिषु येऽकर्मकास्त एव गणान्तरेऽनूदिताः सकर्मका भवन्ति। प्रीङ् प्रीताविति दिवादिष्वकर्मकः। तथा च कवीनां प्रयोगाः—तत्र सौध-गतः पश्यन्यमुनां चक्रवाकिनीम्। हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये॥ इति रघौ ( १५।३० )। येनैवास्मासु प्रीयते भगवान्भुवनगुरुर्भैरवाचार्य इति हर्षचरिते ( पृष्ठे १०२ )। प्रकाममप्रीयत यज्वनां प्रिय इति च माघे ( १।१७ )। परं प्रीणातीति प्रिय इति क्रैयादिकेन व्युत्पत्तिर्दर्शिता न तु दैवादिकेन। रुष रिष हिंसायां दिवादी अकर्मकौ। तावेव भ्वादी सकर्मकौ। 'मा वो रिषत् खनिता यस्मै चाहं खनामि वः' इति ( ऋ० १०। ९७।२० )। अत्र रिषत् इति दिवादि रिषेर्लुङ्। मा रिपत् हिंसां मा स्म प्रापदित्यर्थः। न वा उ एतन्म्रियसे न रिष्यसि इति शुक्लयजुः संहितायाम् ( २३।१६ )। एवं ह्यायुर्न रिष्यतीति वसिष्ठधर्मसूत्रे ( ६।१०॥ )। रुषिः क्रोधेपि वर्तते। क्रोधो नाम हिंसां प्रयुङ्क्ते। क्रोधमूला हि सा। नाक्रुद्ध्वा हिनस्तीति हिंसार्थः क्रोधार्थं संक्रान्तः। क्रोधार्थोपि रुष्यतिरकर्मकः। ततो ऽरुष्यदनर्दच्चेति भट्टौ (१०।४०)। मा मुहो मा रुषोऽधुनेति च (१५।१६)। तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यत इति मनुवचने ( ४।१७८ ) तु भौवादिकस्य रिषेः कर्मणि लटि रूपम्। मीङ् हिंसायामिति दिवादिर-कर्मकः। न तस्य लोमापि मीयत इत्युपनिषदि। स्थाणुं वर्छति गर्ते वा पात्यते प्रमीयते वेति च ब्राह्मणे। मीञ् क्र्यादिस्तु सकर्मकः। तद्यथा—न मा मिमेथ न जिहीड एषेति ऋग्वणे ( १०।३४।२ )। लौकिके साहित्ये

चास्य विरलः प्रयोग इति दुर्लभान्युदाहरणानि। लीङ् श्लेषण इति दिवादिरकर्मकः। आलीयतेऽस्मिन्नित्यालयः। ली श्लेषणे क्र्यादिः सकर्मकः। विलिनाति घृतम्। अत्रार्थेऽयं प्रायेण विपूर्वः। पुष्यतिरकर्मकोपि, पुष्णातिस्तु नित्यं सकर्मकः। रैपोषं पुष्णाति। क्लिश उपतापे दिवादिरकर्मकः। तथैव चार्थनिर्देशोभूत्। त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम् ( मनौ ८।१६६ )। अप्युपदेशग्रहणे नातिक्लिश्यते त्वः शिष्या ( मालविकायाम् ) इत्यत्र चाकर्मकः। श्नाविकरणस्तु सकर्मकः। यथा—क्लिश्नाति लब्धपरिपालनवृत्तिरेवेति शाकुन्तले। एवमाराध्यमानोपि क्लिश्नाति भुवनत्रयमिति च कुमारे ( २।४० )। क्षुभ संचलन इति भ्वादिषु दिवादिषु क्र्यादिषु च पठितः। सर्वत्राकर्मक एवेत्युक्तार्थापवादः। रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मन इति रघौ ( ४।२१ )। मन्थादिव क्षुभ्यति गाङ्गमम्भ इत्युत्तरे रामचरिते। प्राक्षुभन् कुलपर्वता इति भट्टौ ( १५।२५ )। नाक्षुभ्नाद्राक्षसो भ्रातुः शक्तिं चोदवृहद् गुरुम् इति च ( १७।९० ) क्रमेणोदाहरणानि।

गृधिलुभी उभावप्यकर्मकौ। काव्यनाटकादिषु तिङन्तो गृधिर्विरलं प्रयुक्तः, कृदन्तस्तु वहुलम्। गर्धः, गर्धनः, गृध्नुरित्यादयः कृत्प्रत्ययान्ताः प्रचुरं प्रयुज्यन्ते गृध्यतीत्यादयस्तु क्वचिदेवास्मदादीनामविषय इति मन्त्रदृशां चिरन्तनमुनीनां च प्रयोगा उदाह्रियन्ते। यस्यागृधद्वेदने वाज्यक्षः (ऋ० १०।३४।४)। मा गृधः कस्य स्विद् धनम् ( यजुः ) इति। अत्रैकं वाक्यमिति मा स्म ते भ्रमो भूत्। मा गृधः, लुब्धो मा भूः। इत्येकं वाक्यम्। धनं कस्य स्वित् इति चापरम्। तत्रैव श्रुतेः स्वरसः। स्विदित्यनर्थको निपातः प्रश्नार्थको वा। भारते खल्वपि गृधिरकर्मको दृष्टः। तद्यथा—परवित्तेषु गृध्यतः ( उद्योग० ७२।१८ )। तस्य गृध्यन्ति राजानः शूरा धर्मार्थकोविदाः ( भीष्म० ९।७२ )। आमिषे गृध्यमानानामशुभं वै शुनामिव ( शा० ७।१० ) इति। लुभिरप्यकर्मकत्वे नियत इति मुक्तसंशयमुपलभस्व। असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय इत्यत्र यथा।

केचन धातवो धातुपाठे स्पष्टमकर्मकाः पठिताः। अर्थनिर्देशो हि तथालक्षणोऽभूत्। तथापि लोके सकर्मका अपि ते दृष्टाः। त एते भवन्ति—श्च्युतिर् क्षरणे, दु द्रु गतौ, स्रु गतौ, क्षर संचलने, स्यन्दू प्रस्रवण इति। पटलं श्च्योताति। एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि ( उ० रा० च० ३।३४ )॥ अत्र श्च्युतिरकर्मकः। लोचनेनामृतश्च्युता ( कथास० १०१।२०४ ) इत्यत्र च सकर्मकः। अग्न्यातपसम्प्रयोगाद् द्रवति घृतमित्यत्र द्रवतिरकर्मकः। रक्षांसि भीतानि दिशो द्रवन्तीत्यत्र गीतासु तु सकर्मकः। अवस्रवेदघशंसोऽवतरमित्यत्र ( ऋ० १।१२९।६ ) स्रवतिरकर्मकः। स्रवत्यनोङ्कृतं पूर्वं पश्चात्तु विशीर्यत इति मनुवचने ( २।७४ ), धनाद्धि धर्मः स्रवति शैलादधि नदी यथेत्यत्र, नहि निम्बात्स्रवेत्क्षौद्रम् ( रा० २।३५।१७ ) इत्यत्र चाकर्मकः। स्वरेण तस्यासमृतस्रुतेव प्रजल्पितायामभिजातवाचि इति कुमारे ( १।४५ ) कुञ्जरेण स्रवता मदम् इति कथासरित्सागरे। नहि मलयचन्दनतरुः परशुप्रहतः स्रवेत् पूयम् इति ( ) च सकर्मकः। तपः क्षरति विस्मयाद् इत्यत्र ( मनौ ४।२३७ ), तेनास्य क्षरति प्रज्ञेत्यत्र ( मनौ २।९९ ॥ )च क्षरतिरकर्मकः। आपश्चिदस्मै घृतमित्क्षरन्ति ( अथर्व० ७।१८।२ ) तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ( मनौ २।१०७ )। यो येनार्थी तस्य तत्प्रक्षरन्ती वाङ्मूर्तिर्मे देवता संनिधत्ताम् इत्यत्र ( बा० रा० १।१४ ) च सकर्मकः। स्यन्दन्ते सरितः सागराय न च सर्वाः समुद्रगा भवन्ति। तीव्रं स्यन्दिष्यते मेघैः ( भट्टौ १६।७ ) मत्स्या उदके स्यन्दन्ते। शिरामुखैः स्यन्दत एव रक्तम् ( नागानन्दे ५।१६ ) इत्यत्र स्यन्दतिरकर्मकः। सस्यन्दे शोणितं व्योम इत्यत्र ( भट्टौ १४।९८ ) च सकर्मकः। अत्र सर्वत्र सकर्मकत्वमन्तर्भावितण्यर्थत्वादुपपादयन्ति। एवं शुच शोक इत्यनुपसृष्टः केवलोपि सकर्मको दृष्टोऽकर्मकश्च। तद्यथा—अथैनमद्रेस्तनया शुशोच ( रघौ ३।२७ )। किं शोचतेहाभ्युदये बतास्मान् ( भट्टौ ३।१२ ) इत्यत्र शोचतिः सकर्मकः। शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलमित्यत्र मनौ ( ३।५७ ) चाकर्मकः। सोपसर्गकस्तु नैयत्येन

सकर्मकः*। अशोच्यानन्वशोचस्त्वमित्यत्र गीतासु यथा ।

अन्तर्णीत क्रियान्तरा अकर्मिका अपि क्रियाः सकर्मिका भवन्ति । तद्यथा—भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ( रघौ १२।१०४ ) । अत्र प्रस्थानक्रियाया अकर्मकत्वेपि तदङ्गभूतोद्दिशिक्रियापेक्षया सकर्मकत्वम् । अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम् । यथा कुसूलान्पचतीत्यत्रादानगर्भः पाकोऽभिधीयत इति मल्लिनाथः । एवं रोदिम्यनाथमात्मानं बन्धुना रहितस्त्वयेति ( १८।३० ) भट्टिप्रयोगे रुदेरकर्मकत्वेपि तदङ्गभूतज्ञानक्रियापेक्षया सकर्मकत्वम् ।

क्वचिद् धात्वर्थनिर्देशो विभ्रमकोऽभूदित्यवश्यप्रतिपत्तव्यम् । गृधु अभिकाङ्क्षायामिति दिवादिरकर्मक इति दर्शितचरम् । अर्थनिर्देशस्तु सकर्मकोऽयमिति विभ्रमयति । धनं गृध्यत्यभिकाङ्क्षतीति प्रयोगप्रसङ्गात् । एवं कृश तनुकरण इत्यर्थनिर्देशानुरोधात्सकर्मकः प्रतीयते । भवति चायं प्रायेणाकर्मक इतीहैवानुपदं व्यक्तं भविष्यति । सप्त मेधान्पशवः पर्यग्टह्वन् स एषां ज्योतिष्माँ उत यश्चकर्शं इत्याथर्वणिकाः ( अथर्व० १२।३।१६ ) । तस्मादितर आत्मा मेद्यति च कृश्यति चेति ब्राह्मणम् ( ताण्ड्य० ५।१।७ ) । अत्रोभयत्राकर्मकता विस्पष्टा । अतएव लोके वृत्तिकर्शित इत्यादिषु सकर्मकत्वलाभाय णिच् प्रयुज्यते । कृश्यति तनूकरोत्याधारमिति कृशानुरित्यत्र त्वन्तर्भावितण्यर्थः कृश्यतिर्द्रष्टव्यः ।

तृप प्रीणने, तृप प्रीणन इत्येके । पूर्वो दिवादिरुत्तरस्तु स्वादिः । उभावप्यकर्मकौ । अर्थनिर्देशस्तु पूर्ववद् व्यामोहकः । प्रीणनमिति तृप्तिर्ग्राह्या न तु तर्पणमपि । पितॄनताप्सीत् इति भट्टि प्रयोगस्तु चिन्त्यः । अन्यत्रापि भट्टौ क्लिशादिधातुविषये सकर्मकाकर्मकत्वसंकरो दृष्टः† ।

---

* धातूनामुपसर्गवशात्सकर्मकत्वाकर्मकत्वे इति विषयोऽस्माभिरुपसर्गार्थचन्द्रिकायां विस्तरतो निरूपितः । स तत्रैव द्रष्टव्यः । † नृपात्मजौ चिक्लिशतुः ससीतौ ( ३।३१ ) इत्यत्र यथा ।

यद्यपि सर्वे नवगण्यां पठिता धातवः स्वार्थे णिचं लभन्ते इति वैयाकरणाः, तथापि पूञ् पवने, ओहाक् त्यागे इति णिच्सहितौ प्राकृतेर्थे प्रयोगमवतरतः प्रायेण। पावयतेः प्रयोगो यथा—यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वय इति कुमारे (५।३७)। 'वैतानास्त्वां वह्नयः पावयन्तु' इति शाकुन्तले (४।७)। अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैरिति मनौ (३।१८३)। हापयतेः खल्वपि—पञ्चैतान्यो महायज्ञान्न हापयति शक्तित इति मनौ (३।७१)। नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् इति च (४।२१)। नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेदिति (याज्ञ० १।१२१)। द्रुतमेतु न हापयिष्यते सदृशं तस्य विधातुमुत्तरमिति च माघे (१६।३३)।

यदुद्गिरन्ति प्रामाणिका विवक्षातः कारकाणि भवन्तीति तत्र विमृश्यते केयं विवक्षा नामेति यामनुरुन्धन्ति कारकाणि। वक्तुरिच्छा विवक्षेति चेद्यथा यस्मै रोचेत तथैव स प्रयुञ्जीतेति प्रसङ्गः। नेत्याह। लौकिकी हि विवक्षा प्रभवति न प्रायोक्त्रीति। लोकश्चात्र शिष्टलोक एवाभिप्रेतो वाचि प्रमाणभूतः सर्वस्यावधेयवचनः। अन्यथा सर्वमिदमाकुलं स्याद्वाङ्मयम्। सङ्कीर्येरन्प्रयोगा न व्यवतिष्ठेरन्निति महाननर्थ उपनतः स्यात्। इमां कारकविषयिणीं विवक्षामधिकृत्य किञ्चिद्विन्यस्यामो विदुषां विनोदाय। बीजादङ्कुरो जायत इत्यत्र बीजं जायमानस्य प्रकृतिरित्यर्थपरिग्रहेण तस्यापादानतां विवक्षामः। बीजमङ्कुरो जायत इत्यत्र परिणामधर्मपुरस्कारेण भेदापोहेन प्रकृतित्वतिरस्कारेण च तस्यैव कर्तृतामिति सर्वत्र व्यवहारे बुद्धिरेव प्रभवति। यदाऽविवक्षितभेदं जननव्यापारमभिप्रेमस्तदा मातरपितरौ पुत्त्रं जनयत इति मातुः पितुश्चोभयोरपि कर्तृत्वम्। यदा कः कथं जनयतीति भेदो विवक्ष्यते तदाऽयं पिताऽस्यां मातरि बीजमाधत्ते पतति वा बीजमस्मादस्यामिति पितुः कर्तृत्वमपादानत्वं च। पतद्बीजधारणक्रियां कुर्वती माता त्वधिकरणमेव। तथा च शिष्टप्रयोगाः प्रथन्ते—ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते (मनु० १०।८)। द्विजातयः सवर्णास्तु जनयन्त्यव्रतांस्तु यान् इति च (मनु० १०।२०)। सा भूधराणामधिपेन तस्यां समाधि-

मत्यामुदपादि भव्येति कुमारे (१।२२)। सुदक्षिणायां तनयं ययाच इति रघौ। अत्र जनिक्रिया भविष्यन्ती गम्या। माऽऽत्मनः सन्ततिं द्राक्षीत्स्वेषु दारेषु दुःखित इति रामायणे भरतशपथेषु। तज्जायाया जायात्वं यदस्यां जायते पुनरिति ब्राह्मणकृताऽधिकरणे व्युत्पत्तिरपि रूढिगतायां विवक्षायां लिङ्गम्। कर्त्रादीनि लोके प्रतिनियतविषयाणि न क्वचिदवलोक्यन्ते। अचेतनेष्वपि रथो याति नदी वहतीत्यादिषु कत्रभिलापो यतः। सर्वत्र प्राधान्यमगुणाभावो वाऽस्त्येव। विवक्ष्यते हि सः।

यथानिरूपणं शब्दप्रयोग इति शाब्दिकाः। विवक्षा हि प्रयोक्तॄणां यथा यथा प्रवर्तते तथा तथा परिवर्तन्ते कारकाणीत्युक्तप्रायमपि पुरस्तादिह पल्लवयामो भूयो वैशद्याय। तद् गच्छति पथिदूतयोः (४।३।८५)। अत्र तत्स्थेषु गच्छत्सु पन्था गच्छतीत्युच्यते। पन्था हि तत्र मुक्तसंशयमधिकरणम्। तथापि तत्र लौकिकी विवक्षा प्रभवति येन सदप्यधिकरणत्वं न विवक्ष्यतेऽसच्च कर्तृत्वं विवक्ष्यते। एवमन्यत्रापि सतोऽविवक्षा दृश्यते। अलोमिकैडकाऽनुदरा कन्येति। अत्र लोमानि न सन्तीति न, उदरमेव वा नास्तीति न। असंभवात्। तथापि तत्सत्ता न विवक्ष्यत इति नञा प्रतिषिध्यते। अभिनिष्क्रामति द्वारम् (४।३।८६)। द्वारमभिनिष्क्रमणक्रियायां करणं प्रसिद्धं तदिह स्वातन्त्र्येण विवक्ष्यते। दाणश्च सा चेच्चतुर्थ्यर्थे (१।३।५५)। सम्प्रपूर्वाद् दाण आत्मनेपदं भवति यदा तस्य चतुर्थ्यर्थे तृतीयया श्रूयते योगः। कदा च चतुर्थ्यर्थे तृतीयायाः प्रयोगः। यदा सम्प्रदानं साधकतमत्वेन विवक्ष्यते, विवक्षातः कारकाणि भवन्तीति कृत्वा, न पुनः स्वभावतः। विवक्षा च लौकिकी समाश्रीयते न प्रायोगिकी। दिवः कर्म च (१।४।४३)। करणे कर्मविवक्षा करणविवक्षा च। इदमाकूतं स्यात्प्रयोक्तुः शिष्टस्य। यो ह्यक्षैर्विजिगीषतेऽक्षानप्यसौ विजिगीषते। अविजिता अक्षाः कथं देवने जयाय कल्पेरन्निति स तर्कयते। कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा। इदं दानार्थं यजिमधिकृत्य वाक्यकारेणोक्तम्। पशुना रुद्रं यजते। अयं भावः। अत्र पूजातात्पर्यकं दानमिति दीयमानेन पशुनाऽभिपूजयामि रुद्रमित्यभिप्रैति

यजमानः। तेन सत्यपि दानक्रिया निगीर्यते पूजनेनाध्यारोपितेन। ततश्च कारकविपर्ययः सिद्धो भवत्यवाचनिकः। इयद्धि प्राभवत्यं विवक्षाया बुद्धिनिबन्धनायाः। अधिशीङ्स्थासां कर्म (१।४।४६), अभिनिविशश्च (१।४।४७) इत्यादिषु विवक्षां हेतूकृत्याधिकरणस्य कर्मसंज्ञाविधानं दृश्यते। विशतेस्तु निरुपसर्गस्योपसर्गान्तरसहचरितस्य च प्रयोग उभयी विवक्षा दृश्यते। मधुनि विशन्ति मधुकराः। ग्रामं प्रविशतीति। जटाधरः सञ्जुहुधीह पावकम् इत्यत्र किराते (१।४४) प्यधिकरणे कर्मत्वोपचारः। करणभावश्चापि दृश्यते। अग्निष्टोमेन यजेत स्वर्गकामः। अग्निष्टोमाख्येन यागेन स्वर्गं भावयेदित्यर्थः। अग्निष्टोमः स्वर्गभावनायां करणं भवति। यद्यप्यसौ स्वर्गभावनां प्रति साध्यत्वेनेप्सिततमत्वादनुष्ठीयमानः कर्मत्वमनुभवति तथापि तस्य शक्तिभेदात्करणत्वं न विरुध्यते। यथा निपीयमानेन मधुना मत्त इत्यत्र कर्मत्वमनुभवतो मधुनः करणभावो भवति। अत्र व्यवहारे करणे यजः (३।२।८५) इति सूत्रं लिङ्गम्। क्वचिद् गृहीत इव केशेषु मृत्युना धर्ममाचरेत्, आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यत इत्यादिषु करणेऽधिकरणत्वं विवक्षन्ति लौकिकाः। तत्र तेनेदमिति सरूपे (२।२।२७) इति तत्र शास्त्रीयं लिङ्गम्। कर्मणोपि कर्तृभावो दृष्टः। कर्मवत्कर्मणा तुल्यक्रियः (३।१।८७) इत्यत्र तत्प्रतिपत्तेः। क्वचित्कर्मणोऽधिकरणविवक्षा यथा—ऋषिप्रभावान्मयि नान्तकोपि प्रभुः प्रहर्तुं किमुतान्यहिंस्रा इति रघौ (२।६२)। आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसीति शाकुन्तले। यदा चावयवि प्रहरतेः कर्म भवति तदाऽवयवोधिकरणमिति विवक्ष्यते। इन्द्रजिल्लक्ष्मणमुरसि प्रजहार। अन्यत्रापादानेप्यधिकरणत्वविवक्षा यथा बलाहके विद्योतते विद्युत्। बलाहकस्यापाययुक्तत्वादपादानसंज्ञा प्राप्नोति। अपादानमुत्तराणीति वार्तिकमत्र लिङ्गम्। क्वचित्सम्प्रदानधियमपोह्याधिकरणमुत्प्रेक्षन्ते कुशलाः प्रयोक्तारः। यद्यथा

न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा।
सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥

इति कामन्दकः। सममब्राह्मणे दानमिति च मनुः। दरिद्रान्भर

कौन्तेय मा प्रयच्छेश्वरे धनमिति भारते। वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जड इत्युत्तरे रामचरिते। सर्वत्र चामीषु प्रयोगेषु तदस्मिन्वृद्ध्याय-लाभशुल्कोपदा दीयते ( ५।१।४७ ) इति वचः प्रमाणम्।

लभेर्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे दृश्येते, ते अपि विवक्षयैव व्यवतिष्ठेते। प्रयोज्यकर्तुः कर्मत्वं यथा—इदमौपहारिकमार्यमाणवकं लम्भय। तदभावो यथा—सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् इति। प्राप्तिरेव लभेरर्थः। तथापि सर्वा प्राप्तिर्गतिपूर्विकैवेति प्राप्तिगत्योः कार्यकारणयोरभेदोपचारः। गतिश्च क्वचित्प्रत्यक्षा क्वचिन्मानसी। तत्र विवक्षावशाल्लभिः क्वचित्प्राप्त्युपसर्जनां गतिमाह क्वचिद्गत्युपसर्जनां प्राप्तिम्। आर्यमाणवक औपहारिकं लभते। अत्र आर्यमाणवके औपहारिक-संक्रान्तिः प्रत्यक्षा। इह स्पष्टमेव गतिः प्रधानम्। मुख्यां गतिमन्तरेण लब्धेरयोगात्। द्वितीये तूदाहरणे बौद्ध्येव गतिरनुमेया न प्रत्यक्षेति प्राप्तिरेव प्रधानम्। न हि सितिमा मुनेर्वपुरुपैतीति शक्यते मुख्यया वृत्त्या वक्तुम्। व्यपदेशिवद्भावेन तूपपद्यते प्रयोगः।

क्वचिदभिव्यक्ततरमप्यपादानत्वमुपेक्ष्य कारकान्तरं विवक्षन्ति सन्तः। देवदत्तः प्राणान्मुमोच। देवदत्तः प्राणैर्मुमुचे। इह देवदत्तस्य प्राणैः समं वियोग इति नितान्तमुत्तानम्। वियोगश्चोभयनिष्ठ इति वियोक्तारं वियुज्यमानं चार्थं समं निश्रयते। इदं च नितरां विवक्षानिघ्नं तयोः कतरस्यावधिभावः कल्प्येतेति। यदि नाम प्राणा ध्रुवोऽर्थोऽवधिरिति वा कल्प्येरंस्तदा देवदत्तस्य वियोक्तृता वियोगे कर्तृताऽर्थादापद्यते। तेन प्राणशब्दात्पञ्चम्या भवितव्यम्। परं मुच्लृ मोक्षण इत्ययं धातुः सकर्मकः। तत्प्रयोगे कर्माकाङ्क्षितं भवति। अपादानमुत्तराणि कारकाणि बाधन्त इति वचनादपादानत्वं प्रबाध्य कर्मविवक्षायां प्राणानिति द्वितीया। अथ देवदत्तोऽवधिरित्यभ्युपेयते तदोक्तरीत्या तस्यापादानतां प्रबाध्य मुञ्चतेः कर्मत्वेन तत्रोक्ते कर्मणि प्रथमा। प्राणैरिति चानुक्ते कर्तरि तृतीया सूपपन्नेति सर्वमवदातम्। मुचेः कर्मकर्तरि प्रयोगे तु प्राणादेरपादानत्वम-विहतं तिष्ठति। यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति गीतासु। मुच्यते सर्वं-

पापेभ्य इति चानेकत्र पुराणे। मोक्ष्यसे स्वयमेव मुक्तो भविष्यसीत्यर्थः। कस्मादित्याकाङ्क्षायामाह—अशुभात्। अत्रापादानबाधप्रसङ्ग एव नास्तीति न दुरवधारं सुधीभिः। स प्राणान्मुमोच, तम्प्राणा मुमुचुरिति वाक्यद्वयमभिप्रायभेदेनादौ प्रयुयुजिरे विवेक्तारो वक्तारः, कालान्तरे तु समानार्थकमेतदिति साङ्कर्येणेत्यवकल्पयामः। अत्र शास्त्रपारावारपारीणाः प्रमाणमिति नातोतिरिक्तं सहामहे वक्तुम्। विवक्षया कर्तृकर्मादिव्यवहारः सर्वं इति प्रसाधितं पुरस्तान्निदर्शिताश्च ते ते प्रदेशा यथाविवक्षमुपप्लवमानानां कारकाणाम्। तथापीदमत्रावधेयम्। नहि प्रयोक्त्रा निरवग्रहं यथा तथा शक्यं विवक्षितुम्। नेह तस्य स्वच्छन्दः प्रवर्तते। विवक्षा हि कुलवधूरिव न लौकिकीं प्रयोगमर्यादामतिक्रामति। विवक्षायाश्च नियतत्वात्सत्यप्यपाये धनुषा विध्यतीति भवति, न धनुषो विध्यतीति। व्यधनक्रियायां धनुष्करणं न, अपि तु निःसरतां शराणामेव करणत्वमिति प्रथमवैयाकरणाना*मपि न न विदितम्। तथापि परमार्थं निरूपयंस्तथा च प्रयुञ्जानो लोके द्वेष्यतां याति। कांसपात्र्यां भुङ्क्त इत्येव प्रयोगो न तु कंसपात्र्या इति। कंसपात्र्या उद्धृत्यैव त्वोदनं भुङ्क्ते। तेन तस्या अपादानता सिद्धा। तामविवक्षित्वाऽधिकरणतैवाभ्युपेयते। अपादानविवक्षया पञ्चमीं प्रयुञ्जानो वाढं भवत्यपशब्दभाक्। अन्यत्रापि विवक्षानैयत्यं दृश्यते। गतिवचनानां धातूनां प्रयोगे यानस्य करणत्वमेव विवक्ष्यते न जातुचिदधिकरणत्वम्। रथेन यातीत्युच्यते न तु रथे यातीति। यद्यपि रथोधिकरणशक्तिरिति नापह्नूयते। यानशब्दो हि करणसाधनः। अपरे यानपर्यायवाचिनोपि करणतां न जहति। तथा चात्मनः पदं विमानेन विगाहमानः (१३।१॥) इति रघुकारस्य प्रयोगः। अष्टाध्याय्यां तत्र तत्र तल्लिङ्गोपलम्भ इमां प्रयोगपद्धतिं समर्थयते। वह्यं करणम् (३।१।१०२)।

---

* अचिरोपसम्पन्नोऽचिरादेव गुरुमुपश्लिष्टो वैयाकरणो व्याकरणस्याध्येता प्रथमवैयाकरणः। अत्रार्थे प्रथमोऽचिरोपसम्पत्तौ ( ६।२।५६ ) इति स्वरसूत्रं मानम्।

वहत्यनेनेति वह्यं वाहनम्। करणे यत्प्रत्ययान्तं निपात्यते। दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे (३।२।१८२) इत्यनेन च पत्लृधातोः करणे ष्ट्रणा पत्त्रमिति व्युत्पाद्यते। पतति गच्छत्यनेनेति पत्त्रं वाहनम्। यानमात्रस्य करणत्वमैकान्तिकमित्यत्र चरति (४।४।८) इति शास्त्रमपि द्रढीयो मानम्। हस्तिना चरति हास्तिकः। शकटेन चरति शाकटिकः। यो गत्यर्थधातूनधिकृत्योक्तो नियामस्तस्य वह्यादयो धात्वादयश्च गमनीया भवन्ति। किं च न केवलं मुख्यं यानमपि तूपचरितयानभावा अपि भावा करणत्वेन व्यवह्रियन्ते न च व्यभिचारं सहन्ते। स्कन्धेन भारं वहतीत्यत्र स्कन्धे यानत्वाध्यारोपेण करणत्वमेवाभिप्रयन्ति न कदाचिदधिकरणत्वम्। तेन स्कन्धे भारं वहतीत्यपप्रयोगः। अत्रार्थे कवीनां प्रयोगा उपोद्बलकाः केचिन्निदर्श्यन्ते। वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः। इति पञ्चतन्त्रे। शरत्तारागणतारं हारमुरसा दधानम् इति हर्षचरिते (पृ० ११४)। प्रश्रयमिवानम्रेण मौलिना पाण्डुरमुष्णीषमुद्वहतेति च (पृ० ६२)। गामधास्यत्कथं नागो मृणालमृदुभिः फणैरिति कुमारे (६।६८॥)। सर्वपुष्पमयीं दिव्यां शिरसा धारयन्स्रजम् इति श्रीरामायणे (६।२२।१६)। दधुः शिरोभिर्भूपाला देवाः पौरंदरीमिवेति रघौ (१७।७६)। धार्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता। जातीकटुकपूगानां लवङ्गस्य फलानि च॥ इति चरके (सूत्र० ५।७६)। मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बालेति कुमारे (१।३६॥)। गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् (१।२१॥) इति किराते। योद्धारोऽबिभरुः शान्त्यै साक्षतं वारि मूर्धभिरिति भट्टौ (१७।५२)। तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे इति च कुमारे (३।२२॥)। अत्रोदाहरणेषु गति र्वा प्रापणं वा नार्थो येन करणस्यावकाशः स्यात्। धारणमेव तु सर्वत्राभिप्रेयते। तेनाधिकरणत्वं प्राप्नोति। करणं चेह नितान्तमसत्। अधिकरणं च परमार्थसत्। तथापि करणत्वमेव विवक्षन्ति शिष्टा इति न बह्वन्वाख्येयम्।

अन्यत्रापि विवक्षानियमो दृश्यते। रश्मिषित्रवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिमिति रघौ (२।२८)। गृहीत इव केशेषु मृत्युना धर्ममाचरेत् इति हितोपदेशे, केशेषु जग्राह याज्ञसेनीं दुःशासनः, शिरस्युपजिघ्रत्यम्बा डिम्भम्, कण्ठे गृह्णाति प्रियां कान्त इत्यत्र रश्मीनां केशशिरः कण्ठस्य चाधिकरणता लोके नियता। अन्यथा सम्भाव्य विभक्त्यन्तरं प्रयुञ्जानो जनो भ्रंशते व्यवहारवर्तन्या अक्षिगतश्च लोकस्य भवति। तेन यथात्र लोके समुदाचारो रक्षणीयः, श्रौती स्मार्ती वा व्यवस्थितिरास्थेया तथा वाङ्मयेपि लोकप्रतिष्ठितः शिष्टजुष्टो व्यवहारः सततं शीलनीयः साभिनिवेशं चानुसर्तव्यः।

धातूनामर्थान्तरसङ्क्रमादपि व्यतियन्ति कारकाणि। यथा सिञ्चतेः क्षरणेर्थे द्रवद्रव्यस्य कर्मत्वमार्द्रीकरणे च करणत्वम्। यथा मेघोऽमृतं सिञ्चति। सिञ्चतीवामृतैर्वपुरिति। एवं ददातिकर्मणा सम्बद्धस्य न सर्वत्र सम्प्रदानता। न हि ददातिः सर्वत्र परस्वत्वापादपूर्वके द्रव्यत्यागे वर्तते। दीयन्तां पक्षद्वाराणि (विद्धशालभञ्जिकायाम्), कवाटं देहीत्यत्र च पिधानेपि दृश्यते। ते गृहे ऽग्निमददुः। घ्नतः पृष्ठं ददाति। पूर्वत्र वाक्ये गृहस्य सम्प्रदानत्वं न। ददातिरिह निक्षेपे वर्तते, तस्य चाधिकरणापेक्षा। अपरत्र हननं कुर्वतोपि तन्न। ददातिरत्र सन्निधापने वर्तते। तत्सम्बन्धापेक्षया घ्नत इति षष्ठी साध्वी। शकि शङ्कायामिति भ्वादिषु पठ्यते। शङ्का च भयम्। तेनाधर्माच्छङ्कते साधुरित्यपादानताऽधर्मस्य सिद्धा। स एवाङ् पूर्व उत्प्रेक्षायां वर्तते। तत्र कर्मत्वमेवेष्यते। यथा धर्मेप्यधर्ममाशङ्कते मूढः। सन्नन्तो गुपिर्निन्दायां पठ्यते। स यदा निन्दापूर्विकायां निवृत्तौ विवक्ष्यते तदा पापाज्जुगुप्सत इत्यपादानता निर्बाधा। यदा तु केवलायां निन्दायां प्रयुक्तिस्तदा कर्मत्वमेवानवद्यं शिष्टजुष्टं प्रसिध्यति। यथा—किं त्वं मामजुगुप्सिष्ठा इति भट्टौ (१५।१९)। जुगुप्सेरन्न चाप्येनमिति याज्ञवल्क्यस्मृतौ (३।२९६)। स्वर्गस्त्रीपूर्वनिर्माणं निजमेवाजुगुप्सतेति कथासरित्सागरे द्वितीये वेताले। जनापवादमात्रेण न जुगुप्सेत चात्मनीति काव्यमीमांसायां कविरहस्ये दशमेऽध्याये। अत्र निन्दाविषयविवक्षया

कर्मत्वबाधेनात्मनीति वैषयिकी सप्तमी। यद्वा तद्वा भवतु। भार्गवस्तादृशानि तु वीररत्नानि न जात्या जुगुप्सत इति बालरामायणे द्वितीयेङ्के। प्रपूर्वो हरतिराहनने वर्तते। यदा चायं प्रासनेऽभिप्रेयते तदेन्द्रो वृत्राय वज्रं प्राहरत् इति ताण्ड्यब्राह्मणप्रयोगे क्रियया यमभिप्रैति सोपि सम्प्रदानमिति वचनेनेन्द्रस्य सम्प्रदानता सूपपादा। क्रियार्थोपपदस्य च कर्मणि स्थानिन इति वा विभक्तिः समर्थनीया। यजतिर्देवपूजासंगतिकरणदानेषु पठितः। देवान्यजते। यज्ञाहरणेपि वर्तते। अश्वमेधेन यजते। तत्र विशेषाकाङ्क्षायामश्वमेधे द्रव्यबुद्धिं विधाय करणत्वेन तत्परिग्रहो व्याख्येयः। अश्वमेधबुद्ध्या द्वारीभूतयेति वा नेयम्। जयतिः परोपसृष्टोऽभिभवे वर्तते। तथा चारीन्पराजयत इत्यादौ कर्मकारकमुपपद्यते। यदा चासहने प्रयुज्यते तदाऽसोढोऽर्थोऽपादानम्। अध्ययनात् पराजयते प्रमत्तश्छात्रः।

अर्पयतिप्रयोगे कारकनानात्वं दृश्यते तदपि तत्तदर्थविवक्षयोपपाद्यं भवति। त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये इत्यर्पयतिर्ददात्यर्थे प्रयुक्त इति युज्यते युष्मदः सम्प्रदानत्वम्। अर्पयतिर्नाम कथमिममर्थमर्पयतीति तावद् विमृश्यम्। ऋ गतिप्रापणयोरिति धातुर्णिचसहकारेण प्रापणमर्थमाचष्टे, केवलस्तु गतिं वा प्राप्तिं वा। धातुपाठे गतिप्रापणयोरित्यर्थनिर्देशे प्रापणमिति प्राक्तेर्थे वर्तमानाद् आप्लृ व्याप्ताविति धातोर्ल्युटि रूपं न तु हेतुमण्ण्यन्तस्य। अर्तेर्हेतुमति णिचि प्रापणं नयनमर्थः। यश्चार्थः परत्र संक्रम्यते परं प्राप्यते स परस्मै सम्प्रदीयत इवेत्यर्थविवक्षया चतुर्थ्यौपयिक्येव। तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चनेति कठोपनिषदि। सिंहो मतिविभ्रममिवार्पितो न किञ्चिदप्युदाहृतवान् इति तन्त्राख्यायिकायाम्। अत्रार्पितशब्दो मुख्यया वृत्त्या गमितार्थाभिधायीति गत्यर्थत्वादणि कर्तुः णौ कर्मत्वम्। तच्च प्रयोज्यं कर्म क्तेनोक्तमिति देवशब्दात् सिंहशब्दाच्च प्रथमा। तच्छब्दान्मतिविभ्रमशब्दाच्चानुक्ते कर्मणि द्वितीया। दानार्थविवक्षाविरहान्नेह चतुर्थी। कचित्सप्तम्यपि दृश्यते। अवगच्छति मूढचेतनः प्रियानाशं हृदि शल्यमर्पितम्। इति रघौ (८।८८)। अपथे पदमर्पयन्ति हीति च

(९।७४)। सीतामर्पय नन्तव्ये कोशदण्डात्मभूमिभिरिति च भट्टौ(९।१२६)। अर्पयित्वेश्वरे प्रह्वः प्रमना विरमाम्यहम् इति चान्यत्र। ईश्वरप्रणिधानं तस्मिन्परमगुरौ सर्वकर्मार्पणम् इति योगभाष्ये। अत्रेयं सप्तम्युपपत्तिः। यद्धि यं प्राप्यते द्रव्यं तत्तदन्तिकं प्राप्यते तत्संनिकर्षं संनिधाप्यत इवेत्यर्थविवक्षायां सामीपिकेऽधिकरणे सप्तम्यपि साम्प्रतम्। न्यासार्थविवक्षायां शुद्धेधिकरणेपि सा दृश्यते। काठिन्यं स्थाविरे काये भवता सर्वमर्पितम् इति कुमारे (६।७३)। क्वचिदन्यत्र तृतीयाऽपि विलोक्यते। तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया। निभित्तवेधी स मुनिरिषीकाभिः समार्पयत्॥ इति भारते (उद्योग० ९६।३१)। अत्र समार्पयदित्यस्य समगमयदित्यर्थग्रहादिषीकाभिरित्यत्र सहार्थे तृतीयोपपन्नैव। विनाऽपि सम् केवलस्याप्यर्पयतेः प्रयोगे सहार्थे तृतीया दृश्यते। तद्यथा—स शरैरर्पितः क्रुद्धः सर्वगात्रेषु राघव इति (रा० ३।२८।१९)। द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् इति च (रा० ४।१।८)। पुष्पैर्युक्तमित्यर्थः। भारतेपि नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्पयत् इति (कर्ण० ४८।३४)। कारकत्वाविवक्षायां तु षष्ठ्यपि दृश्यते—मातः, मार्गेलग्नं कस्य समर्पयामि गृहमयूरकम् इति श्रीहर्षचरिते (पृष्ठे १६४)।

इदं चान्यदप्येतज्जातीयकं परीक्ष्यमाणं भूयसे विनोदाय भविष्यति विदाम्। पद गताविति धातोः प्रतिपूर्वस्य ण्यधिकस्य प्रयोगेपि विभक्तिवैचित्र्यं दृश्यत आकूतकरम्। हेतौ प्रतिपादयतेः प्रापणमर्थो मुख्यया वृत्त्येति गत्यर्थत्वादणि कर्तुः कर्मत्वे ब्राह्मणानिति वक्ष्यमाणपद्ये कर्मणि द्वितीया नापूर्वा। सर्वरत्नानि राजा यथार्हं प्रतिपादयेत्। ब्राह्मणान् वेदविदुषो यज्ञार्थं चैव दक्षिणाम्॥ इति (मनौ० ११।४)। अयशो जीवलोके च त्वयाऽहं प्रतिपादित इति (रा० २।७४।६)। अत्र क्तेनोक्ते कर्मणि प्रथमा। एतां मालां च तारां च कपिराज्यं च शाश्वतम्। सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः॥ इति च (रा० ६।२८।३२)। अत्रापि पूर्ववत्कर्मणि प्रथमेति विज्ञेयम्। सत्कृत्य चैनं प्रीतात्मा राज्यार्धं प्रत्यपादयत् इति भारते (आदि० १६८।७२)। प्रतिपादनं वितरणमित्यर्थग्रहात्प्रतिपादयतिप्रयोगे

विप्रादीनां सम्प्रदानताऽपि शिष्टानामिष्टा । गुणवते कन्या प्रतिपादनीयेति शाकुन्तले । अर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् इति च भर्तृहरौ ( २।१६ ) । प्रतिपादयतिश्च कथं वितरणमर्थमवतरतीति जिज्ञासायामर्पयतिविषये यदुक्तं पुरस्तात्तदिहाप्यवितथं विज्ञेयम् । क्वचिदन्यत्र सप्तम्यपि दृश्यतेऽर्पयतिवत्—धनानि तु यथाशक्ति विप्रेषु प्रतिपादयेत् इति मनौ (११।६) । अत्रार्पयतिवत्सामीपिकेऽधिकरणे सप्तमी साध्वी । अपि वा सम्प्रदानेपि क्वचित्सप्तमीमिच्छन्ति शिष्टा इत्यदुष्टा ।

केचिद् व्याकरणं प्राधीता* यस्य सकाशात्किञ्चिच्छ्रूयते ज्ञायते वा तमपादानमिच्छन्ति पञ्चमीं च ततो व्यवहरन्ति । तदसत् । उपयोगे नियमपूर्वकं विद्याग्रहणे सत्येवाख्यातुरुपदेष्टुरपादानता भवति न त्वन्यत्र । अन्यत्र तु षष्ठीमेव प्रयुञ्जते शिष्टाः । तद्यथा—राजा देवत्वमापन्नो भरतस्य यथाश्रुतम् इति श्रीरामायणे ( ३।६६।४ ) । रामस्तस्य तु विज्ञाय सीतासक्तां प्रियां कथाम् इति ( ३।६७।२१ ) । अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य हेति च ( ६।१८।१ ) । दिवौकसां कथयतामृषिभिर्वै श्रुता कथा । कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥ इति चरके (चिकित्सा० ८।३) । इदानीमहमागन्तुकानां श्रुत्वा पुरुषविशेषकौतूहलेनागतोस्मीमामुज्जयिनीम् इति चारुदत्ते ( अङ्क २ ) । वेदे खल्वपि—इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ( शुक्लयजु० ४०।१० ) ।

क्वचित्कारकस्याविवक्षा सम्बन्धस्य चैव विवक्षा । यथा मातुः स्मरतीति । मातृसम्बन्धिस्नेहादिकं स्मरतीत्यर्थः । यदा कश्चिन्मातृविश्लेषदुःखमश्नुवानः शिशुमपरं वाऽम्बया सस्नेहातिरेकं लाल्यमानं सदयं वाऽवेद्यमाणमालोकते तदा मय्यप्यम्बैवमाचरदिति भवति तस्य मातुः स्मरणम् । यदा चाऽऽकृत्या संवादिनीं योषां रथ्यया यान्तीं निशाम्य सादृश्यप्रत्ययेन प्रतिबुद्धसंस्कारो मातरमेव स्मरति साक्षात्, मातृमूर्त्तिरेवास्योपतिष्ठते चेतसि, तदा भवत्येव कर्मकारकस्यावकाशः । एवमन्य-

* अध्येतुमारब्धाः । आदिकर्मणि क्तः ।

त्रापि । शुकनासस्यापि मनोरमायां तनयो जातः । अन्यत्र जनकस्य कर्तृत्वेऽपादानत्वे सत्यप्यत्र तदविवक्षायां कस्येत्याकाङ्क्षायां शेषे षष्ठी । सा लक्ष्मीरुपकुरुते यया परेषामित्यत्र किराते कर्मणोऽविवक्षायां शेषे षष्ठी । एवमेव क्षेत्रमन्यस्याधिं कृत्वा किमपि गृहीत्वा पुनरप्यन्यस्याधाय किमपि गृह्णातीति मिताक्षरावाक्येऽधिकरणस्याविवक्षायां शेषे षष्ठी । व्यायाम-क्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च । व्याधयो नोपसर्पन्ति वैनतेय-मिवोरगाः ।। इति काशिकायामुद्धारे व्याधयो व्यायामक्षुण्णगात्रस्य पुरुषस्य सन्निधिमपि नाधिगच्छन्ति, संस्पर्शनन्तु दूरापेतमिति विवक्षया शेषे षष्ठी । तुरीये तु चरणे कर्मविवक्षातो द्वितीया । प्रायेण नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः । मातॄणां च कनीयांस इत्यत्र रामायणीये ( १।६१।१९ ) वाक्येप्येकत्राधिकरणविवक्षया सप्तमी, अपरत्र कारकत्वाविवक्षया षष्ठी । प्रभ्वादीनां योगे चतुर्थी षष्ठी च दृश्येते । तत्रालमर्थे चतुर्थी, स्वाम्येधिकारे वा षष्ठीति विवेकः । प्रभवति मल्लो मल्लायेति चतुर्थ्याः, प्रभवति स्वस्य कन्यकाजनस्य महाराज इत्यत्र मालतीमाधवे स्वाम्ये षष्ठ्या दर्शनात् । 'विधिरपि न येभ्यः प्रभवति' इति भर्तृहरिप्रयोगे त्वल-मर्थता कथंचित्समर्थनीया । स्वाम्ये सप्तम्यपि दृश्यते । प्रभवन्त्योपि हि भर्तृषु कारणकोपा मनस्विन्य इति मालविकायाम् । फलानां सुहित इति करणे शेषविवक्षया षष्ठी । शेषविवक्षैव च नियता सुहितार्थयोगे करणस्येत्याहुरिति कामसूत्रटीकायां जगद्धरः । पूरण-गुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन (२।२।११) इति करणस्य शेष-विवक्षायां लिङ्गमप्यस्ति । अत्र काश्चिद्दिश[1] उपन्यस्यन्ते—नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिरिति । अग्निस्तृप्यति नो काष्ठैर्नापगाभिमहोद-धिरिति तु काचित्कः पाठ आगन्तुकोऽसम्प्रदाय इति वेद्यम् । वेदेपि -रणा-विवक्षायां षष्ठी दृश्यते—अनुकामं तर्पयेथामिन्द्रावरुण राय आ (ऋ० १।१७।३) । मन्दानः शिप्र्यन्धसः (अथर्व० २०।५३।१) । मन्दानस्तृप्यन्निति

---

१ दिश उदाहरणानि ।

यावत्। सूत्रेष्वपि—अहरहर्नयमानो गामश्वं पुरुषं पशुम्। वैवस्वतो न तृप्यति सुराया इव दुर्मदी॥ (महाभाष्ये २।२।२६)। भारतेपि–चिरस्य दृष्ट्वा दाशार्हं राजानः सर्वं एव ते। अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम्॥ (उद्योग० ९४।५१)। मद्बाणानां तु वेगेन हतानां तु रणाजिरे। अद्य तृप्यन्तु मांसादाः (रा० ६।५७।१८–१९)। सदोद्गारसुगन्धीनां फलानामाशिता इति च भट्टौ (७।३८)। आशितास्तृप्ता इत्यर्थः। अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारेति सन्दर्भञ्श्रीहर्षोप्यत्रानुकूलः। माघस्तु अथवा श्रेयसि केन तृप्यत इति करणमवज्ञायाधिकरणत्वमाद्रियते। तदस्य स्वातन्त्र्यमिति किमु तत्र वक्तव्यम्। पूर्णशब्दयोगे पूरयतेश्चापि प्रयोगे करणस्य शेषविवक्षा दृश्यते प्रायेण। तद्यथा—सम्पूर्णा कृतविद्यानां गुहा केसरिणामिव (रा० १।६।२१)। ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे (रा० २।९१।७३)। यथा क्षेत्रिकः केदारादपां पूर्णात्केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिनापकर्षत्यावरणं त्वासां भिनत्तीति योगभाष्ये (४।३)। स एष ह्रदः कामानां पूर्णो यन्मनः (जै० उ० ब्रा० १।५८।३)। तस्येयं पृथ्वी सर्वा वित्तस्य पूर्णा स्यात् (तै० उ० २।८)। अपामञ्जली पूरयित्वा (आश्व० गृह्ये १।२०)। दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत् पदा (मनौ ११।१८३)। नवं शरावं सलिलस्य पूर्णमिति कौटलीये ऽर्थशास्त्रे (१०।१३१)। ओदनस्य पूर्णाश्छात्रा विकुर्वत इति सूत्रे (१।३।३५)। काशिकायाम्। स्निग्धद्रवपेशलानामन्नविशेषाणां भिक्षाभाजनं परिपूर्णं कृत्वेति तन्त्राख्यायिकायाम् (मित्रसम्० कथा० १)। तं च खादिराणामश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत् इति च चरके (सूत्र० १४।४६)।

तैस्तैरुपपदैर्योगे तास्ता विभक्तीरनुशास्ति शास्त्रकारः। अन्तरेणाप्युपपदं सा सा दृश्यते। कस्य चित्त्वथ कालस्य, ततः कतिपयाहस्य, ततः कतिपयाहस्य तच्छ्रुत्वेत्यत्र भारते (वन० २५९।८, १६०।१५, उद्योग० १८९।८)। चिरस्य वाच्यं न गतः प्रजापतिः, भगवन्निमामाज्ञाकरीं को गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरा-

नीताम् इत्यादौ शाकुन्तले च पश्चादित्युपपदं परिहृतम्। एति जीवन्तमानन्दो नरं वर्षशतादपीति रामायणप्रयोगेऽप्यूर्ध्वमित्याद्युपपदमपेक्षितं सदप्युपेक्षितम्। परं नैष उपपदपरिहारोऽन्यत्रापि शक्योऽतिदेष्टुम्।

क्वचिच्चोपपदयोगे विभक्तिनियमो व्यवहारत एवावसेयो भवति न शास्त्रतः। अनन्तरशब्दयोगे षष्ठ्यपि दृश्यते पञ्चमी चापि। सर्गशेषप्रणयाद्विश्वयोनेरनन्तरम् इत्यत्र कुमारे (६।९) ऽनन्तरशब्दयोगे विश्वयोनेरिति सम्बन्धमात्रे षष्ठी। तस्यानन्तरमिति भाष्ये दर्शनात्। अपादानत्वविवक्षायां तु पञ्चमी। तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्ट इति प्रथमसूत्रे शावरभाष्ये दर्शनात्। अथातो धर्मजिज्ञासा वेदाध्ययनादनन्तरमित्याचार्याः। कविः कालिदासोऽपि पुराणपत्त्रापगमादनन्तरमिति। अन्तरन्तराभ्यन्तरमध्यैर्योगे प्रायेण सप्तमी दृश्यते। यथा—उत्क्षेपणादिषु गमनादीन्यन्तर्भवन्तीति पृथङ् नोक्तानि। अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमाना इति मुण्डकोपनिषदि। अभ्यन्तरोऽहं लोके न त्वहं लोक इति भाष्ये। गुणेषु मध्ये प्रसादो नाम गुणः सर्वस्य प्रियः। प्रभृतियोगे पञ्चमी दृश्यते। तत्र कार्तिक्याः प्रभृत्याग्रहायणी मास इति भाष्यकारप्रयोग एव मानम्। पुराशब्दयोगेऽपि व्यवहारे पञ्चमी दृश्यते। तद्यथा—गर्भाधानमृतौ पुंसः सवनं स्यन्दनात्पुरा (याज्ञ० १।१०॥)।

शास्त्रे येयं भावलक्षणेति विश्रूयते सप्तमी तत्राप्यस्ति वक्तव्यम्। तत्रावदधतां विपश्चितः। यस्य च भावेन भावलक्षणम् (२।३।३७) इति हि तत्र विधायकं शास्त्रम्। कोऽस्य विषयः। यदा निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालाया अपरस्याः क्रियायाः कालपरिच्छेदाय भवति सोऽस्य विषयः। क्रिया ह्यत्र लक्षणं क्रियान्तरस्य। निर्ज्ञातक्रियाश्रययोः कर्तृकर्मणोस्तु लक्षणत्वं क्रियाद्वारेण। लक्षणं चेहानुमापकं व्याप्तिग्राहकं लिङ्गं न गृह्यते यथा धूमोऽग्नेः, किन्तर्हि ज्ञापकमात्रमिति सर्वं भाष्यादौ स्पष्टम्। इदं तु न विस्पष्टं किं यस्यैकस्य क्रिया लक्षणं विवक्षिता तस्यैव क्रियान्तरं चेल्लक्ष्यं भवति, भवत्यनेन सूत्रेण तत्र सप्तम्युताहो नेति। नेत्याह मान्यः कोषकृच्छ्रीशिवराम आप्टेः। इदमेव च सम्यग्दर्शनम्। पूर्वे सूरयस्त्वत्र न

संशिश्यिरेऽतो नात्र निर्णयमूचिरे। भाषावृत्तिकारः पुरुषोत्तम एवैकः प्रकृत-सूत्रं वर्णयन्स्माह—यस्य च क्रिययाऽन्यस्य क्रियान्तरं लक्ष्यते ततः सप्तमी स्यादिति। ईदृश एव शिष्टव्यवहारः। शिष्टाश्च वाचि प्रमाणमिति तदनुग्रहलाभाय तदविरोधेन सूत्राणि व्याख्येयानि।

अयमर्थः। यस्य कर्तुः कर्मणो वा क्रिया क्रियान्तरस्य लक्षणं भवति स चेत्कर्ता कर्म वा क्रियान्तराश्रयात्कर्तुः कर्मणो वा भिद्येत, तत्रैव सप्तमी स्यात्, अभेदे तु मा भूदिति। तेन शयानेन देवदत्तेन भुज्यते इत्यत्र न भवति। अत्र यद्यपि शयनं लक्षणं भोजनं च लक्ष्यं तथापि यः शयिता स एव भोक्तेति लक्ष्यलक्षकयोः क्रियाक्रियान्तरयोः कर्त्रभेद इति प्रकृतसूत्रस्याविषयः। अत एव 'ततस्तैस्तथाऽनुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोपि मुक्ताः' इति पञ्चतन्त्रे मित्रभेदपाठो दुष्यति। अनुष्ठानमोचनक्रिययोः समानकर्त्राश्रयत्वात्। स च 'ततस्तैस्तथानुष्ठाय' इत्येवं विपरिणमनीयः। एवं कस्यचित्प्राथमकल्पिकस्य 'रामे वनं प्रतिष्ठमाने स पितुः प्रतिज्ञानमेव मनस्यकरोन्नान्यत्किञ्चिदित्यत्र सप्तमीप्रयोगं सूत्राशयविदो न सहन्ते बलवच्च गर्हन्ते। 'धृतराष्ट्रस्य विदिते पाण्डवा वञ्चिताः परैः' इत्यत्र भारतप्रयोगे धृतराष्ट्रस्येति षष्ठी कथमिति चेदुच्यते—अत्र विदितमिति भावे क्तान्तम्। वेदनं विदितम्। धृतराष्ट्रस्येति तत्सम्बन्धे शैषिकी षष्ठी। विदिते इत्यधिकरणे सप्तमी ज्ञेया न भावलक्षण इति सर्वमवदातम्।

इयमपि द्वितीयाप्रयुक्तिश्चिन्त्यताम्। चतुर्दशीमष्टमीं वा रामं पश्यन्ति तापसा इति भारते। अथ कल्यमुत्थायेत्यादि च रामायणे। इहोभयत्राप्यत्यन्तसंयोगोऽसन्नपि विवक्ष्यतेऽन्यथा द्वितीयानुपपत्तिः स्फुटैव। यद्यपि चतुर्दश्या अष्टम्याश्चैकदेशे तापसा रामं पश्यन्ति न तु सर्वरात्रम्, दर्शनं हि क्षणिकं भवति, तथापि रामदर्शनसमुत्सुकास्तापसाः सर्वां रात्रिं पश्यन्तीव रामम्। एवं ह्यासेचनकं पावनं च तद्रूपमिति विवक्षया तथा प्रयुङ्क्ते कविः। द्वितीयस्मिन्नपि प्रयोग उत्थानपूर्विकया चेष्टया व्याप्तिर्विवक्ष्यते सर्वस्य कल्यस्येति द्वितीया सुवचा। क्रियाश्चान्तर्णीत-

क्रियान्तरा अपि प्रयुज्यन्त इति धातूनां सकर्मकाकर्मकत्वप्रकरण इहैवोक्त-मधस्तात्। एवं ततो द्वादश वर्षाणि प्रवेष्टव्यं वने पुनरिति भारतप्रयोगे प्रवेशनक्रिया तत्पूर्विका वासक्रियाऽभिधीयते। अन्यथा प्रवेशनस्य क्षणिकत्वात्कथङ्कारं तेन द्वादश समा व्याप्येरन् अव्याप्तेश्च कथं नाम वर्षशब्दादत्यन्तसंयोगे विहिता द्वितीयोपपत्तिमती स्यात्। एवमन्यत्रापि भारते—आत्मनो हि वयं दोषाद् विनष्टाः शाश्वतीः समाः ( शा० ७।३२ ) इत्यत्र नाशलक्षणायाः क्रियाया क्षणिकत्वेपि तद्विशिष्टाया अवस्थाया अभिधानादस्ति तया शाश्वतीनां समानामभिव्याप्तिरित्यत्यन्तसंयोगे द्वितीया सूपपन्ना भवति। एवमादिविषये चतुर्थीं प्रयुञ्जानो बाढं भवत्य-पशब्दभागिति शश्वत्स्मार्यम्।

अयमपि सप्तमीप्रयोगः परीक्ष्यः परीक्षकैः—एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुकेति भारते ( वन० ६७।७ )। नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं चरेदिति मनौ ( २।२४२ )। याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामेति मेघे। अस्ति मे त्वयि प्रार्थनेति चान्यत्र भारते। अत्र सर्वत्र सामीपिकेधिकरणे सप्तमी बोध्या। सप्तम्यैव च शिष्टा एतमर्थमभिदधति। तदेषां शीलम्। नव्यास्तु यदि पथि विपथे वा वर्तयामः स पन्था इत्यभिमन्यमाना मत्पार्श्वे वस, गुरोः सन्निधौ वसति, अस्ति मे त्वत्तः प्रार्थनेत्येवं विवक्षितमर्थमर्पयन्ति। यद्यपि पार्श्वादिप्रयोगे कश्चिद्दोषो न, गुणोपि सुतरां न। अधिकपदत्वं तु भवति रुचिविषयः शारदानामेव न विशारदानाम्।

अयमपि तृतीयाव्यवहारोऽनुचिन्त्यताम्—निमन्त्रयामास तदा फलमूलाशनादिभिः ( भारते वन० २७८।३३ )। स्थानिनो देवाः स्थानैरुप-निमन्त्रयन्ते भो इहास्यताम्, इह रम्यतामिति ( योगभा० ३।५१ )। लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ( रघौ १२।१५ )। अत्र सर्वत्र तादर्थ्ये सत्यपि हेतुतृतीयां प्रयुञ्जते शिष्टा न चतुर्थीम्। तेन भोजनेन निमन्त्रयते विप्रमिति वक्तव्यं न तु भोजनायेति।

इदं चेह मीमांस्यं किं शक्यं नाम ब्राह्मणेभ्यो ब्राह्मणानां वा भोजनं परिवेविष्टे परिवेषयति वेति वक्तुम्। नेत्याह। यद्यत्र ब्राह्मणार्था ब्राह्मण-सम्बन्धिनी वा परिवेषणक्रिया शक्येत कल्पयितुं बाढं तत्र चतुर्थी वा षष्ठी वा प्रकल्पेत। न च परिवेषयतीत्यस्याभ्यवहारयतीत्यर्थो यद् भोजनमिति कर्मणि द्वितीया साध्वी स्यात्। तत् किं नाम परिवेषणम् भवति। व्याप्तिः। भोजना स्वार्थिकी। परिपूर्वो विष्लृधातुः स्वार्थमजहदेव भोजनामाह। सा किल व्याप्तिर्भोजनार्था भवतीति भोजनाशब्देनोच्यते। तादर्थ्यात्ताच्छब्द्यम्। केन चात्र व्याप्तिरभिप्रेयते। अन्नेन भोजनेन वा। यो नाम भोजयितुमिष्टः स परिविष्यते। तेन ब्राह्मणान्भोजनेन परिवेविष्टे (परिवेषयति) इत्येव शिष्टजुष्टः प्रकारः। प्रकारान्तरं तु दुरुपपादमव्यवहृतपूर्वं चेति परिहे-यम्। प्रकृते प्रकारे चाग्निवेश्यगृह्यसूत्रं (१।१) प्रमाणम्। एवं हि तत्र स्मर्यते—आपूर्यमाणपक्षे पुण्ये नक्षत्रे विशेषेण पुंनामधेये युग्मान्ब्राह्म-णानन्नेन परिविष्येत्यादि। असकृदावृत्तश्चैष ब्राह्मणानित्यादिः पाठः सूत्र इत्यस्य यादृच्छिकत्वं वारयति, अपपाठकल्पनां च व्यपोहति।

इदमपरविधं विमृश्यम्। 'तीन दिन से मेह बरस रहा है' अस्य वाक्यस्य किमात्मकं संस्कृतमिष्यते। (अद्य) त्रीणि वासराणि वर्षति देव इत्येवास्य संस्कृतं शिष्टजुष्टं विभावयामः। अत्रार्थे पञ्च वर्षाण्यहं वीरं सत्यसन्धं धनञ्जयम्। यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर॥ इति भारते (वन० १४१।७)। इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् (१३।६७) इति रघुवंशे च रचनासंवादात्। अद्य कतिपयान्यहानि नैवागच्छति, अद्य बहूनि दिनानि नावर्तते इति च उभ-याभिसारिकायां धूर्तविटसंवादे च सन्निवेश सादृश्याच्च। प्रकृते वासरा-णीत्यत्र द्वितीयाऽत्यन्त संयोगे। कालो ह्यत्र वर्तमानकालिक्या क्रियया साकल्येनाभिव्याप्त इति तदुपपत्तिः। नायमर्थो विभक्त्यन्तरेण शक्यो वक्तुमिति न तिरोहितं सताम्। वाक्यभेदेन त्वयमर्थः प्रकारान्तरेणापि शक्यो वक्तुम्—अद्य (इदम्, इत इति वा) तृतीयं वासरं यद्वर्षति देवः। अत्रार्थे प्रमाणमप्युपस्तम्भकमस्ति। चतुर्दशमिदं वर्षं यन्नापश्य-

मरिन्दम इति भारते ( उद्योग० ९०।४७ ) इतश्चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम् इति च ( उद्योग० ९०।७० )। केचिदुक्तेऽर्थेऽद्य त्रीणि वासराणि वर्षतो देवस्येति संस्कृतं साधु पश्यन्ति। तन्न। अत्रानुकृतौ कालः प्रधानं क्रिया चोपसर्जनम्। वर्षणं हि कृत्प्रत्ययेन शत्रा कालसम्बन्धितयोक्तमिति व्यक्तमप्रधानम्। मूलहिन्दीवाक्ये तु विपर्ययेणार्थोपन्यास इति मूलच्छाययोर्बिम्बप्रतिबिम्बभावो नास्ति।

इदं चापरमेतज्जातीयकं विवेच्यम्। छः महीने पूर्व एक भीषण भूकम्प आया, महमूदने भारतवर्ष पर एक हजार वर्ष पूर्व आक्रमण किया, तथा पिछले पक्ष में मुसलाधार वृष्टि हुई इत्यमीषां वाक्यानां किंरूपेणाञ्जसेन संस्कृतेन भवितव्यमिति। केचिदिमानीत्थं परिवर्तयन्ति संस्कृतेन—इतः षण्मासान्पूर्वं बलवद्भूरकम्पत, इतो वर्षसहस्रं पूर्वं महमूदो भारतभुवमाचक्राम, इतः सप्ताहद्वयं पूर्वं धारासारैरवर्षद्देव इति। अपरे इतः षड्भ्यो मासेभ्यः पूर्वं बलवद्भूरकम्पत, इतो वर्षसहस्रात्पूर्वं महमूदो भारतभुवमाचक्राम, इतः सप्ताहद्वयात्पूर्वं धारासारैरवर्षद्देव इति। इतरे च षण्मासा अतीता यदा बलवद्भूरकम्पत, वर्षसहस्रमतिक्रान्तं यदा महमूदो भारतभुवमाचक्राम, सप्ताहद्वयं गतं यदा धारासारैरवर्षद्देव इत्येवमुक्तमर्थमनुवदन्ति। सर्वोऽयं प्रकारो दुष्ट इति नाभिनन्दनीयो विदुषामिति सङ्ग्रहेणोपपादयामः। प्रकार त्रितये प्रथमः प्रकारस्त्वापाततोप्यरम्यः सुतराञ्च जघन्यः। इह षण्मासान् इत्यादिषु यथा द्वितीयाऽनन्वयिनी तथा प्रथमापि। द्वितीया ह्यत्यन्तसंयोगे विहिता। अत्यन्तसंयोगश्चात्र नेष्टः। तेन कुतोत्र द्वितीया सूपपादा स्यात्। सर्वथाऽनन्वितं पदकदम्बकमिहोपन्यस्तमिति वाक्यमपि न भवति। मूलानुकारिता तु दूरापेता। द्वितीयस्मिन्प्रकारे इतः षड्भ्यो मासेभ्यः पूर्वमित्यादि सर्वथा संस्कारवत्तथापि विवक्षितमर्थं नार्पयतीति नैषाऽनुकृतिरनवद्या भवति। इदमत्रावद्यम्। मूले समयस्यैकोऽवधिरभिप्रेतः, संस्कृतच्छायायां त्ववधिद्वयं व्यक्तमुदितं भवति। द्विः पञ्चमीप्रयोगात्। यश्च क्रियाविशेषाभिव्याप्तः कालोऽत्यगान्नासौ परिच्छिन्नः। अत्र

वाक्येषु त्विदमादिरर्थः[1] प्रतीतिं याति। भूकम्पादिर्व्यतिकरो नामातीते मासषट्कादौ काले नाभूदिति। ततः पूर्वं कदाऽभूदिति न सुज्ञानमस्ति। वक्तुश्च नैषा विवक्षेत्ययमपि प्रकारो हेयः। तृतीयस्मिन्प्रकारेपि दोषं विभावयामः। अत्र पूर्वत्र वाक्ये कालात्ययो निर्दिष्टः। स किमवधिकः किंक्रियापेक्ष इति च नोक्तम्। उत्तरत्र च क्रियोक्ता स्वातन्त्र्येण, न तु पूर्ववाक्यगतकालावधित्वेन। तेनोभयोर्वाक्ययोरवध्यवधिमद्भावो नावगतो भवति। स च मूलवाक्येऽभिसन्धित्सितो वक्त्रेति दूरं सान्तरे छाया च मूलं चेति न दुरवधारं सुधीभिः।

तेनापहाय दुष्टमेतत्प्रकारत्रितयं निर्दुष्टमिदं प्रकारद्वयं परिगृह्णन्तु सन्तः। (१) अद्य षण्मासा भुवः कम्पितायाः। अद्य वर्षसहस्रं महमूदस्य भारतभुवमाक्रान्तवतः। अद्य सप्ताहद्वयं धारासारैर्वृष्टस्य देवस्य। (२) इतः षट्सु मासेषु (षष्ठे मासे) बलवद्भूरकम्पत। इतो वर्षसहस्रे (सहस्रतमे वर्षे) महमूदो भारतभुवमाचक्राम। इतः सप्ताहद्वये (चतुर्दशेऽहनि) धारासारैरवर्षद् देव इति। अत्र प्रथमे प्रकारे षण्मासाः, वर्षसहस्रम्, सप्ताहद्वयमित्यतीतं कालं परिच्छिन्दन्ति। तत्र च सर्वत्रातीताः सन्तीत्यादेः क्रियाया गम्यमानायाः कर्तृतया प्रथमान्तानीमानि निर्दिष्टानि। भुव इत्यादौ षष्ठी शैषिकी। द्वितीयस्मिन्प्रकारे इत इति पञ्चम्यर्थे तसिप्रत्ययान्तम्। पञ्चमी च यतश्चाध्वकालनिर्माणं तत्र पञ्चमीति वार्तिकेन कालमाने विहिता। 'षट्सु मासेषु' इत्यादिषु 'षष्ठे मास' इत्यादिषु च सप्तमी तु कालात्सप्तमीति वचनानुसारिणी। इतःस्थानेऽद्येत्यपि प्रयुज्यते। तत्र चायमस्मादह्न इत्यर्थमाचष्टेऽधिकरणवृत्तिरपि। तथा च कवेः प्रयोगः—अद्य प्रभृत्यवनताङ्गि तवास्मि दास इति। अयं च द्वितीयः प्रकारो भारतेनानुगृह्यते शाबरभाष्येण च। पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि (आदि० १२६।२९)। 'प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः। तस्मादितो वर्षशते प्यस्यार्थस्य सम्बन्ध आसीदेव। ततः परेण ततश्च परतरेणेत्यनादिता' इति शाबरभाष्ये। श्रीरामायणेप्यस्य व्यवहारस्यानु-

[1] —अयमादिरस्य इति इदमादिः। आदिशब्दः प्रकारे।

ग्राहकं वचो दृश्यते—मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनीति (६।६०।१७)।

इदं चात्र सम्प्रधार्यम्। किमेतौ प्रकारौ स्वच्छन्दतो यत्र तत्र शक्यावास्थातुमुत यथास्वं प्रतिनियतविषयाविति। बाढं प्रतिनियतविषयाविति ब्रूमः। प्रथमः प्रकारस्तु क्वचिदेव सङ्गतः स्यात्। तत्र हि कालविशेषस्यातिक्रान्तस्य विशेषणीभूता क्रिया कृत्प्रत्ययान्तेन षष्ठ्यन्तेनोच्यत इति कालापेक्षया प्रव्यक्ता तस्या गौणता। तस्माद्यत्रैवंविधः क्रियाकालयोर्गुणप्रधानभावोऽभिप्रेयते तत्रैवैष प्रकार औपयिको नेतरत्र। यत्र तु क्रिया प्राधान्येन विवक्ष्यते तिङा चोच्यते तत्र कालनिर्देशः सप्तम्यैव युक्त इति द्वितीय एव प्रकारस्तत्र युक्तरूप इति पश्यामः।

इतो व्यतिरिक्तमपि प्रकारान्तरं संभवति। इतः षड्भिर्मासैः पूर्वं भूरकम्पत। इतो वर्षसहस्रेण पूर्वं महमूदो भारतभुवमाचक्राम। इतः सप्ताहद्वयेन पूर्वं धारासारैरवर्षद् देव इति। अत्र वाक्येषु षड्भिर्मासैरित्यादिषु या तृतीया सा कम्पनादिक्रियायाः पौर्व्यावधिमवच्छिनत्ति। मासपूर्वः, वर्षपूर्व इत्यादयः समासाः पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैरिति शास्त्रेणाभ्यनुज्ञायन्ते। समासविधानाच्च लिङ्गान्मासेन पूर्व इति वाक्येपि पूर्वशब्दयोगे तृतीया साध्वीत्यास्थीयते। तेन मत्तो नवभिर्मासैः पूर्वो देवदत्त इति दोषलेशैरस्पृष्टं वचः। इदमत्र तत्त्वम्। पूर्वशब्देन योगेऽस्मच्छब्दात्पञ्चमी, तेनैव च योगे मासशब्दात्तृतीया। अवध्यर्थे पञ्चमी, अवच्छेदे तृतीयेति विभक्तिभेदः। यदि मासेन पूर्व इति निरस्तसमस्तदोषः प्रकारस्तर्हि षड्भिर्मासैः पूर्वं भूरकम्पतेत्यादि वाक्यं कथं दोषास्पदं स्यात्। अत्र पूर्वमिति कम्पनक्रियां विशिनष्टि मासैरिति च पूर्वतां क्रियाया अवच्छिनत्ति। नात्र दोषस्तोकं विभावयामः। अप्रहत एष वाचां पन्था इति न शिष्यान्परिग्राहयामः। सर्वथा निरवद्योप्ययं प्रकारो न तावत्प्रमाणकोटिं निविशते यावन्न शिष्टप्रयोगैः समर्थनां लभते।

अयमपि शिष्टव्यवहारो विमृश्यताम्। तिङन्तेन समानप्रकृतिकं कर्म

न प्रयुयुक्षन्ते प्रायेण। यावन्न पदान्तरेण तद्विशेषयन्ति। अर्थपौनरुक्त्यात्। न हि शिष्टा वाचं ब्रवीति,शपथं शपते,भोजनं भुङ्क्ते,गीतं गायति, वर्षं वर्षति, संभारान्विभर्ति, फलानि फलतीत्यादि प्रयुञ्जते। सविशेषणत्वे तु रोचयन्ते प्रयोगम्—शुचिस्मितां वाचमवोचदच्युत इति माघे। शिवभक्तिरियं नो मनोरथदुर्लभानि फलानि फलतीति हर्षचरिते। मधुरं गायति गीतम् इत्यन्यत्र। उक्तलक्षणं कर्तृपदं तु बाढमिच्छन्ति। चौरस्य रुजति रोगः। चौरस्यामयत्यामय इति च काशिकायाम् (२।३।५४)। यत्र क्रियामात्र उदिते कर्मणि चानुदितेऽर्थो न पूर्यते तत्रार्थवान् कर्मणः प्रयोग इति न वार्यते। को भवता दायो दत्तः। को भवता लाभो लब्ध इति।

इदं चापि व्यवहारानुबन्धि किञ्चिदवधानेनानुगृह्यताम्। यत्र खलु विशेषणमहिम्ना विशेष्यार्थलाभस्तत्र शक्यं विशेष्यमप्रयोक्तुम्। तद्यथा सागराम्बरेति समुद्रवसनामुर्वीमाह। विषाक्ते दिग्धलिप्तकावित्यमरात्केवलौ दिग्धलिप्तकशब्दौ विषसम्पृक्तशरवचनौ परिगृह्येते। उष्णानि कृष्ण वर्तन्त इति भारतप्रयोगे प्युष्णानीति निदाघाहा[1] उच्यन्ते। अजर्यं संगतमिति जीर्यतेर्नञ्पूर्वात्संगते संगमने कर्तरि यत्प्रत्ययो निपात्यते। अजर्यमार्यसंगतम्। परं केवलो प्यजर्य शब्दस्तादृशे संगते प्रयुज्यते। मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धेति रघौ (१८।७)। क्वचिन्नाम्नाऽपि केवलेन तत्कर्मिका क्रिया लक्ष्यते। नागपृष्ठेऽश्वपृष्ठे च परिनिष्ठित इत्यत्र नागपृष्ठारोहणेऽश्वपृष्ठारोहणे च परं प्रावीण्यमुपगत इत्यर्थोऽभिधित्सितः।

अवसितः कारकविचारः। इदानीं वाक्य उद्देश्यस्य कर्तृता वा स्याद्विधेयस्य वा। अपि वाऽन्यत्रार्थानुरोधात्किमुद्देश्यस्य कर्मत्वमिष्यतामुताहो विधेयस्येति विचारमवतारयामः। यद्युद्देश्यस्य कर्तृता तदा कर्तृवाचिनि तिङि धातोरुद्देश्यमनुसरन्ती पुरुषवचने भविष्यतः। अथ विधेयस्य कर्तृता तदा तदेव ते अनुरोत्स्यतः। एवमेकैकस्य कर्मत्वविवक्षायां तत्तदनुरोधात् धातोः पुरुषवचने, क्तान्तात्प्रातिपदिकाच्च लिङ्ग-

१—रात्राह्नाहाः पुंसीति पुंस्त्वम्।

संख्याविभक्तयो भविष्यन्ति। अस्मिन् गालोडिते[1] प्रवृत्तानां वैदिकं लौकिकं च साहित्यं शीलयतां नः प्रायश उद्देश्यस्य कर्तृत्वाभिप्रायाणि यथाविवक्षं कर्मत्वाधिगमकानि वा वाक्यानि दृक्पथमवतरन्ति। तेषु कतिपयानीह [2]स्थूलोच्चयेनोच्यन्ते—समुद्रः स्थः कलशः सोमधानः (ऋक् ६।६९।६)। यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम्। स्युष्टे सत्या इहाशिषः॥ ( ऋ० ८।४४।२३ )। यत्र ब्रह्म च क्षत्रं च उभे भवत ओदनः ( कठ० )। आत्मेत्येवोपासीत। अत्र सर्व एकं भवन्ति ( बृहदारण्यक० १।४।७ )। ता यदा सहस्रं सम्पेदुः ( छान्दोग्य० ४।४।५ )। अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ( रघौ० १।२५ )। एषोऽस्मि कामन्दकी संवृत्तः ( मालती ० )। पुरुषो ह नारायणोऽकामयत। अहमेवेदं सर्वं स्यामिति ( श० ब्रा० १३।६।१।१॥ )। ते ह व्याघ्रो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद् यद् भवन्ति तदाभवन्ति ( छा० उ० ६।९।२ )। बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डक इति हलायुधः। भारः स्याद्विंशतिस्तुला इत्यमरः। शब्दार्थौ मूर्त्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् इति विद्यानाथः। अत्रोदाहृतीनामियत्तापरिच्छेदो नास्ति। उद्देश्यस्य कर्तृकर्मत्वे परिगृह्य प्रचुरं पुरा प्रयुञ्जते प्रज्ञाः। विधेयस्य कर्तृकर्मत्वपरिग्रहस्त्वल्पः काचित्कः। बाढं प्रयस्यद्भिरस्माभिः कियन्ति चिदेवोदाहरणानि पारितानि पर्येषितुम्। तानीहानुक्रामामो विमर्शाय विपश्चिताम्। यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानत इति शुक्लयजुषि ( ४०।७ )। ते समानीतमात्रे तु शकले भरतर्षभ। एकमूर्त्तिधरो वीरः कुमारः समपद्यत॥ इति भारते ( सभा० १७।४१ )। त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते इति, अन्नं प्रजापतिश्चोक्त इति, अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् इति च भारते ( वन० १८८।२३।,२००।३८।, शान्ति० ३३।३८ )। त्रिंशत्कला मुहूर्त्तः स्यात्, पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः, ते षोडश स्याद्धरणम्, प्राणायामा ब्राह्मणस्य त्रयोपि विधिवत्कृताः। व्याहृतिप्रणवैर्युक्ता

---

१—गालोडितं वाचां विमर्शः। २—असाकल्येन।

विज्ञेयं परमं तपः ॥, श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।, सप्तप्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते इति भृगुप्रोक्तायां मनुसंहितायाम् ( १।६४।,८।१३८,८।१३६।,६।७०।,२।१०।,९।२९४ )। एको भिक्षुर्यथोक्तस्तु द्वौ भिक्षू मिथुनं स्मृतम्। त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥ इति दक्षस्मृतौ ( ७।३४ )। सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत इति पस्पशायां भाष्ये। द्वौ द्वौ माघादिमासौ स्यादृतुरित्यमरः। द्वौ द्वौ मासावृतुः स्मृत इति क्षीरस्वामिनोद्धृतं कात्यवचनम्। आचितो दशभाराः स्युरिति चामरः। पक्षसी तु स्मृतौ पक्षाविति पचिवचिभ्यां सुट् चेत्युणादिसूत्रव्याख्यायां दीक्षितोद्धृतः कोषः। भिन्नो भयाद्वा शोकाद्वा ध्वनिः काकुरुदाहृतेति श्रीहर्षचरिते प्रथमोच्छ्वासे शङ्करोद्धृतः कोषः। अक्षरेभ्यः संस्कारः संस्कारादर्थप्रतिपत्तिरिति सम्भवत्यर्थप्रतिपत्तावक्षराणि निमित्तम् इति शाबरभाष्ये ( १।१।५ )। मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमाविति रघौ ( ८।६१ )। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्त इति काशिकायाम् ( ४।२।५५ )। तत्र पूर्वं द्वे अक्षरे एकमक्षरं क्रियत इति क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत् इति सूत्रव्याख्यायां वेदार्थदीपिकायां षड्गुरुशिष्यः। साक्षिणः साधनं प्रोक्तं दिव्यं न च लेख्यकम् इति मिताक्षरायाम् ( २।२२ )। अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता। इति चरके ( चिकि० १५।५३ )। खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः। इति च ( शारीर० १।१६ )। कार्तिकस्य दिनान्यष्टावष्टावग्रहणस्य च। यमदंष्ट्रा समाख्याता अल्पाहारः स जीवति ॥ इति शार्ङ्गधरसंहितायाम् ( १।२।२४ )। कोषो दण्डो बलं चैव प्रभुशक्तिः प्रकीर्तिता। इति मिताक्षरायाम् । एवमत्रेपि श्लोके कतिपयपदान्येव म्लेच्छभाषा भवति न सर्वः श्लोक इति भारतभावदीपे नीलकण्ठः।

अत्र दुष्करं व्यवस्थापयितुम् । एवं हि प्रतिभाति प्राय उद्देश्यविधेययोः प्राधान्याप्राधान्यविवक्षायां व्यवस्थितिर्नास्ति । तत्र खलु कामचारः प्रयोक्तॄणाम्। यत्रोद्देश्यस्य प्राधान्यं विवक्षन्ति वाग्विदस्तत्र

तस्य कर्तृकर्मत्वे भवतोऽन्यत्र विधेयस्य। वाक्ये विधेयस्य प्राधान्यं तावन्न्यायप्राप्तम्। यत्किञ्चिदुद्दिश्य यत्किमपि विधातुमेव तत्प्रणीतेः। वाक्यार्थः क्रियेति सा प्रधानं वाक्ये तदङ्गभूतं चान्यदपि तत्समकक्षमेव। तथापि न ह्युपपत्तिमान्सर्वः प्रयोगप्रकारः, रुचिवशश्चापि कश्चिद्भवति। उद्देश्यस्य प्राधान्यं प्रायेण रोचयन्ते शिष्टा इति किं कुर्मः। यदि तर्कयामहे यत्र हि विधेयं संज्ञा भवति, ( संज्ञि वा ), यथाऽन्नं प्रजापतिश्चोक्तः, त्रिंशत्कला मुहूर्तः स्याद् इत्यादिषु, यत्र वाऽजहल्लिङ्गानि पदानि विधेयानि भवन्ति, यथा मिथुनं परिकल्पितं त्वयेत्यादिषु, तत्र विधेयस्य प्राधान्यं विवक्षन्ति तदनुरोधाच्च कर्तृकर्मत्वेन तत्प्रतीच्छन्तीति तदपि न व्यवतिष्ठते। तत्राप्युभयथा प्रयोगा दृश्यन्ते। भारः स्याद्विंशतिस्तुला इत्युद्देश्यस्य कर्तृत्वे ऽमरप्रयोगः। आचितो दश भाराः स्युरिति च तस्यैव विधेयस्य कर्तृत्वे। प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप् इत्यत्र बालरामायणे, हारः स एव प्राभृतमत्र जात इत्यत्र विद्धशालभञ्जिकायां चाजहल्लिङ्गपदोपात्ते विधेयेप्युद्देश्यस्य कर्तृत्वम्। तथापीदं व्यवसितं भाति पात्रप्रमाणभाजनस्थानास्पदादिषु विधेयेपूद्देश्यस्यैव कर्तृतेति। तेन वेदाः प्रमाणं सन्तीत्येव साधु, न तु वेदाः प्रमाणमस्तीति। एवं पात्रादिष्वपि बोध्यम्। इदं चाभासते क्वचित्क्रियापदस्य सान्निध्यमप्युद्देश्यविधेययोः कर्तृत्वकर्मत्वयोर्व्यवस्थापकम्भवति। यथा एवमपि श्लोके कतिपयपदान्येव म्लेच्छभाषा भवति न सर्वः श्लोक इति नीलकण्ठप्रयोगे म्लेच्छभाषेति विधेयं तिङन्तस्य संनिहितमिति तस्य कर्तृत्वम्। उद्देश्यं हि विधेयेन व्यवायात्ततो विप्रकृष्टमिति न तस्य तत्। यदि च विपर्ययेणोद्देश्यं तिङन्तादव्यवहितपूर्वं स्यात्तदा तस्यैव कर्तृत्वमभिमतं स्याद्वाक्यं चैवंविन्यासं स्यात्—म्लेच्छभाषा कतिपयपदान्येव भवन्तीत्यादि। एवमपि 'संभवत्यर्थप्रतिपत्तावक्षराणि निमित्तम्' इति शाबरभाष्ये संभवतीत्येकवचनान्तं विरुध्येत। एतच्च दृढतरं प्रतिभाति यत्र विधेयं विकृतिवाचकं कृभ्वस्तीनाञ्च प्रयोगः, च्वेश्चाप्रयोगस्तत्र विधेयस्यैव प्राधान्यविवक्षया कर्तृत्व-

कर्मत्वे व्यवस्थिते। अत्र सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत इति भाष्यमेव लिङ्गम्। तत्र नागेशोक्तिरप्यस्मदुक्तस्योपस्तम्भिका—खदिराङ्गारसवर्णे कुण्डले भवत इति प्रयोगादच्व्यन्ते विकृतेः कर्तृत्वं बोध्यमिति। तथा चैतरेयब्राह्मणे तादृशे विषये विकृतेः कर्तृता दृश्यते—तेषां (देवानां) या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः सम्भृता एष देवो (रुद्रो) ऽभवत् इति (३।३३)। यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानत इति यजुषि तु तात्त्विकस्य विकारस्याभावेऽपि विकारविवक्षायामात्मनो विधेयस्य कर्तृत्वं व्याख्येयम्। परयमप्युत्सर्गो नाऽनास्कन्नोऽपवादेन। अत्र सर्व एकं भवन्तीत्यत्रोपनिषत्प्रयोग उद्देश्यस्य कर्तृत्वदर्शनात्। तेनान्तर्वाणयो निर्ब्रवन्तु किमत्र कामचार एवाभ्यनुज्ञात आहोस्विद् व्यवस्थितिरपि काचिदस्तीति। विधेयस्येतिना परिच्छेदे तस्यैव कर्तृत्वकर्मत्वे व्यवस्थिते इत्यपि न शक्यं मुक्तसंशयं वक्तुम्। कालादिकृता वस्तुधर्मा वयःप्रभृतयोऽवस्थेत्युच्यत इति ककुदस्यावस्थायां लोप इति सूत्रे काशिकायां विधेयस्य कर्मत्वमस्तीति नापह्नूयते। योगभाष्ये तूभयथा दृश्यते। तद्यथा—सर्वभूमिषु सर्वविषयेषु सर्वथैवाविदितव्यभिचाराः सार्वभौमा महाव्रतमित्युच्यन्ते (२।३१)। एकविषयाणि त्रीणि साधनानि संयम इत्युच्यत इति च तत्रैव (३।४)। तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति संभाव्यन्त इति कुमारे (६।४१) मल्लिनाथः।

इदमिह प्रसङ्गाद् विमृश्यते यत्र वाक्य उद्देश्यविधेययोरेकत्वमापादयन्तौ द्वे सर्वनामनी प्रयुज्येते तत्र किं कस्य लिङ्गमुपादत्त इति। अत्राह तत्र भवान् कैयटः—उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति। क्षीरस्वामी खल्वपि स्माह—सर्वनाम्नामुद्दिश्यमानविधीयमानयोर्लिङ्गग्रहणे कामचार इति (अमरोद्घाटने)। यदि यच्छब्द उद्देश्यलिङ्गं गृह्णाति तदा तच्छब्द उद्देश्यलिङ्गमेव गृह्णीयाद् विधेयलिङ्गं वेति कामचारः। तथापि विधेयलिङ्गानुसरणं प्रायिकं पश्यामः। शैत्यं हि यत्सा प्रकृतिर्जलस्येति कालि-

दासः। तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जन इति भवभूतिः। इह वहु शक्यमुदाहर्तुम्। परं क्वचित्तच्छब्द उद्देश्यलिङ्गमपि गृह्णाति। तद्यथा—शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यम इत्यमरः। सा वीराशंसनं युद्धभूमिर्यातिभयप्रदेति च सः। यदधमर्णेनोत्तमर्णाय मूलधनातिरिक्तं देयं तद् वृद्धिरिति काशिकायाम् (५।१।४७)। यदसन्दिग्धमप्रयोजनं च न तत्प्रेक्षावत्प्रपित्सागोचर इति साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्रः। यदावेद्यते राज्ञे तद्भाषेत्यभिधीयत इति मिताक्षरा। तदनन्तरं गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिरिति मुक्तावल्यां विश्वनाथः। क्वचिच्च यच्छब्दोपि विधेयलिङ्गमनुसरति। तद्यथा—श्लेष्म वा एतद्यज्ञस्य यद्दक्षिणा (ताण्ड्य ब्रा० १६।१।१३)। मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी पौर्णमासी (शाङ्खायन ब्रा० ५।१)। इति कामचारः सुष्ठूपदर्शितो भवतीति विरम्यते।

उक्त उद्देश्यविधेयभावः। विशेषणविशेष्यभावः सम्प्रत्युपक्रम्यते। भेदकं विशेषणं भेद्यं विशेष्यमिति सामान्येन लक्षणम्। यदनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थाप्यते तद् भेद्यम्। सर्वोर्थः स्वरूपेण सामान्यतो ज्ञातोपि स्वगतेन विशेषेण पुनरनिर्ज्ञातो भवति। तस्य च येन निर्ज्ञातस्वरूपेण गुणवचनादिना योगो भवति स्वस्य रूपस्य परिच्छेदाय तद्भेदकं विशेषणम्। तच्च परार्थमिति गौणं भवति। तथा चोक्तं वाक्यपदीये—

विशेष्यं स्यादनिर्ज्ञातं निर्ज्ञातोर्थो विशेषणम्।
परार्थत्वेन शेषत्वं सर्वेषामुपकारिणाम्॥ (वृत्तिसमुद्देशे ७ कारिकायाम्)। इति।

क्वचिद्विशेषणविशेष्ययोः कामचारः। यत्रोभावपि गुणशब्दौ वा, क्रियाशब्दौ वा, गुणक्रियाशब्दौ वा तत्रैकतरं विशेषणं भवतीतरच्च विशेष्यम्। तथा च पर्यायेणोपसर्जनभावः। तद्यथा खञ्जकुब्जः कुब्जखञ्जः। पाचकपाठकः पाठकपाचकः। खञ्जपाचकः पाचकखञ्ज इत्यादि।

विशेषणमप्रधानमित्युक्तम्। द्वयोरप्रधानयोः प्रधानापेक्षावतोर्नास्ति

परस्परोपकारित्वमिति परस्परमनभिसम्बन्धः। उक्तं हि भाष्ये—न ह्युपाधेरुपाधिर्भवति न वा विशेषणस्य विशेषणम् (१।३।२) इति। यदि तयोरपि गुणप्रधानभावः स्यात्तदा विशेषणत्वं न स्यात्। तयोर्विशेष्ये द्रव्य एवैकस्मिन्नन्वयो न परस्परम्। तेनास्मद्गुरुचरणा महान्तो विद्वांसः सन्तीत्यत्र महत्त्वेन विद्वत्त्वं न शक्यते विशेषयितुम्। महान्त इति च विद्वांस इति चोभयं गुरुचरणानामेव विशेषणम्। इष्यते च महत्त्वं विद्वत्त्वं विशिंष्यादिति। तेन नेदं विवक्षितमर्थमर्पयतीति दुष्टो न्यासः। एवं च 'एते एतावन्तः साधवो यद् द्विषत्यपि दयां कुर्वन्तीत्यपि विवक्षितार्थासमर्पणादपप्रयोगः। तेनास्मद्गुरुचरणा महद्विद्वांस इति वक्तव्यम्। तत्र समासे व्यासे वा न कश्चिद्भेदः। उभयथा महदिति क्रियाविशेषणम्। सुप्सुपेति समासः। महद्यथा स्यात्तथेति विग्रहः। विस्पष्टपटुरितिवत्। स्थितस्य गतिश्चिन्तनीयेति चेत्। विद्वांस इति भावप्रधानो निर्देश इति कल्प्यताम्, स च महत्त्वेन विशेष्यताम्। महद् विद्वत्त्वमेषामिति महाविद्वांसः। यथा विशारद इत्यत्र शारद इति भावप्रधानो निर्देशः। विनष्टं शारदत्वमप्रतिभत्वमप्रौढत्वं वाऽस्येति विशारद इति व्युत्पादयन्ति। परं च वाक्यमित्थं विपरिणमनीयम्—एते तथा साधवो यथा द्विषत्यपि दयां कुर्वन्तीति।

परिणता विशेषणविशेष्यभावचिन्ता। इदानीं शतृशानचोः प्रयोगविषयं चिन्तयामः। लटः शतृशानचावप्रथमासमानाधिकरणे (३।२।१२४) इति शास्त्रमप्रथमान्तेन सामानाधिकरण्ये सति शतृशानचौ लडादेशौ विधत्ते। व्यवस्थितविभाषा चेयमिति वृत्तिकारादयः। तेन क्वचित्प्रथमासामानाधिकरण्येऽप्यादेशौ दृश्येते इति सन् ब्राह्मणः। विद्यमानो ब्राह्मणः। अधीयानो ब्राह्मण इति भवति। पक्षेऽस्ति ब्राह्मणः। विद्यते ब्राह्मणः। अधीते ब्राह्मण इति च। प्रथमान्तेन सामानाधिकरण्ये शतृशानचौ यन्नेच्छति सूत्रकारस्तत्रायमस्याभिप्रायो लक्ष्यते—लडादेशौ शतृशानचौ कृतौ[1]। तेन कृत्तद्धितसमा-

[1] —कृत्प्रत्ययौ।

साश्चेति शत्रन्तं शानजन्तं वा शब्दस्वरूपं प्रातिपदिकं भवतीति शब्दशक्तिस्वाभाव्याद् विशेषणं भूत्वा वर्तमानकालिकगत्यादिक्रियायाः कर्तारं कर्म वा यथाविवक्षमाह न तु तिङन्तवद् देवदत्तादिकर्तृकवर्तमानकालिकगत्यादिक्रियामिति विधेयत्वेन तस्य प्रयोगोऽनुपपन्न इति। अनुपपन्नत्वेपि क्वचिदभ्यनुज्ञायते व्याकरणस्यान्वाख्यानस्मृतित्वात् इति व्यवस्थितविभाषामाश्रयतां व्याख्यातॄणामाशयः। तथा च क्वाचित्काः प्रयोगाः श्रुतिस्मृत्योः—मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरे ऽहमस्मात्स्थानादस्मि इति ( बृ० उ० २।४।१ )। स यदोत्क्रमिष्यन्भवति नैतं घोषं शृणोतीति ( श० ब्रा० १४।८।१०।१ )। स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा च। एते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति ( छा० उ० ५।१०।९ )। यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः। ( मनौ २।१५६ )। सूत्रोदाहरणानि तु पचन्तं देवदत्तं पश्य, पचमानेन देवदत्तेन कृतम्, याचमानाय भिक्षुकाय देहि, शिशोर्वदनकमलकं पश्यन्त्याः किमपि प्रह्लादते चित्तं जनन्याः, न हन्यते हन्यमाने शरीरे इत्यादीनि निर्बाधं प्रसरन्ति।

इदमत्र चिन्त्यम्—वृत्तिकारादयः प्रथमासमानाधिकरणे क्वचिदेव शतृशानचाविति मते स्थिताः। दृश्यन्ते च तत्रापि विततः प्रयोगाः इति कोऽत्र समाधिः। तथा च केचित्स्थूलमुच्चीयन्ते—उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ( ऋ० १०।७१।४ )। कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति यजुषि ( ४०।२ )। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवा जायत इति ब्राह्मणम्। स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते ( कौ० ७।४ ) इति। जानन्नपि हि मेधावी जडवल्लोक आचरेत् इति मनौ ( २।११० )। प्रयुञ्जान एव खलु भवानाह सन्ति शब्दा अप्रयुक्ता इति ( भाष्ये )। ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् इति रघौ ( २। १७ )। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति ( तै० उ० २।९ ) ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृग इति भट्टौ ( ५।४८ )। एवमनुष्ठिते चत्वारोपि ते......

परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्तीति पञ्चतन्त्रे मित्रभेदे १६ कथायाम्। गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेत्, जघन्यमितरान् इति चरके (सूत्र० ३।१७)। तस्य चेत्केशलोमान्यायम्यमानानि प्रलुच्येरन्न च वेदयेयुस्तं परासुरिति विद्यात् इति च (इन्द्रिय० ३।६)। इदं क्वाचित्कत्वमिति कोऽसंमूढः प्रतीयात्। भाष्यकारस्य तु व्यवस्थित-विभाषा नाभिमता। तत्र भवान् नन्वोर्विभाषेत्यतो विभाषामनुवर्तयति तेन प्रथमासामानाधिकरण्ये विभाषा शतृशानचाविच्छति, उदाहरति च पचन्, पचति। पचमानः, पचत इति। न वयं लक्षणैकचक्षुष्का लक्ष्यैकचक्षुष्का वा। लक्ष्यलक्षणे उभे अपेक्षामहे। लक्ष्ये त्विदं निभाल-यामो यत्र शत्रन्तं शानजन्तं वा शब्दरूपमात्मनैव विधेयं न तु विधेयान्त-रमस्ति तत्र क्वचिदेव प्रथमासामानाधिकरण्ये शतृशानचौ भवतो यथा चोदाहृतम्। तेन देवदत्तः पचन् (अस्ति) इत्यादिर्भाष्यकारेणाभ्य-नुज्ञातोपि विरलः प्रयोगः। यत्र च खलु तद् विधेयांशो भवति न तु सर्वं विधेयं तत्राप्रतिहतः प्रयोगप्रसर इति। तस्मात् कटं कुरुते। देवो वर्षति। रावणो हन्यते। ते भुञ्जते। वयं विचारयाम इत्यादीनां स्थाने कटं कुर्वा-णोऽस्ति। देवो वर्षन्नस्ति। रावणो हन्यमानोस्ति। ते भुञ्जानाः सन्ति। वयं विचारयन्तः स्म इत्यादि व्यवहारानुपातीति परिहरणीयमिति मतं नः। कथं वात्र सूरयः पश्यन्ति।

उक्तौ शतृशानचौ। तुमुन्नाधिक्रियते। इदमिह विचार्यते भिन्न-कर्तृकत्वेपि तुमुन्प्रयोगः शास्त्रस्य संमत उत नेति। शास्त्रे तुमुन्वि-धायिका पञ्चसूत्री समस्ति। तत्र समानकर्तृकेषु तुमुन्नित्येकं वर्जयित्वा शिष्टेषु समानकर्तृकत्वमुपाधिर्नाश्रितः। तेन स्थाने शङ्कितं तत्तद्विहित-स्तुमुन् भिन्नकर्तृकत्वेपि स्यादिति। अक्रियार्थोपपदार्थेषु कालसमय-वेलासु तुमुन् (३।३।१६७), शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् (३।४।६५), पर्याप्तिवचनेष्वलमर्थेषु (३।४।६६)। इति त्रिषु सूत्रेषु तावत्समानकर्तृकतोपाधिना नार्थ इति वचनं नापेक्षते। तुमुण्वुलौ क्रियायां क्रियार्थायामित्येकं तु सन्देहास्पदम्। अत्र विसंवदन्ति विवरी-

तारः। भाषावृत्तिटीकाकृत्सृष्टिधर आह—समानकर्तृकेषु तुमुन्निष्यते। अयं (तुमुण्ण्वुलाविति विहितः) तु भिन्नकर्तृकत्वेपि स्यादिति मस्करिणो वस्तुं कुटिं घटयति। गृही सुतेन भोक्तुं मांसं क्रीणातीति। भट्टोजिदीक्षितप्रभृतयस्तु नैतत्सहन्ते। आह च प्रौढमनोरमायां भट्टोजिः—तुमुण्ण्वुलाविति विधिरपि भिन्नकर्तृकेषु नेष्यते। पुत्रं भोजयितुमागच्छतीति वक्तव्ये पुत्रेण भोक्तुमित्यप्रयोगात्। सेयं व्यवस्था शब्दशक्तिस्वाभाव्याद् बहुलग्रहणाद्वा सिद्धेति। समानकर्तृकेष्विति स्पष्टार्थमेवेति भाव इति हरिदीक्षितो नागेशश्च। व्यवहारदर्शनादपीदमेव मतं समर्थितं भवति। व्यवहारश्च प्रायिको गृह्यते। भवतु नाम क्वाचित्को व्यभिचारोऽनवधानकृतः, न तेन किं चिच्छिद्यते। तेन यद्यर्थिता निर्हृतवाच्यशल्यान्प्राणान्मया धारयितुं चिरं व (रघौ १४।४२) व इति।....... गुरुणा हि मेदिनी। भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता इति च (रघौ० १९।३)। न मृष्यति मां जीवितुं वसन्तबन्धुरिति दशकुमारचरिते (उ० २, पृ० १२९)। न कोपि निर्गन्तुं प्रवेष्टुं वानुमोद्यत इति मुद्राराक्षसे (अं० ५)। श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी। मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत्॥ (भट्टौ ५।५२)। इत्यादिषु कर्तृभेदेपि तुमुनः प्रयोगश्चिन्त्य एवेति स्थितिः। तस्मादनुजानीहि मां गमनायेति भवति न त्वनुजानीहि मां गन्तुमिति। एवं स भृत्यं कूपाज्जलमाहर्तुमादिशत्, गुरुः शिष्यं चापलं कर्तुं न्यषेधत्, स स्वामिनं हन्तुं भृत्यानचोदयत्, इत्याद्यनुक्त्वा क्रमेण स भृत्यं कूपाज्जलमाहरेत्यादिशत्, गुरुः शिष्यं मा स्म चापलं करोरिति न्यषेधत्, स स्वामिहत्यायै भृत्यानचोदयत् इत्याद्येव वक्तव्यम्।

क्वचिच्छास्त्रेणाविहितोपि तुमुन् महाकविभिः प्रयुज्यते। अगृहीतहेतिष्वशिक्षितो मे भुजः प्रहर्तुमिति श्रीहर्षचरिते बाणप्रयोगः। अत्र केन तुमुन्विधिः। न तावत् शकधृषज्ञाग्लाघटरभलभेत्यादिना शास्त्रेण। तत्रार्थशब्दस्यास्तिनैव सम्बन्धस्वीकारादन्येषु स्वरूपगृहीतेष्वेवायं विधिर्न पुनः पर्यायवचनेष्वपि। न च तुमुण्ण्वुलाविति सूत्रेण शक्यमिह

तुमुन्विधातुम् । अक्रियार्थोपपदत्वात्प्रहरतेः । नहि शिक्षणं प्रहरणार्थं भवति किन्तर्हि प्रहरणविषयकम् । यदा तत्तदर्थं स्यात्किल तदा किं शिक्ष्यत इति प्रश्नस्य किमु उत्तरं स्यात् । अयमत्र समाधिः प्रतिभाति । शिक्षतिरिहाविवक्षितकर्माऽकर्मकः प्रयुक्तः । तथा सति प्रहरणार्था शिक्षेति न दुर्घटोर्थः । तेन क्रियार्थोपपदत्वात्तुमुण्वुलावित्यनेन तुमुन् संगतो भवति।

इदं चेह विमृश्यं बाष्पश्च न ददात्येनां द्रष्टुं चित्रगतामपि, (शाकुन्त० ६।२२), स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्य इति च किराते (५।२८)। अत्र तुमुन्केन। उभयत्र भिन्नकर्तृकत्वे तुमुन्निति नातीव तिरोहितम्। पूर्वत्र वाक्ये ददातिक्रियायाः कर्ता बाष्पः। दृशिक्रियायाश्च वाक्यबहिर्भूतो दुष्यन्तः। उत्तरत्र चापि स्मरणं सुरसुन्दरीकर्तृकम्। दिशिश्च ...लताभवनादिकर्तृक इति परिस्फुटति कर्तृभेदः। सुरसुन्दरीभ्य इत्यत्र क्रियाग्रहणमपि कर्तव्यमित्युपसंख्यानात्सम्प्रदानतायां चतुर्थी। ता एव स्मरणकर्त्र्य इति वस्तुसन्नप्यर्थो न विवक्षितः कविना। तथा चोक्तं हरिणा वाक्यपदीये।

शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः ।
सर्वदा सर्वथा भावात्क्वचित्किञ्चिद्विवक्ष्यते ॥ इति॥

एतज्जातीयके तुमुन्प्रयोगे कः समाधिरिति शास्त्रपारावारपारं गताः पारयन्ति वक्तुम्।

तुमुनोर्थः क्वचिदपि न निर्दिष्टः शास्त्रे। अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति। स्वार्थश्च धातूनां भाव एवेति तुमुन् भावे पर्यवस्यति। तत्रेदं चिन्त्यते किं भावाभिधायि तुमुन्नन्तं शब्दरूपं वाक्ये कर्तृतया व्यवहार्यं भवति यथा घञन्तं ल्युडन्तं वाऽऽहोस्विन्नेति। नेत्याह कोषकारः श्रीशिवराम आपटेः। नहि भवति प्रातर्विहर्तुमारोग्यकरमिति। परमत्राप्यनेकान्तः। तथा च भारते कर्तृतायां प्रयोगः—क्षमं ते जीवतो गन्तुम् (वन० २२३।११) इति। पुष्करं दुष्करं गन्तुमिति च।

पर्यवसितचिन्तस्तुमुनः प्रयोगः। इदानीं लकारार्थे चिन्तां प्रवर्तयामः। भगवता सूत्रकारेण वर्तमाने लड् विहितः, व्यवहारे त्वन्यत्रापि स दृश्यते। किं करोमि क गच्छामि। अत्र किं प्राप्तावसरं कर्तव्यं क वा मे गमनं हितमिति वक्तुरात्मनि सम्प्रश्न इति लोट् प्राप्तः। तं व्यावर्त्य लटमेव प्रयुञ्जते प्रयोगचणाः। न गच्छामि भोः, ननु करोमि भो इत्यत्र ननुरनुज्ञैषणायाम्। अनुजानीहि मां गमनं प्रतीत्यादिरर्थः। अनुज्ञा चेहेष्यते प्रार्थ्यत इति प्रार्थनायां लोटि प्राप्ते लट्प्रयुक्तिर्व्यवहारमात्रनिबन्धना। अङ्ग कूज वृषल। इदानीं ज्ञास्यसि जाल्मेत्यत्र प्रातिलोम्ये गम्यमाने तिङन्तमनुदात्तं भवतीति प्रत्युदाहृतं काशिकायाम् (८।१।३३)। तत्र कूजनमनभिप्रेतमसौ कुर्वन्प्रतिलोमो भवतीत्यर्थः। तस्मात्कूजेति लडर्थे लोट्प्रयोग इति प्रव्यक्तम्। वर्तमाने लड् इति वर्तमानकालिकक्रियावृत्तेर्धातोर्लड् विहितः, शीलोपहितेपि धात्वर्थे स भवति। तद्यथा—इमामुप्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयतीति शाकुन्तले (तृतीयेङ्के)। लकारान्तराण्यपि लडर्थे दृश्यन्ते—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति॥

इति कालिदासप्रयोगे लडर्थे लृट् स्पष्टः। अत्र पूर्वत्र वाक्ये दार्ष्टान्तिके वर्तमानता क्रियायाः स्पष्टेति तत्साम्यादुत्तरवाक्ये दृष्टान्तेपि वर्तमानतैवेष्टा। तत्र च लृट् प्रयुक्तः कविना। सोऽसन्देहं वर्तमान एव व्याख्येयः। गत्यन्तराभावात्। एवं 'प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो इत्यत्र कुमारे (२।३१) भविष्यति ज्ञानक्रियाया अनभिप्रेतत्वाद् 'अन्तरात्मासि देहिनाम्' इत्यनेनासंगतेश्च वर्तमानतैवाभिप्रेतेति व्यक्तम्। तेनात्रापि लडर्थे लृड् व्यवहारानुपातीति प्रतिपत्तुमुचितं शासनादृतेपि। एवम् अहो कामस्य वामत्वं यो गतामपि दुर्लभाम्। स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम्॥ (रा० ४।१।६८)। इत्यत्र, यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यतीति स्वप्ननाटके (६।१४) ऽपि लडर्थे लृट्। अयं च व्यक्ततर आस्वाद्यतरश्च लडर्थे लोट् प्रयोगः—

ब्राह्मणो वा एतद्विजये महीयध्वम् इति केनोपनिषदि। पूजिता महान्तो भवथेत्यर्थः। सर्वस्य सम्प्रतिपत्तेः। तद् ब्रूत वत्साः किमतः प्रार्थयध्वमिहागता इति कुमारे ( २।२८ )। न भ्रातरो न च पिता नैव त्वं मधुसूदन। ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत्॥ इति च भारते ( वन० १२।२५-२६ )। अत्रैवं भाषणे व्यवहार एव निबन्धनं न शास्त्रम्। क्वचिल्लडर्थे लिङमपि व्यवहरन्ति यथा—इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम् इति भारते ( उद्योग० ५५।३६ )। अस्याश्च वाचो भङ्ग्या इच्छार्थेषु विभाषा वर्तमाने इति सूत्रानुग्रहोस्तीति नात्रोपपादनान्तरेणार्थः।

इदमपि लृट्प्रयोगे वैचित्र्यं विमष्टव्यम्। अक्षमोसि सितासिते विवेक्तुमिति व्यक्तम्, नो चेद् दग्धं पूपशकलं नात्स्यसि ( नहीं तो जले हुए पूए का टुकड़ा न खाता )। त्वन्नियोगाद्ग्रामदर्शनार्थं प्रस्थितः कथमन्तरा निवर्तिष्ये ( कैसे बीच में लौट आता ) ( प्रतिमा० षष्ठेङ्के )। अन्यथा कथं त्वामर्चनीयं नार्चयिष्यामः ( मालविका० )। अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनस्यानुज्ञास्यति इति च। यद्यहं गात्रसंस्पर्शं रावणस्य गता बलात्। अनीशा किं करिष्यामि विनाथा विवशा सती॥ इति रामायणे हनुमन्तं प्रति सीताया वचनम्। अत्र पूर्ववाक्ये यदि शब्दः सिद्धार्थानुवादे, न हेतौ। यथा नोलूकोपि विलोकते यदि दिवा सूर्यस्य किं दूषणम् इत्यत्र। अत्रैवमर्थे लृट् दृश्यते न च शिष्यते। लृटैव चैवमादिरर्थोभिधीयते विचक्षणैरितीह समुपन्यस्तैरुदाहरणैरेव सुज्ञानम्। न च हेतुहेतुमद्भावे लिङो लृङो वाऽत्र विषय इति शक्यशङ्कम्। लिङस्तावद्धेतुहेतुमद्भावे सति भविष्यन्नेव कालो विषयः। इह च वाक्येष्वतीता क्रियोच्यते न भविष्यती। साऽपि व्यामिश्रा न शुद्धा। शक्नोत्यर्थोपहितेर्थे वर्तमानाद् धातोरत्र लृड् दृश्यते, नानुपहितात्। अत्रोदाहरणेषु हेतुहेतुमद्भाव एव नास्ति। न ह्यत्र क्वचिद्धेतुवाक्यं श्रूयते। सिद्धार्थानुवादकमेव तु वाक्यं यत्र तत्रोच्चार्यते। हेतुहेतुमद्भावे क्रियातिपत्तेर्विचार एव नोदयते। यद्यपीह सर्वत्र

पूर्ववाक्येषु तात्पर्यग्रहाद्धेतुत्वे पर्यवस्यत्यर्थः, तथापि हेतुत्वं शब्दोक्तं नास्तीति लिङो लृङो वा नैष विषय इति विशदं विपश्चिताम्। सन्देहाक्रान्ते भूतेर्थे वर्तमानाद्धातोर्लृट् प्रयोग एव शिष्टाभ्यनुज्ञातोऽविहितोपीत्यपि दिङ्मात्रमुदाहरामः—न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ( रघौ ८।४४ )। तदयमपि त्वष्टुः कुन्दे भविष्यति चन्द्रमा इति (अनर्घ० २।८०)। श्रीरामायणे खल्वपि—हृता मृता वा नष्टा वा भक्षिता वा भविष्यति इति ( २।६०।८ )।

उक्तो लकारार्थविशेषः। इदानीं समासमधिकृत्य किंचिद् ब्रूमः। न वयं समासशास्त्रमुदाहृत्य समासाश्रयविधिं वा निरुच्य कृतित्वमात्मनोऽभिलष्यामः। उक्तः स विषयो भगवता सूत्रकारेण विवृतश्च वृत्त्यादिभिः। इदं तु विशिष्य विवक्षामः समासः क्वेष्यते क्व च नेष्यत इति। क्व समासेनैवार्थोऽभिधेयः क्व च व्यासेनैवेति। सत्यम् इष्टं हि विदुषां लोके समासव्यासधारणमिति द्वावेव वाचां मार्गौ प्रथेते। तत्र कदा कस्य परिग्रह इति तावद् विवेच्यम्। अस्थाने क्रियमाणे समासे पदानामनिष्टो गुणप्रधानभावः प्रसज्यते। वाक्यप्रसादोपि बहुधा विलीयते। इदं तावत्कालिदासीयं वाक्यं विचिन्त्यताम्—जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तवेति। अत्र पुरुपदस्य यत्प्राधान्यं न तत् समासे सत्यवतिष्ठते। समासगतोऽयं शब्दः सम्बन्धमात्रमाह, नातोरिक्तं किंचित्। वाक्यगतस्तु स साभिप्रायं विशेषणं व्याख्यायते। बहुविधश्चाभिप्रायस्तत्र लक्ष्यते। अयं नाम वंशो यस्य कस्य न भवति किन्तर्हि प्रथां गतस्य पितृभक्तस्य पुरोः, योऽयमात्मनः सौख्यं तृणीकृत्य स्वं यौवनं जनकाय ययातयेऽददात्, जरां च तदीयां पर्यगृह्णात्। अत एवात्र प्रणिगदन्ति भाषामर्मज्ञाः—

सम्बन्धमात्रमर्थानां समासो ह्यवबोधयेत्।
नोत्कर्षमपकर्षं वा वाक्यात्तूभयमप्यदः॥ इति ( व्यक्ति० २।१७ )।

एवमन्यत्रापि वाक्ये स्वातन्त्र्येण प्रयुक्तं पदं समासे गुणभावं भजते। यथा स तस्य स्वो भावः प्रकृतिनियतत्वादकृतक इति भवभूतिप्रयोगे स्व इति

पदस्य यत् प्राधान्यं न तत् स्वभाव इति पदैक्ये भवति । स्वस्य भावः, स्वश्चासौ भावश्चेत्युभयथाऽपि स्वशब्द उपसर्जनम् । भाव एव च प्रधानम् । एवं 'योऽभिवादित-विप्रस्तु नाशिषं सम्प्रयच्छतीति मनुवाक्ये (        )ऽभिवादितेन विधेयेन सह समासेऽनिष्टो गुणप्रधान-भावः फलति । विधेयं प्रधानं भवति विशेषणं तु गौणम् । तेन यस्तु विप्रोऽभिवादितः सन्नित्यादि व्यासेन वक्तव्यम् । अन्यत्रापि परिहार्यो-ऽस्थाने समासो दृश्यते । तद्यथा—सर्वं परित्याज्यतपश्च मत्वेति बुद्धचरिते (७।    ) । तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिरिति हितोपदेशे । पूर्वत्र तपः परित्याज्यं मत्वेति व्यस्तं वचः शोभनं स्यात् । परित्याज्यमिति विधेयं समासे विशेषणतां यातीति गुणी भवति । उत्तरत्रापि स एव दोषः । विनाशकाले बुद्धिर्विपरीता भवतीति विवक्षितम् । न तु वैपरीत्यविशिष्टबुद्धिः कश्चित्पूर्वप्रकृत इहास्ति ।

इदं चात्र समासवृत्तिमधिकृत्य विशिष्टमवधारणीयम् । यद्यपि मत्वर्थे बहुव्रीहिविधिरित्यभ्युपगमस्तथापि यो यावांश्चार्थो मत्वर्थीयैस्तद्धितै-राख्यायते नासौ तावान्वा बहुव्रीहिणेति वेदनीयम् । आतपवन्ति शिखराणि हिमवत इत्युक्ते योऽर्थः प्रतीयते नासौ सातपानि शिखराणीत्युक्ते । भूमनिन्दाप्रशंसासु नित्ययोगे इति वचनात्पूर्वत्रातपनित्ययोगोऽपीङ्गितो भवति । अपरत्र कादाचित्कताऽऽतपस्य स्यान्नित्यता वेति नियतं नास्ति । एवं सधनो वणिक् इत्युक्ते बहुधनो वाऽभिप्रेतः स्यादल्पधनो वेति व्यवसितिर्नास्ति । धनवान् इत्युक्ते तु बहुधन एव गम्यते नैयत्येन । नित्योदकी नित्ययज्ञोपवीतीत्यत्रोदकेन यज्ञोपवीतेन च नित्यं संसर्ग-वानभिधीयते । नित्योदकः, नित्ययज्ञोपवीत इति बहुव्रीहिणा तु केवलं सत्ताऽभिधीयते न तु संसर्गः । कचिद्रूढिवशान्मत्वर्थीयान्तस्य बहुव्रीहेश्चा-र्थान्तरं भवति । नाथवान् इति परतन्त्रो भवति, सनाथ इति सुशोभितः ।[1]

---

१ एतज्जातीयकमन्यदर्थं दिदृक्षुभिरस्मत्कृतेः प्रस्तावतरङ्गिण्या उपोद्घातो द्रष्टव्यः ।

अयं चात्र नञ्समासे विशेषो बोध्यः। नञ् (२।२।६) इति हि सामान्येन नञ्समासविधिः। उदाहरति च वृत्तिकारः—न ब्राह्मणोऽब्राह्मणः। न वृषलोऽवृषल इति। अत्र ब्राह्मणभिन्नस्तत्सदृशः क्षत्रियादिर्गृह्यते। अब्राह्मणमानयेत्युक्ते नहि लोष्टमानीय कृती भवति। सामान्येन प्रतिषेधवचनोपि नञ् क्वचित्पर्युदासमाह क्वचिच्च प्रसज्यप्रतिषेधम्। यत्र पदार्थान्तरस्य प्रतिषिध्यमानस्य प्रधानत्वं विधेयतया मुख्यत्वं प्रतिषेधस्य नञर्थस्याप्रधानता उद्देश्यतावच्छेदकतयाऽमुख्यत्वं स पर्युदासः। तत्र पर्युदासे नञ् समस्यते। तथैव चोदाहृतम्। यत्र तु पदार्थान्तरस्योद्देश्यतयाऽप्राधान्यं नञर्थस्य च विधेयतया प्राधान्यं स प्रसज्यप्रतिषेधः। तत्र नञर्थस्य क्रियायामन्वयः। तत्र समासो नेष्यते। उत्तरपदार्थप्रधानस्तत्पुरुष इति समासेऽभावोऽप्रधानं स्यात्। क्वचित्तु प्रसज्यप्रतिषेधेऽपि समासो भवत्येवेत्यत्र आदेच उपदेशेऽशितीति निर्देशो ज्ञापकः। शिति तु नेत्यर्थः। तथा च कविप्रयोगाः—अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः। दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥ (काव्यादर्शे २।१९७)। रत्नालोकेन संहार्यं नेति विधेयम्, सूर्यरश्मिभिर्वार्यं नेति च। उभयत्र क्रियया नञः सम्बन्धः। एवं कादम्बर्यामपि—निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्। अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा। सततममूलमन्त्रगम्यो विषमो विषयविषास्वादमोहः। नित्यमस्नानशौचवध्यो रागमलावलेप इति। अकिञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहतीत्युत्तरे रामचरिते। किंचिदपि न कुर्वाण इति क्रियया नञः सम्बन्धः, विधेयांशश्चायमिति स्पष्टः प्रसज्यप्रतिषेधः। तथापि नञ्समासः।

क्वचित्समासेनैवार्थोऽभिधेयो न व्यासेन। यदा विषधरजातिविशेषो विवक्ष्यते तदा कृष्णसर्प इति समासोक्तिराश्रीयते न तु कृष्णः सर्प इति व्यासोक्तिः। एवं हरीतक्यामलकं विभीतकमिति त्रितयं समुदितं 'त्रिफला' इत्येकपदेनाभिधीयते न तु त्रीणि फलानीति वाक्यघटकेन पदद्वयेन।

तथा शुण्ठीपिप्पलीमरिचानां समुदायः 'त्रिकटु' इत्युच्यते न तु त्रीणि कटूनीति। अमृतसरसमित्युच्यते समासेन नगरनामधेयं न त्वमृतस्य सर इति वाक्येन। वाक्यार्थः क्रियेति वाक्येन संज्ञाया अनवगमात्। एवं चतुःशालमिति योर्थं उच्यते नासौ चतस्रः शाला इति वाक्येन। चतुः शालमिति चतसृषु दिक्ष्वेकत्रावस्थितानां शालानां संनिवेशविशेष उच्यते।

केचिच्छब्दा अर्थविशेषे वर्तमानाः समासेन्तर्भूता एव प्रयुज्यन्ते। आह च—स्युरुत्तरपदे त्वमी। निभसंकाशनीकाश प्रतीकाशोपमादय इति (अमर० शूद्रवर्गे)। सदृशवचना निभादयोत्र गृह्यन्ते। तेन ताराधिपनिभानना (सीता), आकाशनीकाशम्, काशसंकाशम् इत्यादेः स्थाने ताराधिपेन निभमाननं यस्याः, आकाशेन नीकाशम्, काशेन संकाशमित्यादि न शक्यते वक्तुम्। उत्तरपदेऽमी इत्याह। उत्तरपदमिति च समासचरमावयवे रूढम्। तेन वाक्ये निभादीनां सदृशवचनानामप्रयोग इति स्थितम्। कार्त्स्न्येऽवधारणे च वर्तमानो मात्रशब्दो नित्यं समासचरमावयव इति प्रयुज्यते न तु वाक्ये स्वातन्त्र्येण। तद्यथा—नहि रोगमात्रस्यैका चिकित्सा भवति। नहि ज्ञातमात्रो धर्मोऽभ्युदयाय भवतीति।

समासगताः केचिच्छब्दा अपूर्वार्थवाचका भवन्ति। तद्यथा—संख्याशब्दानां वृत्तिविषये पूरणार्थत्वं दृश्यते। त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यतेति कुमारे (५।५७)। त्रिभागस्तृतीयो भागः शेषो यासां तासु। एवं शतांशः, सहस्रांश इत्यादिषु बोध्यम्। शततमोंशः, सहस्रतमोंश इत्यर्थात्। संख्याशब्दानां वृत्तिविषये वीप्सार्थत्वमपि लक्ष्यते। तद्यथा—सप्तपर्णः। सप्तच्छदः। सप्त सप्त पर्णानि वृन्तेऽस्येति विग्रहात्। मात्रशब्दो वृत्तौ तुल्यप्रमाणेऽपि वर्तते तद्यथा—भिक्षामात्रं न ददाति याचितः। भिक्षायास्तुल्यप्रमाणमित्यर्थः।

कचिच्च समासो नैवेष्यते। महत्कष्टं श्रित इत्येव भवति न तु महत्कष्टश्रित इति। उक्तं हि—सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं नेति। तेन ऋद्धस्य राज्ञः पुरुष इति भवति न च ऋद्धस्य राजपुरुष इति। भारतस्य प्रतिकोणं श्रीसुभाषस्य यशो गीयत इत्यत्र वाक्ये प्रतिकोणमिति

दुर्घटः समासः। पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यव्ययार्थः प्रधानम्। स चेह वीप्सा। तस्यासत्त्वभूतस्य 'भारतस्ये'ति षष्ठ्यन्तं विशेषणं न युज्यते। कोणशब्दश्च भारतमपेक्षत इति सापेक्षः। सापेक्षमसमर्थं भवतीति भारतस्य कोणे कोण इति व्यासेनैव वक्तव्यम्। नष्टस्य शिशोरन्वेषणार्थं सम्प्रस्थिता रक्षिण इत्यत्र वाक्येऽन्वेषणमिति नष्टस्य शिशोरिति पदे अपेक्षते तेनासमर्थम्। असमर्थस्य च तस्यार्थशब्देन समासोऽनुपपन्नः। तस्मान्नष्टस्य शिशोरन्वेषणायेति वक्तव्यम्।

विशेषणं विशेष्येण बहुलमित्यभ्यनुज्ञातोपि समासः क्वचिन्नेष्यते। मनोहरो नाम नापित इति विग्रहमाश्रित्य मनोहरनापित इति न शक्यते वक्तुं समासेन। कुत एतदिति चेदुच्यते—यत्र पूर्वोत्तरपदे प्रत्येकं विशेषणविशेष्यभूते भवतस्तत्रैवायं समासो भवतीति ज्ञापनाय सूत्र उभयोरुपादानमिति न्यासः। इह नापितत्वं हि मनोहरत्वं व्यभिचरति, मनोहरार्थस्तु नापितत्वं न व्यभिचरतीति मनोहर इति विशेषणमेव भवति न तु विशेष्यमपि। नापितार्थस्तु विशेष्यो विशेषणं चापीति नात्र समासो भवति।

अन्यत्र क्वचिच्छास्त्रेणैव प्रतिषिद्धः समासः। फलानां तृप्त इति भवति, न फलतृप्त इति। नृपाणामुत्तम इति भवति न नृपोत्तम इति। पञ्चमश्छात्राणामिति भवति न छात्रपञ्चम इति। सर्वस्य विदितमिति भवति न सर्वविदितमिति।

इदं चात्र सविशेषमवधीयमानमिच्छामो वाचि शिक्षमाणैः।[१] नहि संख्याशब्दाः समस्यन्ते सङ्ख्येयेन, अन्यत्र संज्ञायाः समाहाराच्च। सप्तर्षय[२] इति संज्ञा पञ्चाम्रा[३] इति च। तेन विंशतिर्गावः शतं स्त्रियः,

---

१ शक्तैर्बुभूषुभिः। २ मरीच्यत्र्यङ्गिरः पुलस्त्यपुलहक्रतुवसिष्ठाः सप्तर्षयः। ३ अश्वत्थ एकः पिचुमर्द एको द्वौ चम्पकौ त्रीणि च केसराणि। सप्तथ ताला नवनारिकेलाः पञ्चाम्ररोपी नरकं न याति॥ अत्र श्लोके पञ्चाम्राः परिगणिताः।

सप्ततिश्छात्राः, एकशतमध्वर्युशाखाः, चतुःषष्टिः कला इत्यादि व्यासेनैव शक्यं वक्तुं न तु विंशतिगाव ( टचि विंशतिगवाः ) इत्यादिना समासेन ; समाहारे तु वाच्ये विंशतिगवमित्यादिर्द्विगुः स्यात् ।

इदं चात्र प्रसक्तानुप्रसक्तमुच्यते । एकशतमिति मध्यमपदलोपी समासो भवति । एकाधिकं शतमेकशतम् । एवं द्विशतं त्रिशतं षोडशशतमित्यादीनां द्व्यधिकं शतं त्र्यधिकं शतं षोडशाधिकं शतमित्यर्थो न तु द्वे शते त्रीणि शतानीत्यादिः ॥

मा भूद्भूयान्ग्रन्थविस्तर इतीहैवावसाययामि वाचम् । इदं च कामये—

यदि तनुरपि तोषो मत्कृतौ नूतनार्था-
ल्लसति हृदि बुधानां वाचि निष्ठां गतानाम् ।
यदि च भवति बोधो वाक्सरण्या रमण्या
अभिनवपठकानां स्यात्तदा धन्यता मे ॥

—o—

# निवेदना

अर्थगत्यर्थः शब्दप्रयोगः। अर्थं च यथा शब्दोऽवगमयति तथाऽपशब्दोपि। तथापि शब्दमभिनन्दति लोकोऽवक्षिपति चापशब्दम्। प्रियङ्करणो हि शब्दप्रयोगः। य इच्छेत्प्रियोऽहं लोकस्य स्यामिति स शब्दाञ्छीलयेत्साधीयश्च तान् व्यवहरेत्। आह च भगवान् भाष्यकारः—समानायामर्थगतौ शब्देन चापशब्देन च, शब्देनैवार्थोऽभिधेयो नापशब्देनेति। कश्शब्दः कश्चापशब्दः। सूत्रानुसारी प्रयोगश्शब्द उत्सूत्रश्चापशब्दः। सूत्रेष्वेव तत् सर्वं यद्वृत्तौ यच्च वार्तिक इति मतमाश्रित्येदमुच्यते। मतान्तरे तु संस्कारहीनश्शब्दोऽपशब्दः। स एवापभ्रंशः। अपशब्दपरीहारश्च न सहेलं साध्यः। शब्दापशब्दविवेकनिबन्धनो हि सः। विवेकश्च विशारदस्यापि न सहसा जायते किमुत शारदस्येति प्रकृतो नो यत्नः। वाचि शिक्षमाणस्य प्रथमवैयाकरणस्य साचिव्यं किमपि चिकीर्षामीति प्रक्रममिमं प्रक्रान्तोस्मि।

अत्र पूर्वार्द्धे प्रायेण विनेयानां वाचि प्रतीतास्ते ते प्रमादानां गोचराः संगृहीताः, प्रकरणशश्च निबद्धाः। प्राचामर्वाचां च ग्रन्थकृतामपि सन्देहास्पदं भूताः प्रभूताः प्रयोगा विमृश्या इति समाहृताः। न केवलं संस्कारहीनाश्शब्दा एवानुक्रान्ताः पदवाक्यानि च संस्कारवन्त्यपि व्यवहारमतिपतन्ति संनिवेशितानि। एकोत्तराणि पञ्च शतानि च केवलं व्यवहारतो दुष्टानि वाक्यानीह समुच्चितानि। उत्तरार्द्धे च संगृहीतपूर्वस्य महतः शब्दार्थसार्थस्य सोपपत्तिकं सप्रपञ्चं च साधुत्वासाधुत्वे विवेचिते इति सामासिको ग्रन्थप्रतिपादितोर्थः। अत्र कियानयं प्रयासः क्रियती च सिद्धिरित्यत्र सदसती विवेक्तारस्तत्त्वं प्रतिपत्तारः प्रवक्तार एवेशते वक्तुम्। इदं त्वाशंसे कृतिरियं यथेष्टमुपकुर्याच्छात्रवृन्दस्य प्रबोधाय च पर्याप्नुयात्। इदं च भूयः कामये शास्त्रपरपारदृश्वानः पण्डितप्रवेका इमां मे क्रियां दृक्पातेन संभावयन्तु गुणदोषतश्च परिच्छिन्दन्त्विति। इह मुद्रणे प्रवर्तमाने कृतेपि संशोधने क्वचित्क्वचिदन्यथा वर्णविन्यासो वर्णविलोपश्चाभूदिति स सुधीभिः स्वयं साधूकरणीय इति नम्रं निवेदयन्विरमति

अम्बालये चैत्रपूर्णिमायाम् } विदां विधेयश्चारुदेवशास्त्री।

# विषयानुक्रमणी ।

## पूर्वार्द्धं तावत्

# अथोत्तरार्द्धं

ओं नमः परमात्मने ।

मुनित्रयं नमस्कृत्य तच्छिष्टीरनुचिन्त्य च ।
शब्दापशब्दयोरेष विवेकः प्रवितन्यते ॥

## अथ संहितायां विवेच्यानि ।

### तत्राच्सन्ध्यधिकारः प्रथमः ।

१—शुद्धोदनस्यापत्यं सिद्धार्थं इति शौद्धोदनिरित्युच्यते ।

२—यदस्मात्यैर्मतमुपन्यस्तं तत्रौमिति[1] ब्रूमः । न हि तेषां प्रायो मिथ्या दर्शनं भवति ।

३—श्वोहं त्वामुपेष्यामीति दृढं प्रतिजाने ।

४—अहोऽस्मि परमप्रीतो यस्य मे तादृशः सुतः ।

५—ऐहि पुत्रक ! परिष्वजस्व मां पीडितम्[2] । चिरमुत्सुकोऽस्मि ते दर्शनेन[3] ।

६—उभेऽपि भगिन्यौ सङ्गीते विशारदे, विशेषतश्च प्रवीणे वीणायाम् ।

७—सर्वस्यात्मा बहुमतः सर्वोत्मानं प्रशंसति ।

८—स्वयं कृते पुण्यपाप अनुवर्तमानो जायस्व म्रियस्वेत्येवायं[4] संसरति[5] देही ।

९—नाभिप्रैमस्त्वं धर्ममेव सततमनुरून्ध्या इति, अर्थकामावपि यथाकालं जुषस्व ।

१०—अथ त अब्रुवन्मनुम्—भगवन्व्याख्याहि नो वर्णधर्मानिति ।

११—अद्यत्वेऽपेक्षिततमानामर्थानां महर्घता परं क्लिश्नाति जनताम् ।

---

१ ओमित्यव्ययमङ्गीकारे । २ पीडितमिति क्रियाविशेषणं दृढमित्यर्थे । ३ प्रसितोत्सुकाभ्यां तृतीया चेति तृतीया । ४ क्रियासमभिहारे लोट् । ५ समुच्चये सामान्यवचनस्येति सामान्यवचनस्यानुप्रयोगः ।

१२—तस्मिन् विप्रकृताः काले तारकेण दिवौकसः । तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥

१३—आत्ममनसोरेकत्वऽऽत्मा प्रतिक्षणं परिवर्तेत । तन्नेष्यते ।

१४—विप्रोषिता विद्यार्थिन अकामतोपि न तथा वर्तेरन्यथाऽस्य देशस्य मानो देशान्तरेऽपकृष्येत ।

१५—शास्त्रेणातिशयने तमबिष्ठनौ विधीयेते ।

१६ अथैतन्त्स्तुत्वा द्वीपि ...

१७ उपैवस्व गुरून् । अर्हन्तस्ते मार्गमुपदेष्टुमर्हन्ति ।

## हल्सन्ध्यधिकारो द्वितीयः ।

१—इमान्यन्तरङ्गानि साधनानि, इमानि वहिरङ्गानि ।

२—यदीयं किम्वदन्ती राजानं स्पृशेत्तदाऽतिदारुणां स्यात् ।

३—इमे दोषा गुणान्तिरस्कुर्वन्ति महतामपि ।

४—आचार्यो मेऽसंनिहितः, आचार्याणीं नमस्कृत्य यास्यामि ।

५—भिषजादीनामन्नं नोपभुञ्जीतेति स्मरन्त्यृषयः ।

६—किं विधवापुनरुद्वाहस्य शास्त्रदृष्टतां सिसाधयिषस्युताद्यत्वे तदुपयोगिताम् ।

७—अप्यन्तरायाण्यार्य्य ?

८—यन्मान्या विशेषविदो दुर्गता इत्यवमन्यन्ते लोकेन स दुर्णयः ।

९—प्राज्ञेति पदं कृता व्युत्पाद्यं तद्धितेन वा यथाकामम् ।

१०—विराजादिशब्दानां सन्ति मुख्या अर्थाः सन्ति च गौणाः प्रकरणाद्यनुरोधात् ।

११—देवीं सरस्वतीं नमः कृत्वा बृहस्पतिसमं गुरुं च पुरः कृत्य वाक्यमुक्तावलिं नाम पुस्तिकां प्रणेतुमारभे ।

१२—अत्रार्थे किमप्युपष्टम्भकं प्रमाणं नोपलभामहे ।

१३—अभ्रविलायं स वरं प्रणष्टः कल्याणमतिषु सुजनेषु कष्टायते[1] यः ।

---

१ पापं चिकीर्षतीत्यर्थः ।

१४—अत्र श्रेण्यां चतुःपञ्चाशच्छात्राः सन्ति । अनुवत्सरं ह्रसति संख्या ।
१५—प्रियम्वदो मे प्रियवयस्यः सर्वस्य प्रियार्हो विशेषतो मे प्रियसख्याः ।
१६—इयं मे मातृस्वसा । इयं मयि भृशं वत्सला ।
१७—मूर्च्छन्त्यमी[1] विकाराः प्रायेणैश्वर्यमत्तेषु ।
१८—अयत्ने भोजनाच्छादने अपि दुर्लभे किमुत सुखोपकरणान्तरम् ।
१९—किं जानीषे सीतायाः स्वयम्वरे के के राजानः संनिपतिताः[2] ।
२०—सर्गेऽस्मिञ्चेतना अचेतनाश्च सर्वेऽर्थाश्चेष्टमाना लक्ष्यन्ते ।
२१—विषिण्वन्ति विषयिणमनुबध्नन्ति स्वेन रूपेणेति विषयाः ।
२२—भुवनप्रथितख्यातीनां क्षत्रियपुङ्गवानां भूरेषेति कस्य नेहाभिमानः ।
२३—दुराचारस्य प्रनश्यति कीर्तिः प्रनश्यति च वित्तम् ।
२४—यद्यपि नद्यां निस्नातोऽस्मि तथाप्यस्यां पद्मिन्यां सिष्णासामि ।
२५—दाक्षिण्यं नाम परच्छन्दानुवर्तनम् । प्रियङ्करोऽयं गुणः ।
२६—या नः साम्प्रतिकी परिस्थितिः सा निपुणमालोच्या ।
२७—प्रखरनखरैः प्रतिष्किरति[3] व्याघ्रो मेषीम् ।
२८—त्रिहायणीयं[4] पाठशाला कमप्यपूर्वं प्रकर्षं प्राप्नोति यत्सोऽस्या अध्यक्षस्य गुणः ।
२९—किं भोः सुसिक्तम् ? यथा तथा सुषिक्तं किं तवानेन ?
३०—नरवाहण इति धनदनामसु पठितम् । तत्र नरान् अनाक्रम्य न शक्यो महान् धनराशिः सम्पादयितुमित्यार्याणामभिप्रायो भाति ।
३१—अहरहोऽधीते स्वाध्यायं प्रयतो गृहस्थः ।
३२—यदत्र मेऽभिस्यात्[5] तन्मे दातुमर्हसि । न ततोऽधिकं मार्गामि[6] ।
३३—अन्याय्यमपरिनिष्ठितस्योपदेशस्य प्रदर्शनम् ।
३४—इदं सर्पिः, इदं च सर्पिष्टरम्[7] । कुत इदं वेत्थ ? ।
३५—इदं पयः, इदं च पयः पाशम्[8] इति वचनं नापेक्षते ।
३६—यत्परकृतनिकृतिं नार्हति तेजस्वी विषोढुं सोऽस्य स्वो भावः ।

---

१ वर्धन्ते इत्यर्थः । २ समवेताः । ३ हिनस्ति । ४ त्रिवार्षिकी । ५ भागः स्यात् । ६ याचामि । ७ साधीयो घृतम् । ८ कुत्सितं क्षीरम् ।

३७—आकाङ्क्षायोग्यतासत्तितात्पर्याख्याणि चत्वारि कारणानि शब्दबोधे।
३८—ते नाम श्रेयान्सो ये स्वार्थाविरोधेन परहितं राध्नुवन्ति।
३९—विरला एव पुमान्सः स्वार्थमतिहाय परार्थैकसाधनपरा भवन्ति।
४०—प्राणवायुं पूर्वमन्त आददीत ततो बहिर्गमयेत्। एवं त्रिः प्राणानायच्छेत्।
४१—तेजस्कामो ब्रह्मचर्यं परिसेवेत। ब्रह्मचर्येण देवा मृत्युमपाघ्नतेत्याथर्वणिकाः।
४२—यो जायते स अवश्यं म्रियत इत्युत्सर्गः क्वापि नापोद्यते।
४३—परः कोटयः प्रजा नवोदितं शशिनमिवाभिनन्दन्ति श्री जवाहरलालं महामन्त्रिणम्।
४४—अवष्टब्धो[1] वृषलः शीतेन।
४५—तस्य स्वसा विपूचिकया मृतेति निशम्य स चिरमशोचीत्।
४६—प्रातस्कल्पा[2] शर्वरीति प्रस्थेयं नः। कालसङ्गः[3] परिहार्यः।
४७—द्विजः शुध्येत्पराकेन शूद्रः कृच्छ्रेण शुध्यति।
४८—तदह्नोऽन्यत्र व्यापृतो भवितास्मीति न सखायं द्रष्टुं पारयितास्मि।
४९—वैडालव्रतिकं दाम्भिकं द्विजं वाग्मात्रेणापि नार्चयेत्।
५०—अन्तर्यामिनो भगवतः किं नाम तिरोहितम्?
५१—अचां हल्सु हलां चाक्षु संमिश्रः संनिवेशो दृश्यते भाषान्तरवर्णमालासु।
५२—शास्त्राण्यध्यापयितुं प्रभूनां विशेषज्ञानां युज्यते भूयान् समादरः।
५३—परोलक्षेषु मनुष्येषु कश्चिदेवात्मोपलब्धये यतते।
५४—सापराधक्षमापनं चेह नम्रं निवेदयामि बालस्यापि मे वचः किञ्चिदवधानमर्हति।
५५—शुद्धसरलसंस्कृतोपनिबद्धानि प्रमेयमात्रपरिचायकाणि वेदव्याख्यानानि विरचनीयानि।
५६—स्वयमनुत्तीर्णः कः परान्तारयेत्।

---

१ गात्रस्तम्भं प्राप्तः। २ प्रभातप्राया। ३ विलम्बः।

५७—महामहिमानस्तेऽन्तः स्थान् बहिःस्थांश्च रिपून् सममभिस्युः[1] ।
५८—सौवर्णानि राजतानि वा भाजनानि बभूवुरार्याणां न तु मृण्मयानि ।
५९—सच्चेष्टितपरिहीनस्य तस्य जीवितेन किम् ?
६०—एवमुपपादितमेतन्मतं निःपक्षपातिनां मनः प्रीणयेन्नाम ।
६१—इक्ष्वाकुकुलपुरोधाः श्रीवसिष्ठः श्रीरामं तीर्थेभ्य आहृतैरभ्यसिचत् सलिलैः ।
६२ -एवं हि दैवं पराहण्यते पौरुषेण ।
६३—अयं बहिस्तो वैष्णवः अन्तस्तु[2] शैवः ।
६४—कुत्सितेन तस्य परामर्शेण नितान्तं दूयते स्म नः स्वान्तम् ।
६५—भूरिरस्य परिश्रमो व्याकरणे । साध्वयं वेद हृदयं सूत्रवार्तिकाणाम् ।
६६—वात्सल्यरसस्यास्वादयिषयाऽहं सूरनिबद्धं श्रीकृष्णस्य बालचरितं किञ्चिदपठम् ।
६७—सनाद्यन्ता धातवः ।
६८—गगणं गगणाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ॥
६९— प्राङ्गणे खेलन्ति बालाः सांराविणं[3] च कुर्वन्ति ।
७०—अत्र विस्तृमरे[4] जनप्रकोपे नृणायका एव प्रतिभुवः ।
७१—पुरा ब्राह्मणैः स्वेन गुणप्रकर्षेणोच्चैस्तमं पदमध्यस्थीयंत ।
७२—फाल्गुणे मैत्रो विधिवद् दारान्करिष्यति ।
७३—भीष्मादयो वर्मिणो हि सुरासुरलोकानपि स्वतेजसाऽभ्यभूवन् ।
७४—अद्य प्रात एवातपः प्रखरोऽभूत् ।
७५—आर्द्रगोमयेण लिम्प महानसभूतलम् ।
७६—गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः । दुःप्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥
७७—कश्चिद् भूमिस्थोऽपि दिविषदमात्मानं मन्यते ।

---

१ युगपद् अभिभवेयुः । अभिपूर्वस्यास्तेः सार्वधातुके लिङि रूपम् ।
२ अन्तरित्यव्ययं मध्यवाचि । ३ व्यापकं शब्दम् । ४ व्यापनशीले ।

१४. अयं वसन्तकालः, अयं तु परमपरमः कामः। किं हेतुकः स्वाङ्गितो विशेषः।



१६. अयः पानमायसं पात्र्यमुच्यते तद्धितवृत्त्या।

७८—म्लायन्त्यङ्गुलिमङ्गेपि कोमलाः कुसुमस्रजः ।

७९—तत्र तटिनीतटे सर्वं नीरवं निष्पन्दं चासीदिति [1]भीरावि्रशन्नः[1] ।

८०—सुस्थिते को न पण्डितः ।

---

## विसर्गसन्ध्यधिकारस्तृतीयः ।

१—को वर्णयेन्नृपगुणाञ्श्लोकैः परःशतैरपि ।

२—अस्योद्यानस्य बहिःप्रदेशे तिष्ठ, यावदहं प्रत्यावर्ते ।

३—निः प्रमाथो[2]ऽसहोद्योगः श्रीगान्धिनो नयस्य मुख्यमङ्गम् ।

४—आयुःकामो व्यायामी पथ्याशी स्त्रीषु जितात्मा नरो न रोगी स्यादिति नित्यं मनसि कुर्यात् ।

५—चित्ताभोगो मनःकार इति केचिदधीयते । तत्र दोषं विभावय ।

६—गव्यसर्पिष्पात्राणीमानि[3] क्रिमीयानीति वेत्थ किम् ?

७—मान्याः सदसस्पतयः ! बालोहमप्रगल्भवाक् । न मया परिशीलितचरं भाषणं सभासु । तेनोपेक्ष्या मे वाचि दोषा इति विनीतवत् प्रार्थये ।

८—परिवृत्ता सम्प्रति स्थितिः । दुराचारा[4] अपि जातिपङ्क्तिभ्यां बहिः कर्तुं न शक्यन्ते ।

९—कपाटं कश्चिदाहन्ति । कः कोऽत्र भोः ।

१०—सेयमुभयतस्पाशा रज्जुः ।

११—कान्तः सर्वगुणोपेतो बाले ! दुःखेन लभ्यते ।

१२—गृहाण भो तात मदीयभावम् ।

१३—मुनित्रयं नमः कृत्य व्याकरणं नित्यमामनेत्[4] ।

१५. जीवितं हि नाम जन्मवतां चतुःपञ्चान्यहानि (दशकु०)

---

१–१ भयमस्मानाक्रामत्, भयेनाविष्टा व्याप्ता वयमिति यावत् । २ प्रमाथो हिंसा । ३ कस्येमानि क्रिमीयानि । - दुष्ट आचारो येषां ते दुराचाराः (बहुव्रीहिः) । ४ अभ्यस्येत् ।

(८१) नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत् (वि०पु० १।२।२२)

(८२) पुण्यवन्तः प्रजिघ्नन्ति योगिवत् परसन्ततिम्।
वस्तु वृत्तानुरोधेन कथं तथा पुमान् जनः॥ (सुरेश्वराचार्यकृत-सम्बन्धवार्तिके)

(८३) सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः (कारिकावल्याम्)

(८४) पर्णमाहर सौम्य। अहमत्ययने नार्चीः।

(८५) अयं विरलं प्रतिदेहि शिरस्तैलेन। अयं तु प्रतिदेहि।

(८६) यदुच्छिष्टं प्राश्नाति (आप०ध० २।१।४।२)।

(८७) वसा शुक्रमसृङ् मज्जा मूत्रविट् कर्णविण्नखाः (१।५।८।४२ बौ०ध० व्याख्यायां गोविन्दस्वामिकृतायां मनुवचनम्)

(८८) नक्तं सुकृतो मे नास्ति, तत्र हेतुं न वेद।

(८९) मुहुर्मुहुर्निश्वसतीव मेदिनी (बुद्ध० १२।११७)।

(९०) इयं नः संस्कृतिर्नैकप्रदितो येव पुराणी युवतिः।

(९१) दैवदुर्विपाकेन सर्वोऽपि चिन्तितचरोऽर्थो व्यापद्येत।

(९२) मनस्तु येन कुत्सितं न्यधीयत (शिशु० )

(९३) हे करुणावति देवमातः, अधमोऽहं ते वेशं विस्मोकुम्। दत्तहस्तावलम्बा मां निस्तारय।

(९४) येन येन मृता वार्ता राजरेण युक्तेन वा। विरिद्धः पञ्जरस्थो वा प्रत्यक्षतस्तैव तत्र सः॥ (बृ०श्लो०सं० ५।८४)

(९५) मातरमुपरतां निशम्य सोऽन्तितरां व्यसीदत्।

(९६) कार्येण सखा वा किं वा शुश्रूः पीडयेत केवलम् (हितोप०)

(९७) पुरः करिष्यामि निजकाशि कृपाणिकाम् (शि० ग०)

(९८) टीकयन्ति गमकत्वार्थं टीका।

(९९) अप्रमत्तोऽसि यदकुशलं कर्म नापद्यसे, कुशले च नानुसज्जसे।

(१००) सम्राजते सम्यक् शोभत इति सम्राट्।

## अथ सुप्सु विवेच्यानि ।

### तत्र नाम्नामधिकारः प्रथमः ।

१—रोचते मेऽनुवादकला नाम पुस्तकम् । एका प्रतिर्मे प्रहीयताम् ।
२—तारकासुरं जिगीषन्तः कार्त्तिकेयं सेनानीमैच्छन्सुराः ।
३—त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ।
४—पूर्णचन्द्रनिभाननां सुभ्रूं पद्मपलाशाक्षीं मलपङ्कधरां दीनां सीतां दुःखेन व्यभावयन्मारुतिः ।
५—तपसैव सृजत्येतां विश्वसृक् सृष्टिमुत्तमाम् ।
६—प्राञ्चि काले कन्यकानामपि मौञ्जीबन्धनमभूदिति केचित् ।
७—सम्बन्धिनो हि तत्पत्युर्दायं हरन्तीति स्त्रियाऽकामयापि ते समाश्रयितव्या भवन्ति ।
८—हा पितः क्वाऽसि हे सुभ्रु बह्वेवं विललाप सः ।
९—[1]बह्वारुरीमानि तडागानीति नावगाह्यान्यनाविकेन ।
१०—आसां तिसृणामृचामर्थो न सुज्ञानः । विप्रतिपद्यन्तेत्र व्याख्यातारः ।
११—पोषकरं पूषाणं पोषं रयीणां नित्यमनुनाथामः[2] ।
१२—विरलाः खलु वेदशास्त्रमर्मणां वेदितारः, विरलतराश्च तदर्थानामनुष्ठातारः ।
१३—यवीयेभ्यो भ्रातृभ्यः किमाहृतं त्वया । बह्वी हि तेषु ते प्रीतिः ।
१४—ईदृंशि कर्कशान्यरुष्कराणि[3] त्वयोदीर्यन्ते वचनानीति किमात्मना नापत्रपसे ?
१५—त्रिंशद्भिरपि वर्षैर्नेदं शक्यं निर्वर्तयितुं[4] किमुत त्रिभिः ।
१६—सहस्रेण श्लोकैः संचिक्षेप नीतिशास्त्रमुशनाः ।
१७—ग्राम्याश्चतुष्पदो नृशंसैस्तैर्यवनैर्विनाशिताः ।
१८—यया लक्ष्यते प्रसिध्यतीति यावत्, सा लक्ष्मीत्यभिधीयते ।

---

१ बह्व्य आपोऽत्रेति बह्वाप्पि । २ याचामहे । ३ अरुः क्षतं (व्रणम्), तत्कुर्वन्तीति । ४ साधयितुम् ।

१९—वत्स ! तथा चेष्टस्व यथा ते वृत्तशीले विगतदोषे गुणवन्ती भवेताम् ।
२०—प्राक्तनं जन्मानभ्युपेयुषो यूयं तावद् ब्रूत ईश्वरे वैषम्यनैर्घृण्ये[1] कुतो न स्याताम् ।
२१—शक्यं षट्त्रिंशता वर्षैः साङ्गाः सरहस्याश्चत्वारोऽपि वेदा ग्रहीतुम् ।
२२—सर्वेषां चतुष्पदानां ज्वलनाद्भयं भवति ।
२३—प्रत्यूषसि समुत्थाय वातमासेवितुं बहिर्गच्छेच्चिरं च विहरेत् ।
२४—मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये पतौ ।
२५—सभासदानामाचारशुद्धिर्यशसे कल्पते[2] सभायाः ।
२६—प्रातरुत्थाय प्रसूं[3] तावन्नमस्कुर्यात्ततः पितरम् ।
२७—कैश्चनैर्विचारैः प्रयुक्तः सोन्ते गृहमहासीत्[4] प्राव्राजीच्च ।
२८—हरिद्वारे कुम्भमहोत्सवे नैकधां जनसंहतिं विलोक्य ऐक्यमापन्ना भरतदेशस्था इति वैदेशिका भ्रमन्ति ।
२९—ज्येष्ठे मासि विहायसे वितनुते नव्यो घनस्ताण्डवम् ।
३०—अङ्गो जातभङ्गो भयभृतोत्सङ्गरङ्गः कलिङ्गः ।
३१—नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥
३२—उर्वशी नामाप्सरा स्वर्गस्यालङ्कारोऽभूत्, श्रियाश्च प्रत्यादेशः ।
३३—अल्पायुषमेव जीवजातं निशाम्य[5] लोकस्यानित्यतां भावयेत् ।
३४—अद्यत्वे यथा तथा यतन्ते प्रख्यातिमधिगन्तुमना जनाः ।
३५—पादतलाघातेन नोदयन्तोऽर्वणो वयं क्षणैः कैश्चिदेव गृहमापाम[6] ।
३६—नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम् । विश्वासो नैव कर्तव्यः ।
३७—भगवान्भूतभावनः स्वेन सामर्थ्येनैव द्विपदानभावयच्चतुष्पदांश्च ।
३८—परः पापीयान्पराजेयः, निशितैर्वा क्षुरधारैर्यमसादनं[7] नेयः ।

---

१ नैर्घृण्यं निर्दयता । २ अलं भवति, समर्था भवति । ३ मातरम् । ४ ओहाक् त्यागे इत्यस्य लुङि । ५ शम लक्ष आलोचने इति चुरादेः शामयतेऽर्थेपि । ६ आप्लृ व्याप्तावित्यस्य लुङि । ७ यमसदनमेव यमसादनम् ।

*

(५०) यती व्रती चापि पतिव्रता च वीरश्च शूरश्च दयापरश्च।
त्यागी च योगी च बहुश्रुतश्च सुसङ्गमात्रेण दहन्ति पापम्॥

(५१) अत्यासत्तिर्विनाशाय त्वतिदूरं तु निष्फलम्
सेव्या मध्यमभावेन राजवह्निगुरुस्त्रियाम्॥

(५२) रे रे दुर्नागुणे आढकानि पक्वितं ते तुण्डम्। चिरमातः
परं काकपुत्रकात्।

(५३) शक्यार्थपरिग्रहेणान्वयानुपपत्तिं प्रतीत्य शक्यार्थ-
सम्बन्धिनमर्थान्तरं स्मरति।

(५४) पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः (मनु० १।४३)।

(५५) सा कदाचित् स्वपत्युर्गृहद्वारि पतिता मुमूर्षुरदृश्यत।

(५६) महामहिम! अनुकम्पा मम कोऽयमुपहासः।

(५७) इदमाह पुरात्मानं भगवान्विश्वसृक् पतिः (भा०पु० ५।२४। ७२)

(५८) वीतजन्मजरसं परं शुचि ब्रह्मणः पदम् (कि० )।

(५९) यदापि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि (भा० पु० ११। ८।१३)।

३९—सौधानि ते निर्मिमते नभः स्पृशः ।
४०—इत्थं चातुरीभाजैः प्रगल्भंमन्यैर्वा वाक्यमुत्तरं दीयते ।
४१—एक एव त्वादित्यः, द्वादशान्यस्य रूपाणीति वैदिकाः ।
४२—बौद्धमतारातिनो यतिनः श्री गोविन्दस्य शिष्यः स्वनामधन्यः श्रीशङ्करः साध्वनुससार गुरुसरणिम् ।
४३—नियते ! त्वमेव वद निर्घृण ! किमित्याजन्म दारिद्र्यसख एव विनिर्मितोऽस्मि ।
४४—अहं हरे ! त एवाऽस्मि । सपदि समुद्धर मां शुचः ।
४५—इयमेका वीणायास्तन्त्री विच्छिन्नेति समाधेया ।
४६—सुतनु ! जहिहि मानं पश्य पादानतं माम् ।
४७—हे उशनः, हे उशन, हे उशनन् ! ब्रूहि ब्रूहि यत्तवेष्टम् । अयमहं तत्सम्पादयामीति होवाच वृषपर्वा दैत्यराट् ।
४८—हे क्रोष्टः ! सम्प्रति विरम । किमिति सर्वरात्रं मुधा विरौषि ?
४९—मित्रेण गोप्त्रा वनानि पर्यटन्नहं न मनागप्यबिभयम् ।

———

## सर्वनाम्नामधिकारो द्वितीयः ।

१—गृहस्यैकतमे देशे न्यासो गुप्तप्रच्छन्नस्तिष्ठतीति चिन्तां मा गाः ।
२—एतयोरेकतरत्पुस्तकं मे देहि, निरूढकार्यस्त्वरितं प्रत्यर्पयिष्य ।
३—अमीषामन्यतमस्मै छात्राय पारितोषिकं दीयताम् । एतदेव पर्याप्स्यति ।
४—विश्वेऽस्मिन्नह्यनः परतरं पातकमस्ति यदनृतम् ।
५—तपसैव सृजत्येनां विश्वसृट् सृष्टिमुत्तमाम् ।
६—आर्येतराणां मिथः कलहाः किंकृता इति न न विदितं प्राकृतस्यापि ।
७—आर्येतराणां वेदे ऽधिकारो नाभ्यनुज्ञातः, तत्र कारणेन गुरुणा भवितव्यम् ।

२९— प्राच्यादीनामन्यतमस्यां दिशमुद्व्रजेत् (आश्व० गृ० ४।१२।४)
३०— हे देवदेव! के वयं त्वां चेतसा लब्धुमीहितुम्।



८—को नाम प्रजापतिरिति चेत्कस्मै देवाय हविषा विधेमेति मन्त्रवर्णे कायेति साधु स्यात्। तत्र कथं पश्यसि ?

९—न ह्यनृतादितरं महत्तरं पातकमस्ति।

१०—सर्वमिदं विश्वं ब्रह्मण्यन्तर्निविष्टम्।

११—पूर्वस्यामुदेति सूर्यः, पश्चिमस्यामस्तमेति च।

१२—स्वकपोलकल्पिता एताः कथाः। एताः को नाम प्रतीयात्[1] ?

१३—अद्यत्वे संस्कृताधीतिस्तु विशिष्टवर्ग एवैके दृश्यते न तु जनकाये[2] निर्विशेषम्।

१४—य इमेऽन्तरस्यां[3] पुरि वसन्ति ते निष्ठ्याः[4]।

१५—नायमर्थः प्रत्येकस्मै प्राणिने समं हित इति शक्यमध्यवसातुम्[5]।

१६—द्वये वा प्राजापत्या देवाश्चासुराश्च। द्वेधा च प्रवृत्तिर्द्वयेषाम्।

१७—ये नामोभयाल्लोकात्परिभ्रष्टास्ते हता हताशाः।

१८—अमुकपुत्रस्येदं गेहममुकेनामुकमूल्येन क्रीतमिति वितत्य पत्त्रे न्यस्येत्।

१९—दक्षिणस्या उत्तरां याति, उत्तरायाश्च दक्षिणां दिग्व्यामूढो यात्रिकः।

२०—नक्तं भीरुरयं त्वमेव तमिमं राधे गृहं प्रापय।

२१—या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति।

२२—गोये केन विनातौ वाम् ?

२३—एतयोरुभयजात्योः सम्बन्धविशेषः समस्ति।

२४—सर्वथा स्वात्ममानो रक्षणीयः प्राणैरपि धनैरपि।

२५—प्रभूताः स्वा[6] न दीयन्ते, प्रभूताः स्वा न भुज्यन्ते।

२६—नहि समेऽपि लोकाः सर्वत्र समं प्रवीणा भवन्ति।

२७—गुरो ! यदत्र [7]मयकाऽजानता कृत तन्मर्षितुमर्हसि।

२८— [illegible]।

---

१ श्रद्दधीत। २ कायशब्दः समूहवचनः। जनकाये जनतायाम् इत्यर्थः। ३ बाह्यायाम्। ४ चाण्डालाः। ५ निश्चेतुम्। ६ धनानि। ७ कुत्सितेन मया। सर्वनाम्नोऽकच्।

# अथ स्त्री प्रत्ययेषु विवेच्यानि ।

१—गिरः क्षोभकराः श्रुत्वा चिरं दूयते मे वयस्यः ।
२—तावकीयं मति र्न मामकी । मम त्वन्य एवाभिप्रायः ।
३—वसुन्धरे ! त्वमसि जडाजडाश्रया । नानुपपन्नः सङ्गदोषात् तेऽविवेकः ।
४—भयङ्करीयं मूर्त्ति र्दृष्टमात्रा लोमानि[1] मे हर्षयति[1] ।
५—त्वं मे प्राणानामीश्वरी, त्वद्विरहितो न जीवामि ।
६—इयं शूर्पनखीति रूपेण वृत्तशीलाभ्यां च विसदृश्यपि किंचित्सदृशी शूर्पणखायाः ।
७—पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
८—कल्माषां[2] कुथमास्तृणीहि । इयं हि साधीयोऽलङ्करिष्यत्यगारम् ।
९—एतादृशाया अवस्थायाः का प्रतिक्रियेति विभावयन्तु सुधियः ।
१०—गायत्रीविश्ववारेत्यादयो योषितोऽपि मन्त्रद्रष्टारो बभूवुरिति कस्तासामपकर्षं ब्रूयात् ।
११—पत्नी नाम गृहपत्नी । एतत्तन्त्रं हि गृहतन्त्रम् ।
१२—असौ सुकुमारा वल्ली वातेरितनवपल्लवाङ्गुलिभिर्नर्त्तयतीव ।
१३—यथा पतिमत्यामङ्गसंस्कारः शोभते न तथा प्रमीतपतिकायाम् ।
१४—चतुर्हायनेयं कन्यकाऽष्टहायनीरपि कुमारीरतिशेते मेधया ।
१५—पापीयं नापिती । इयं हि यत्र तत्र विग्राहयति लोकान् ।
१६—वीराः पतयो यासां ता वीरपतय इति वाच्याः स्युर्वीरपत्न्य इति वा । अत्र प्रमाणपुरःसरं स्वं मतं ब्रूहि ।
१७—त्रिपदा गायत्री भवति न तु त्रिपात् त्रिपदी वेति प्रमाणपुरःसरमुपपाद्यताम् ।
१८—अहो रम्यो वसन्तः । किमपि मञ्जुलं परभृता व्याहरन्ति सहचरैः समेताः ।
१९—ह्रीनिषेवाः[3] कलाङ्गनाः पादार्पितेक्षणाः सत्यो यान्ति ।

---

१—१ रोमाण्युद्गमयति, रोमाञ्चं करोति । २ चित्रां नानावर्णाम् । ३ लज्जावत्यः ।

२०—धर्मस्याम्नातृषु पर्षत्सु[1] रागद्वेषविनिर्मुक्ता ब्राह्मणा इष्यन्ते ।

२१—ख्रिस्तस्यैकोनविंश्याः शत्याः प्रथमार्धे श्रीदयानन्दनामा यतिर्बभूव यः प्रचरति हिन्दुमते बहु परिशोध्यं परिवर्त्य च ददर्श ।

२२—ऋचया यदुक्तपूर्वं तदेव साम्नोच्यते । अतएव ऋच्यध्यूढं साम गीयत इति च्छन्दोगा आमनन्ति ।

२३—इयं हि मे पाणिगृहीतिः सततं मय्यनुरक्ता नान्यं मनसाऽपि चिन्तयति ।

२४—विंशतिहायनीयं शालाऽद्यापि सद्यो निर्मितेव भाति ।

२५—इयं जरती, इयं च यूनी । तथाऽपि पूर्वा वपुष्मती सर्वदोद्युक्ता च । अपरा कृशा तुन्दपरिमृजा[2] च ।

२६—परस्य युवतीं रम्यां सस्पृहं नेक्षते कः ।

२७—पत्नी भर्तुर्धनहरी[3]या स्यादव्यभिचारिणी ।

२८—आश्चर्यम् । नेयमुक्तिरस्माकं श्रुतिगोचरी पुराऽभूत् । तेनैतां सहसा प्रत्येतुं न पारयामः ।

२९—सुन्दरयाऽनया शैल्या शिक्षिताश्छात्राः संस्कारं कमपि लप्स्यन्ते नूनम् ।

३०—सेयं सेव्यतां सुधीभिः सुरसरिदिव पावना देववाणी ।

३१—सितासिते सरिते यत्र संगते तत्राप्लुतासो[4] दिवमुत्पतन्ति[5] ।

३२—उषः ! चिरायुषी भूयाः, सुखं च जीव्याः ।

३३—यत्र दैवी सम्पदा विलयमेति तत्र विपदा उपनमन्ति ।

३४—नैजां क्षमतां तावत्प्रसाधय ततो यद्वाञ्छसि तत्ते भविष्यति ।

३५—अथार्थगुर्वी प्रसन्नां मधुरां वाचमवोचदच्युतः ।

३६—इयं व्याकरणपद्धती सुदूरं प्रकृष्यते पद्धत्यन्तरेभ्यः ।

३७—त्वां कामिनो मदनदूतिमुदाहरन्ति ।

३८—इमाः समुत्सादकराः प्रथाः सर्वात्मना निरोद्धव्याः ।

३९—सिन्धुदेशे महेञ्जोदाड़ोरित्यत्र चिरन्तना मृन्मयाः काश्चन मुद्रा अभ्युत्थानकैर्लब्धाः ।

---

१ परिषत्सु । २ अलसा । ३ दायभाक् । ४ स्नाताः । ५ इत्यृग्वेदे खिलपाठः । ६ समुत्सादो नाशः ।

४०—परं हि प्रावीण्यमस्यार्हतस्य[1] प्राकृतायां वाचि ।

४१—केषां वा नावतंसयति श्रवणयुगलीं कुन्दकुसुमावदाता कीर्तिरेषाम् ।

४२—गभीरोऽयमर्थो न सहसाऽवसेयः, विवेकिनामपि सन्देहदोलास्पदां करोति मनीषाम् ।

४३—को नाम सहेत शेमुषीमुषीमरुन्तुदामीदृशीं न्यक्क्रियाम्[2] ।

४४—इयमेवाशरण्यशरणा सुरभारती सम्प्रति स्वयं शरणं मृगयते ।

४५—इष्टानिष्टप्राप्तिपरिहारेच्छा खलु स्वाभाविकैव ।

४६—को नाम हृदयधाम्न्यै श्रियै न स्पृहयति । निःश्रीकस्य हि निरालोको लोकः ।

४७—प्राचीनासु प्रथासु प्रीतिमांस्त्वं नूतनीषु कमपि गुणं नेक्षसे । तदयुक्तम् ।

४८—फलाभिलाषा हि प्रायेण प्रयोजयति प्रवृत्तिं लौकिकीं वैदिकीं च ।

४९—देवतार्चनपरा हिन्दवो देवतायतनानां परिक्रमां कुर्वन्ति ।

५०—कतिपयाः कालिदासीयाः सूक्तयः संगृह्यन्ते भूयसे रसास्वादाय ।

५१—किङ्करा इमाः स्त्रियः स्वामिनि भक्तिमत्यः सर्वात्मना नियोगं निर्वाहयन्ति ।

५२—तामैक्षन्त क्षणं सभ्या दुःशासनपुरःसराम् ।

५३—विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ( अमरे ) ।

५४—पीवरोरु ! पिबतीव बर्हिणः ( कुमारे ) ।

५५—संचयशीलेयं भिक्षुणी न मात्रयाप्यपरिग्रहव्रतं चरति ।

५६—सुधाधरीस्तस्य वाचो निशम्यानास्वादितपूर्वं कमपि रसमन्वभूवम् ।

५७—इदानीन्तनासु भाषासु संस्कृत इव समुदायावयवानामभिव्यक्ति-र्नालोक्यते ।

५८—आविष्कारप्रधाना विंशतितमेयं शताब्दी विलासप्रियत्वं वर्धयतीति नापरोक्षम् ।

---

१ आर्हतो जैनः । २ अवमाननाम्, तिरस्कारम् । ३ वदे इति सप्तम्यन्तम् । आम्नातमभ्यस्तमेभिरिति आम्नातिमः । क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति कर्मवाचिनि वेदशब्दे सप्तमी ।

५९—पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
६०—बहुश्रेयसी वैदिकधर्मरक्षेति वेद आम्नातिनः ।
६१—कस्येयं रम्या रशना त्रिसूत्री ?
६२—इयमार्षा भणितिः कस्य नाम नावर्जयति चेतः ?
६३—यदि बुद्धिरेव ग्रन्थानामादेयानादेयत्वे प्रमाणा तदा किं नाम वेदादीनां स्वतः प्रामाण्यं स्यात् ?
६४—ते प्रभविष्णवः प्रभवन्ति नः । तेषु वयं काष्ठपुत्तलिकामात्रा एव स्मः ।
६५—अविनश्वराऽऽकल्पान्त'स्थायिनी कीर्तिरस्य महात्मनो भविष्यति येन चिरं परदास्यं गतोयं देशः स्वातन्त्र्यं लम्भितः ।
६६—स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं मुनिना कृपया कृतम् ॥ ( भागवते १।४।२५ )
६७—महदन्तरं नरं देवदत्तस्य च यज्ञदत्तस्य च । असावस्य शततमामपि कलां नार्हति ।
६८—यस्त्रैवर्णिकः शूद्रीं तल्पमारोपयेत्, मन्ये स पतितः स्यात् ।
६९—इयं क्षीरपी क्षत्रिया । इयं सुरापी । अतो भिद्येते शीलेन ।
७०—अनुचरी प्रियतमा मदालसा ।
७१—गतगतः, नष्टनष्ट इत्याबाधमाचष्टे । आबाधो बाधेत्यनर्थान्तरम् ।
७२—कुवलयदलनीला कोकिला बालचूते ।

---

## अथ विभक्तिषु विवेच्यानि ।

### तत्र कारकविभक्त्यधिकारः प्रथमः ।

१—नहि व्यवहितविप्रकृष्टमप्यर्थजातं सुधियामगोचरः । न हि तेषां किमपि दुर्घटमस्ति ।
२—को वर्णयेन्नृपगुणान् परश्शतेष्वपि श्लोकेषु ?
३—तरन्ति सन्तो जगतो महान्तः ।

४—दिष्ट्या शास्त्रपरीक्षायामुत्तीर्णोऽसि ।
५—दयानिधिरपि त्वं कथं न दयसे मयि ?
६—ये सर्वायुषि सत्क्रियां द्विषन्ति सुकृतिषु चासूयन्ति तेऽधमाः ।
७—यो राजभिरर्चितस्तं लोकोऽर्चतितराम् ।
८ त्रिचतुरेष्वहःसु कृत्यमेतन्निर्वर्तयितास्मीति सम्भावयामि ।
९—वाहयति रथं वाहैः सूतः ।
१०—महात्मनो दर्शका जना नानादिग्देशेभ्यः संनिपतन्ति ।
११—दुर्बलाः प्रबलेभ्यो नमस्कुर्वन्ति शिष्टाश्च दुष्टेभ्यः ।
१२—भगवता सूत्रकारेण स्वं शास्त्रमष्टास्वध्यायेषु निबद्धमित्यष्टाध्यायी-समाख्यया तत् प्रथते ।
१३—को नाम सुधीश्चलाचलान्प्राणान् प्रति मानं यच्छेत् ?
१४—आत्ययिकं[1] कार्यं सम्मन्त्रयमिति वसुधाधिपः सभासदः सभामाहूतवान् ।
१५—उभयोर्नाशोऽवश्यं भाव्यः ।
१६—देवदत्तोऽधीती व्याकरणे, आम्नाती च च्छन्दसीति धन्यतमः पुंसाम् ।
१७—आन्दोलयन् शिशिरमेककरेण सार्धम् ( हनुमन्नाटके ४।१ ) ।
१८—तौ पापौ शङ्करं गरलं खादयामासतुः ।
१९—यथा तद्भवितव्यमासीत् तथा भूतम् । भवितव्यतैव गरीयसी ।
२०—रामश्चतुर्दशभ्यो वर्षेभ्यो वनं गच्छेद् इत्येको मे वरः ।
२१—त्वया पाठशालां गन्तव्यम्, अतिक्रामति कालः ।
२२—हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीम् ।
२३—पथि श्रेयसि प्रणीय लोकं लोकान्तरं प्रस्थितः श्रीचित्तरञ्जनदासः ।
२४—घोरायां निद्रायां शेरतेऽमी अनात्मज्ञाः ।
२५—परमात्मनि संश्रितः सत्यव्रतो न कुतश्चन बिभेति ।

---

१ अत्ययः विनाशः प्रयोजनमस्येति । विलम्बासहम् इत्यत्रार्थे उपचर्यते ।

२६—भ्रमरो हि भ्रमंस्तत्र पुष्पाणां चिनुते मधु ।

२७—शान्तो मुनिर्मृदुर्भर्त्सने द्विषद्भ्यो मृदुरागस्कृद्भ्यः[1] ।

२८—यतिर्नाम न परस्य कस्यचिद्द्वेष्टि न च क्वचित्सविशेषं रज्यते ।

२९—तव चिकीर्षितं देशोन्नत्यभ्युपायं जिज्ञासे ।

३०—ब्रह्मैव जगद्रूपे परिणतमित्याहुरविद्वांसः ।

३१—कामं मुनिवेषोऽयं नरं नैव मुनिर्भवितुं शक्यः ।

३२—तनुरियं[2] ते तनुरसहिष्णुरातपस्य । तेन मुहूर्तं प्रच्छायशीतलेऽस्मिं-स्तरुतले विश्रमयात्मानम् ।

३३—दूरक्षाः स्त्रिय इति न तासां जन्मन्युत्सवो भवितुं शक्य इति केचि-दुत्प्रेक्षन्ते ।

३४—यो ह्यध्ययनात्परिग्लानः[3] स दुःखं तत्र प्रवर्त्य इति सत्यम् ।

३५—सहोदराणामिव परस्परं प्रीतिमन्तः परस्परमनुव्रताश्च लोका अभ्युदयन्ते[4] ।

३६—प्रायेण पापो दुर्गतो जनः स्वं कर्मानुपालभ्य [5]परिमृष्यति दैवाय ।

३७—न वार्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे । ( मनुः ४।१९२ ) ।

३८—ये वदितारो जनापवादान् ग्रहीतारो वोत्कोचांस्ते[6] हीयन्ते परत्रेह च शर्मणः ।

३९—स्यन्दन्ते[7] सरितः सागराय, न च सर्वाः समुद्रगा भवन्ति ।

४०—किं कार्यं ते महाभाग ? भगवन्तमभिवादक एवागतोयं जनः । कार्यान्तरं त्वस्य नास्ति ।

४१—गङ्गायामाप्लवमानस्य[8] कूपेभ्यः किं प्रयोजनम् ?

४२—पितुश्चरणयोर्नमति प्रातरुत्थितो भक्तिप्रह्वस्तनूजः ।

४३—महीं क्षियतीति[9] महीक्षिद्राजोच्यते ।

४४—यदेकस्मै प्रियं नावश्यं तत्सर्वेभ्यः प्रियं भवेत् ।

---

१ आगोऽपराधः । २ तनुरल्पा, कृशा । ३ क्षीणोत्साहः, असमर्थः । ४ उन्नमन्ति, समृध्यन्ति । ५ असूयति । ६ उपग्राह्याणि । ७ स्रवन्ति । ८ स्नानमाचरतः । ९ निवसति ।

४५—पञ्चसु वर्गेषु विभक्ताः कादयो मावसाना वर्णाः ।
४६—अधर्मं धर्ममिति यो मन्यते स तमसाऽऽवृतो निरयाय राध्यति ।
४७—स भगवान् भूमिं सर्वतः स्पृत्वा[1] सर्वप्रदेशेष्वधिष्ठित इति पुरुष इत्युच्यते ।
४८—उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनं चेति पञ्च कर्माणि वैशेषिकैः परिगणितानि । भ्रमणरेचनादीनि गमनस्यान्तर्भवन्तीति पृथङ् नोपात्तानि ।
४९—तपः शब्दार्थेऽप्यशिक्षितास्तपसि वर्तन्त इत्यहो साहसिक्यम् ।
५०—एते हि तीर्थध्वाङ्क्षा इवानवस्थिता नैकत्र शक्नुवन्ति चिरकालाय स्थातुम् ।
५१—अनभिमतार्थोदयेन संत्रस्ताः केचिज्जिज्ञासामेव निषेधन्ति शास्त्रार्थस्य ।
५२—अध्वखेदपरिक्लान्तमेतं तुरंगं शिवकेन[2] बधान ।
५३—अयं ग्रन्थो यावानादृतस्तावानस्य समादरोऽल्पीयानेव ।
५४—शार्मण्यानां वाङ्मये बहूपादेयमस्तीति तत्रत्यानि कानि चिदुपाख्यानानि संस्कृते परिवर्तने [3]प्रसितोऽभूवम् ।
५५—विज्ञापयामि पठकप्रवरांस्ते[4] मां पुस्तकान्तर्गताभिस्त्रुटिभिः सूचयिष्यन्तीति ।
५६—यथा यथा हि पुरुषः शास्त्रं समधिगच्छति । तथा तथा विजानाति विज्ञानं चाऽस्य रोचते ॥ ( मनुः )
५७—यावन्मार्जारलिङ्गिनो बकवृत्तयो वा लोकस्यार्चिता भवन्ति न तावद् विद्याया धर्मस्य वाभ्युत्थानं भवितुं शक्यते ।
५८—सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् ( मनुः ) ।
५९—निसर्गत एवेन्द्रियाणि भुक्तपूर्वानर्थान् प्रवणानि[5] भवन्ति । तेभ्यस्तानि प्रत्याहर्तव्यानि ।

---

१ स्पृ प्रीतिपालनयोः स्वादिः । २ कीलकेन । ३ प्रसक्तः, व्याप्तः । ४ पठतीति पठः, स एव पठकः । ५ निम्नानि अभिमुखानीत्यर्थः ।

६०—भावितात्मानं[1] हि पूरुषं धर्माधर्मौ हस्तामलकवद् भासेते ।

६१—यो हि विरक्तो नाम[2] भूत्वा स्वैरनुरज्यते स लोकमतिसन्धत्ते ।

६२—ईश्वरः सर्वेषु चेतनाचेतनेष्वर्थेषु समं व्याप्तः ।

६३—सुखं वा दुःखं वा स्वस्य कर्मणां विपाक इति जीवेभ्यः प्रतिपद्यते ।

६४—साकारो हि परमेश्वरो देशकालवस्तुषु परिच्छिन्न इति व्यापकता विहन्यते ।

६५—ब्रह्म हि विश्वरूपे विवर्तते[3] न तु परिणमत इत्यद्वैतिनः शाङ्कराः ।

६६—तत्राधिवासिनामार्य्यागामनार्यसङ्गमात् परिवृत्तः समुदाचारः ।

६७—परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् ।

६८—यो दुष्टे वर्त्मनि संचरते स आत्मनि शत्रूयते ।

६९—इदं चौपनिषदेभ्यो वचनेभ्यो विरुध्यत इति नेक्षितं भवता ।

७०—अस्मभ्यं तु श्रीशङ्करप्रभृतयोऽधिकप्रज्ञानाः प्रतीयन्ते ।

७१—संयतांश्च[4] विविधाः सेवाः कारयन्ति, मुञ्जं कुट्टयन्ति, रज्जुं वर्तयन्ति धान्यं च पेषयन्ति ।

७२—अनिच्छताऽपि यजमानेन पुरोहितं दापयन्ति धेनुं बान्धवाः ।

७३—शिष्या[5] दुर्जनाः, चौराश्च चोरितकं[6] दाप्या नृपेण ।

७४—इयं हाटकेन निर्मिता मूर्त्तिरियं च रजतेन ।

७५—तेन चौरेणैकदा चोरिकायां किमपि नाधि ।

७६—मोहम्मदस्य मतस्य मूलमेव कपटानृताभ्यां निबद्धम् ।

७७—चिरं विप्रयुक्तोस्मि प्रियवयस्यैः, तेनामी समुत्कण्ठन्ते मयि ।

७८—न खलु व्याकरणेऽभिज्ञोऽसि, यदेवमन्यथा व्युत्पादयसि पदानि मिथ्या[7] च कारयसे[7] ।

७९—वधूं नवे वाससी परिधाप्य विवाहमण्डपे संनिधापयन्ति ऋत्विजः ।

८०—न हि निपुणोऽपि स्वस्कन्धे समारोढुं क्षमः ।

---

१ पूतमनसम् । २ नामेत्यलीके । मिथ्या विरक्त इत्यर्थः । ३ अतत्त्वतोऽन्यथा प्रथा विवर्तः । ४ बद्धान् बन्दीरिति यावत् । ५ शासनीया दण्ड्या इति वा । ६ सं[illegible], चौर्यप्राप्तं धनम् । ७—७ असकृद् अन्यथोच्चारयसि ।

८१—मूढधियां सेवित एष पन्थाः। तस्मादिमं माऽऽस्थाः[1]।

८२—दुराचारो हि पुरुषो नार्हति भवार्णवादुत्तरीतुम्।

८३—तरुफलशातनाय[2] निषिद्धा अमी दुर्वृत्ता बटवो न चापलं विरमयन्ति।

८४—नृशंसास्ते बालेष्वपि मनागपि नादयन्त।

८५—अनूबन्धं[3] विजानन्नहमेतदकरवम्। नाहमेनेनाऽनुशये[4]।

८६—न जाने केन कारणेन ( गुरूणां ) शिष्या हिन्दूनां रक्तस्य पिपासवः।

८७—मिथ्या तापसाः केचिद्‌बालान् सान्त्ववचनेन मृष्टान्नेन च प्रेर्य कुटुम्बिभ्यो वियोजयन्ति।

८८—सर्वशक्तिरीशो यस्मै कामयते तमुग्रं करोति, तमृषिं तं सुमेधसम्।

८९—यदयं देवदत्तस्य कार्यसिद्धिं प्रतिहन्ति[5], एतेन स तस्माद्वैरं निर्यातयति।

९०—ऐन्द्रजालिको हि सत्त्वमसत्त्वरूपे विपरिणमयत्यसत्त्वं च सत्त्वरूप इति भाति।

९१—य आतृणत्ति[6] कर्णावमृतं च सिञ्चति कस्तस्मा अभिद्रुह्येदमूढः?

९२—यन्मनुष्यादिप्राणिजातस्यान्नोदकादि प्रयच्छति तद्विधातुर्विधातृत्वम्।

९३—वितरति गुरुः प्राज्ञे विद्यां यथा तथैव जडे।

९४—न जातु संकटे पतिता विमुह्यन्ति धीराः, तेन नेदं वैक्लव्यं संभाव्यते युष्मादृशेभ्यः।

९५—दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते।

९६—आध्यादीनां विहर्तारं धनिने दापयेद् धनम् ( याज्ञ० २।२६ )।

९७—किमिति वृथा प्रकुप्यसि मयि? नाहं ते किमप्यपाकरवम्।

९८—इदानीमहमीर्ष्यामि स्त्रीणां जनक नो पुरा (बौ०ध०सू० २।२।३४)।

---

१ आङ्पूर्वात्तिष्ठते लुङि। मा समाश्रयेत्यर्थः। २ शातनं निपातनं भवति। ३ उदर्कम्, उत्तरं फलम्। ४ पश्चात्तप्ये। ५ विहन्ति, वज्ञ विघ्नं करोति। ६ विवरं करोति।

९९—न केनचिद् द्वेष्टि न स्निह्यति कस्यचित् ।

१००—यदि वयमेवात्र न प्रणिदध्मस्तदा[1] कोऽन्यः प्रणिधास्यति ।

१०१—त्रिदेशाधिपतयो भारतं युद्धभयं दर्शयन्ति । मिथ्याविभीषिकेयमिति च स्वयं विजानन्ति ।

१०२—दिष्ट्या मासत्रयात्प्रवृत्तस्य विवादस्याद्य निर्णयो जातः ।

१०३—देवदत्तो नाम[2] विदुषामनुरागी नित्यं च वृद्धोपसेवीति प्रशस्यते लोकेन ।

१०४—संस्कृतशब्दव्यवहारो हिन्दुजात्यै न सुपरिहरः ।

१०५—शास्त्रविस्तरो महति परिमाणे यथा स्यात्तथा यतितव्यं सुधीभिः ।

१०६—यः पुराणकथाभिरपरिचितः स वेदार्थं कथमुपबृंहयेत् ।

१०७—को नाम प्रतिनिविष्टजनचित्तमाराधयेत् ? केवलं परमेश्वरः सुमतये सम्प्रार्थनीयः ।

१०८—अथ ब्राह्मणैः स्वस्ति वाचयति ।

१०९—यवनेभ्यः स्वमतान्धेभ्यः को नाम संभावयेत् परमतमर्षणम् ?

११०—आर्याः परमेश्वरं प्रत्यहरहः प्रार्थयन्ते शं नो भवतु द्विपदे शं चतुष्पद इति ।

१११—नाटिका हि प्रायेण चतुर्ष्वङ्केषु पूर्यते ।

११२—वेदादिषु ग्रन्थेषु विद्विषन्तोऽनार्य्यास्तेष्वनार्यमाचरन्, तत्कृतं लोकस्य ज्ञानविपरिलोपं च नापश्यन् ।

११३—अनक्षरप्रायेभ्यो भिक्षुकेभ्यो विद्योपादित्सा गगनकुसुमेभ्यः सौरभ्यजिघ्रासेव ।

११४—[3]अनुच्छित्तिधर्माऽयमात्मेति न भरतवर्षीयेभ्यो बोधनीयं भवति ।

---

१ चिन्तयामः । २ नामेति प्राकाश्येऽभ्युपगमे वाऽव्ययम् । अयमर्थो लोकस्य प्रकाशः ( विदितः ), तेनाभ्युपगतो वा । ३ उच्छित्तिर्नाशः । तदभावोऽनुच्छित्तिः । सा धर्मः स्वभावोऽस्येति विग्रहः ।

११५—इदानीं सर्वनाशे स्वल्प एव समयोऽवशिष्यते। अद्यापि न जाग्रति लोका इति चित्रम्।

११६—विबुधभारत्याः प्रणयिन इह मनागवदधताम्।

११७—संस्कृतज्ञा लोकव्यवहारेण नितरामनभिज्ञा इति दूषणं न तु भूषणम्।

११८—अपरिचिता एव लोकवृत्तान्तेभ्यो भवन्ति कुमारा यावद् वृद्धान्नोपासते।

११९—पुराकालस्य तु परमेश्वरो विजानीयात्, अद्यत्वे तु वाङ्मात्रेण धर्मे समादरो लोकस्य।

१२०—इदं च संस्कृतं पिपठिषून् सर्वप्रथमं बोद्धव्यं कृशा हि नो[1]वृत्तिरिति।

१२१—यावच्छक्यं सन्मार्गपथिकता लोकान्नेतव्या [2]श्लक्ष्णैर्वचोभिः।

१२२—नहि शुकवच्छक्यते पाठयितुं बालान्।

१२३—यादृशी [3]प्रवचनशैली साम्प्रतं प्रचरति सैवास्माभिश्छात्रेभ्यः शिक्षणीया।

१२४—परोपकाराय नियुक्तचेतसां यत्सुखं न तत् स्वार्थानाम्[4]।

१२५—ब्रूहि सुग्रीवं वानरानाहूय सर्वासु दिक्षु विदिक्षु च ते प्रेष्यन्ताम् इति।

१२६—सखीजनादात्मवञ्चनावृत्तान्तं श्रुत्वा सा परं विषसाद।

१२७—सापराधे अहिले शिष्ये भृशं कुप्यन्ति गुरवः।

१२८—न्यग्भूतस्य योधस्य मुखं भूमौ स्पर्शयति प्रतियोधः।

१२९—अस्माकं पूर्वजानां पुस्तकानि पठितुं न प्राप्यन्ते स्म।

१३०—अहो बत महत्कष्टम्। य एव दुःस्मरः कालस्तमेव स्मारिता वयम्।

१३१ अनृतं हि [5]पतनीयेषूत्तमम् इतीदं बलवज्जुप्सन्ते शास्त्रकाराः।

१३२—किमिति बद्धलक्ष्यो भवानिमां स्थालीं होराभिर्बह्वीभिर्निध्यायति।

१३३—दिशि दिशि परीताऽस्य विदुषः कीर्तिराचन्द्रदिवाकरं स्थास्यति।

१३४—यदि कल्पस्य कलितो कश्चिद् गृह्योक्तानि कर्माणि संशोधयेत्संक्षिपेच्च तदा लोकस्यानल्पमुपकुर्यात्।

---

१ जीविका। २ मसृणैः,चिक्कणैः,कोमलैरिति यावत्। ३ अध्यापनविधिः।
४ स्व एवार्थः प्रयोजनं येषाम्, ते स्वार्थाः, तेषाम्। ५ पतनीयं पापम्।

१३५—अयं श्रुतपूर्वी भारतं तेनाऽस्य विदिता वृत्तान्ताः कुरुपाण्डवानाम् ।
१३६—अत्रावसरे सहानुभूतिं निवेदयामः संस्थितस्य[1] कुटुम्बेन ।
१३७—न वाञ्छि स्वातन्त्र्यं ददति लोकं प्रति शासितारः ।
१३८—इह भारते पतिमन्वारोहणमप्यकारि स्त्रीभिः साध्वीभिः ।
१३९—मन्ये मूर्तिमदस्य पापजातं समुदस्थीयत ।
१४०—शयनमुज्जिहान एवासौ प्रथमं मातुश्चरणयोर्नमति ततः पितुः ।
१४१—न तेन गणिकासुता चरणसेवया हापिता[2] ।
१४२—इदं नो वाचकेभ्यः सानुरोधमभ्यर्थनम् ।
१४३—असकृद् व्याख्यातमपीदं नास्माकं मतावारोहति ।
१४४—मध्यरात्रमपि प्रजागरे नयन्तस्ते नाप्तकामा अभूवन्निति चित्रम् ।
१४५—संस्कृतभाषायाः सर्वसाधारणे कियानादर इति न विदितं ते ।
१४६—दारिद्र्यदुःखदग्धाय स्वदेशाय तस्य हृदये कापि वेदना नाभूत् ।
१४७—लोका लोभाय धर्मस्य बलिं ददति प्रायेण, तेन [3]न्यञ्चन्त्यहरहः ।
१४८—अहं हि भवतां छायेवानुगत इति परिपाल्यो भवद्भिः ।
१४९—तस्मिन्समये धर्मशास्त्रनिबन्धा अपि तस्मिन्नेव रागे रञ्जिता अभूवन् ।
१५०—मूलस्य रक्षणमविगणय्य न जातु शाखानां समृद्धिर्भवितुं शक्या ।
१५१—शिवादयः शब्दाः शवादिषु परिवर्त्य लिख्यन्ते कैश्चिदानुपूर्व्यामनादृतैः[4] ।
१५२—सायन्तनं सवनकर्म सम्प्रवर्तयिष्याम इति सलिलेऽवगाहन्ते मुनयः ।
१५३—गुरुजनमनुसरन्तश्शिष्या अवतीर्णा निम्नगायामभिषेकाय ।
१५४—विद्यायाः सहचारी विनयो यवनेभ्यो नतरां संभाव्यते ।
१५५—भीतो बाल आगन्तुकं क्व मेऽम्बेति क्षीणतरे स्वरे पप्रच्छ ।
१५६—भद्र ! कां कलां वेत्थ, किंवा शिल्पम्, का च ते भृतिर्जिघृक्षिता ?
१५७—केचित्प्रजासु प्रकोपमिच्छवो वर्तमानावस्थितेरसन्तुष्टा विधित्सन्ति ताः ।

---

१ मृतस्य । २ त्याजिता । ३ अधो गच्छन्ति । ४ कर्त्तरि क्तः । अकृतादरैः ।

१५८—इहाऽपां पूर्णानि पात्राणि यत्र तत्र निहितानि वह्न्युत्पातशमनाय ।

१५९—कृतज्ञो हि स्वस्योपकारिणं स्निह्यति, प्रत्युपचिकीर्षति च ।

१६०—न वयमनृतिकस्य ते वचसि श्रद्दध्मः, कदाचिद्वञ्चयेथा[1] नः ।

१६१—पुरा धनिका विदुषां पुरस्कारेण विद्यायै स्वं प्रेमाणं प्रकटयन्ति[2] ।

१६२—हिन्दवोऽधुनापि मौहम्मदेभ्यो मैत्रीं मृगयन्ते ।

१६३—एधानाःमाहारका ग्रामीणा वनानि प्रस्थिताः ।

१६४—शूद्राः स्वकर्मनिरतास्त्रीन् वर्णानुपचारिणोऽभवन् ।

१६५—व्यवसायस्याश्रिता सम्पद् इति लौकिकाः परीक्षकाश्च ।

१६६—कुतो वा कस्माद्वा सोऽभिभूत इति जिज्ञासते जनः ।

१६७—प्रद्वेषैकप्रयुक्ता यवनाः सोमनाथमूर्त्तिं प्राहार्षुः ।

१६८—संस्कृतावहेलनं भारतवास्तव्येभ्यो न शोभते ।

१६९—विदेशात् परावृत्तं भ्रातरं प्रति तत्तद्विषयकान्कांश्चित्प्रश्नानकार्षम् ।

१७०—वसुमित्रो मत्तः काशिकाविवरणं न्यासमग्रहीत्, तत्परिवर्ते च शब्दकौस्तुभं प्रादात् ।

१७१—न जाने जीवननौका केन घट्टेन सह प्रह्वियेत ।

१७२—ममैव हृदयं तावत्स्वार्थपरतायै प्रमोदासक्त्यै च मां धिगकार्षीत् ।

१७३—इमे सुधियः पद्यगुम्फने न तथाऽभ्यस्ता यथा गद्यनिबन्धने ।

१७४—करुणानिधे प्रभो ! अहं हि ते शरणमागतोस्मि । किमिति नाभ्युपपद्यसे[3] माम् ?

१७५—मासस्यावकाशमादाय स गृहं गतो बन्धून्द्रक्ष्यामि तैः संवत्स्यामि चेति ।

१७६—प्रतिपाद्यतया हि सर्वो लोक उपनिषदामन्तर्निविष्टः ।

१७७—वैधस्यामस्यां[4] सृष्ट्यां नानर्थकं किञ्चिदस्ति । अर्कपत्राण्यपि तीव्रविषाण्युपयोगे नीयन्ते का कथेतरेषाम् ।

---

१ गृधिवञ्च्योः प्रलम्भन इत्यात्मनेपदम् । २ पुरि लुङ् चास्मे इति लट् । ३ अनुगृह्णासि । ४ वेधस इयमिति वैधसी, तस्याम् ।

१७८—अद्यत्वे सर्वत्र कृतकता लक्ष्यते। यत्सत्यं मानव्य इमाः प्रजाः सहजाच्चरिताद् दूरं वियुक्ताः।

१७९—व्यसनिनो मूढाः कुलाङ्गाराः [1]कुमारकुलटाभिर्मनोमृगं बध्नन्ति।

१८०—पुस्तकभारवहनेपि जिह्लियतीदानीन्तनाश्छात्राः।

१८१—दिष्ट्या मत्पतिः साम्प्रतिकेभ्य एभ्यो व्यवहारेभ्यो विरुद्धोऽस्ति।

१८२—इदानीं वयं पदाति गन्तुं न प्रभवामः। महान्नोऽध्वखेदः।

१८३—आचार्यस्य भगवतः पाणिनेः सूक्ष्मेक्षिकायां सर्वज्ञकल्पतायां च परं विस्मये।

१८४—यदीच्छसि जगत्सर्वं वशीकर्तुमयत्नतः। परापवादसस्येषु चरन्ती गौर्निवार्यताम्॥

१८५—अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक।

१८६—सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन्। द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः॥

१८७—अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे।

१८८—स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः ( कुमारे ६।५२ )।

१८९—साम्प्रतमुत्तरभारताद् हिन्दूराज्यमेकान्ततो विलुप्तम्।

१९०—पयःपानं भुजङ्गानां केवलं विषवर्धनमिति जानन्तोपि हिन्दवस्तेभ्यः पयः पाययन्त्येव।

१९१—नगरवर्णनमपि सिद्धगवीनां[2] कवीनां प्रतिभापरीक्षायै निकषः परिगण्यते।

१९२—नाहमन्येषां सम्राजामिव स्वं जीवितं विषयोपभोगे क्षपयितुमीह इति सुतं प्रत्यवरङ्गजीवस्य हृदयोद्गारः।

१९३—दुर्जनः सर्वैरविशेषेण विश्वासघातं करोति। स तस्य स्वो भावः।

---

१ कुमारी चासौ कुलटा च। कुमारः श्रमणादिभिरिति समासः। २ सिद्धा गौः वाग् येषाम्, तेषाम्।

१९४—कौसल्यया रामो जातः सुमित्रया च लक्ष्मणः, तथाविधं च तयोः सौभ्रात्रमिति[1] चित्रीयते[2] लोकम् ।

१९५—इदं तु भवतां विदितचरमेव संस्कृताधीत्यामनुरक्तोऽहं न किमप्याभीलमगण्यम्[3] ।

१९६—फलैर्नानारसैः शुद्धैः स्वादुशीतैश्च वारिभिः । तृप्तास्तां भ्राजथुमती[4]मपृच्छन्कस्य पूरियम् ॥

१९७—एतमातं ङित्तं विद्याद्वाक्यस्मरणयोरङित् ।

१९८—विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

१९९—धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥

२००—पक्त्वौदनो भुज्यते ।

२०१—वक्ष्यति कर्मणि द्वितीया ( काशिकायां वृत्तौ ) ।

२०२—एतद्देशजा दासवदनुकुर्वन्त्याङ्गलानाम् ।

२०३—वदन्त्यपर्णामिति तां पुराविदः ( कुमारे ५।२८ ) ।

२०४—रावणस्येह रोक्ष्यन्ति[5] कपयो भीमविक्रमाः ( भट्टौ ८।१२० ) ।

२०५—अपि सिक्तः कृशानौ त्वं दर्पं मय्यपि योऽभिकः । (भट्टौ ८।९२) ।

२०६—प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् । चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ( कुमारे ६।८१ )

२०७—मुनित्रयं नमस्कृत्य गुरून् ध्यात्वाथ भक्तितः । शब्दापशब्दयोरेष विवेकः प्रवितन्यते ॥

२०८—न पठेद्यावनीं भाषां प्राणैः कण्ठगतैरपि ।

२०९—धन्यास्ते ये मनसा वाचा कर्मणा च हिंसावृत्तेर्विवर्जिताः ।

२१०—मुच्यते सर्वपापेभ्यो विष्णुलोकं च गच्छति ।

२११—सर्वैः पापैः प्रमुच्यते ।

---

१ शोभनो भ्राताऽस्येति सुभ्राता । 'वन्दिते भ्रातुः' कबभावः । तस्य भावः सौभ्रात्रम् । २ चित्रीकरणं विस्मयनं विस्मापनं च । तेन लोकमित्यत्र द्वितीयोपपन्ना । ३ आभीलं कष्टम् । ४ दीप्तिमतीम् । ५ रुजो भङ्गे इत्यस्माल्लृटि ।

२१२—पुरा प्रजाः प्रजेशानन्वरज्यन्[1] विरलमेव च तानद्रुहन् ।

२१३—इतः कान्यकुब्जो नाम विशालो जनपदः, यत्राङ्गपालो नामावनिपतिरीष्टे स्म ।

२१४—ततः स राजा कांचिद् वृद्धां धात्रीवेषे शत्रो राजधानीं प्रजिघाय[2] ।

२१५—इमे शिशवः सद्यो निद्रायाः प्रवुद्धाः प्रमार्जन्त्यक्षीणि ।

२१६—परार्थवटकः श्रेष्ठी दुर्गतोद्धारे बहुधनं व्ययं करोति ।

२१७—न जाने मया किं करिष्यति नृशंसो दुरात्मा ।

२१८—तदा शासिता निद्रयेवाजागो[3] भयं चोपस्थितमदर्शत् ।

२१९—बिल्हणः किल काश्मीरेभ्यः प्रपलाय्य कर्णाटेषु शरणं प्रपेदे ।

२२०—राष्ट्ररक्षाप्रयुक्ता राष्ट्रिया लघुवेतन एव सेनास्वङ्गभावमभजन् ।

२२१—धिक् तं हताशं यस्मान्न पिता प्रसीदति न च गुरुः ।

२२२—क्षीरौदनं गन्धयुतं विधाय समादयत् किञ्चित् तत्तनूजम् ।

२२३—विरतिशून्यपुंसां पीतवेषान्न लाभः ।

२२४—हिन्दीति भाषा संस्कृताद् विकृतेत्यभ्युपगमः ।

२२५—सकृत्पतिता न शेकुरात्मानमवनत्या अवटाद्[4] उद्धर्तुम् ।

२२६—रजकाय वस्त्राणि ददातीमानि निर्णिज्य[5] रज्यन्तामिति[6] ।

२२७—खण्डिकोपाध्यायः शिष्याय चपेटां ददाति मिथ्या कारयमाणाय[7] ।

२२८—पुत्रात्प्रमोदो जायते ।

२२९—अहिंसा परमो धर्म इति शास्त्रडिण्डिमेन वर्तमानहिन्दूनां हृदयेभ्यो युयुत्सा-गुण एव विनाशितः ।

२३०—रत्यादिः स्थायिभावो विभावादिभिर्व्यक्तो दध्यादिन्यायेन रूपान्तरं परिणतो रसो भवति ।

२३१—परीक्षोपयोगिषु लेखेषूपेक्ष्य न शक्यमस्याः पत्रिकायाः सर्वप्रियत्वं सम्पादयितुम् ।

---

१ कुषिरञ्जोः प्राचां श्यन्परस्मैपदं चेति कर्मकर्तरि परस्मैपदं वा । २ प्रहितवान् । ३ जागृ निद्राक्षये इत्यस्माल्लङ् । ४ गर्तात् । ५ संशोध्य । ६ वर्ण्यन्ताम् । ७ असकृद् अन्यथोच्चारयते ।

२३२—वर्तमानायां वहुदैवतार्चायामुपहसन्ति केचित्। अपरे नात्रोपहास्यं किंचित्पश्यन्ति।
२३३—सनातनधर्माणः कथं नामान्त्यजान् मन्दिरप्रवेशाय निषेधन्तु।
२३४—तेजस्विने ब्रह्मचारिणे वरायाग्निशव्दप्रयोगो युज्यत एव।
२३५—सर्वमहान्[1] विष्णुः स्वं यशो देवर्षिणा नारदेन गापयामास।
२३६—जयोदाहरणं[2] बाह्वोर्गापयामास किन्नरान्। (रघौ ४।७८)।
२३७—सुहृदो भोजनाय निमन्त्रयते तदर्थं च महतः संभारान्कुरुते।
२३८—माठरकौण्डिन्यौ भोजनमेषां ब्राह्मणानां वेविषाताम्।
२३९—पश्य क्रियता यत्नेन सशर्करेऽस्मिन्क्षेत्रे कृषति हलं कृषीवलः।
२४०—पितरि शुश्रूषितव्यं मातरि शुश्रूषितव्यम्।
२४१—आषाढस्य प्रथमे दले देहल्यामध्यविशद् धर्मसंघः।
२४२—एते वयं सुधातिशायिनं कविसूक्तिरसं वाचकानास्वादयितुमिच्छामः।
२४३—प्रकामं विशदोऽयमर्थः। नात्र सन्देहो भवितुं शक्यः।
२४४—नित्यं त्राता च हन्ता च धर्माधर्माश्रितान् नरान्।
२४५—सहस्रमेतस्यां वाचि दद्मः (         )।
२४६—कौसल्याऽतोऽतिरिक्तं च मम शुश्रूषते बहु (रा० २।८।१८)।
२४७—खड्गी बाणी शरासनी स राजा प्रातस्तरामेवाखेटं निर्जगाम।
२४८—आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते।
२४९—दद्यात्कृष्णाजिनं पृष्ठे गां पुच्छे करिणं करे। केसरेषु तथैवाश्वं दासीं शिरसि दापयेत्॥
२५०—समवायान्समवैति (पा० ४।४।४३)।
२५१—द्रव्ये गुणाः समवयन्ति।

———

1 सर्वेभ्यो महत्तर इति सर्वमहान्। गुणात्तरेण तरलोपश्चेति समासः।
2 जयप्रख्यापकं प्रबन्धविशेषम्।

## उपपदविभक्त्यधिकारो द्वितीयः ।

१—ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ( अमरकोषे ) ।
२—मणिबन्धादाकनिष्ठं करस्य करभो बहिः ( अमरकोषे ) ।
३—उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । लोकः स भारतं वर्षम् ।
४—परितः पतन्ति दुष्कृतां विपदः ।
५—नान्यत्ते क्षमं मन्येऽन्तरेण प्रसादनाद् गुरोः ।
६—इदं च मां भाति न [1]ह्युपधिसमाश्रयेणात्यन्ताय प्रैधते नरः ।
७—न ऋते पुरुषकारं सिध्यन्ति मनोरथाः ।
८—यदत्र मामभिस्यात्[2] तन्मे देहि । नाहं ततोधिकं कामये ।
९—धिगस्तु मम वीर्यस्य यत्त्वं जीवसि रावण ।
१०—सूर्यादयो ग्रहास्तापप्रकाशादिनाऽन्यत् किमपि कर्तुं नालमिति केचित्प्रतिपन्नाः[3] ।
११—दुर्जनैः पृथक् तिष्ठन्तु सज्जनाः ।
१२—यो दरिद्रान् बिभर्मीति तान्प्रति धनं ददाति स आत्मन एवोपकरोति ।
१३—केचिदाहुर्भरतवर्षादधः पातालं यद्यत्वेऽमेरिकेति संज्ञायते ।
१४—जानुभ्यामुपरि शरीराङ्गं सक्थीत्युच्यते ।
१५—अस्मभ्यं तु न किञ्चित् प्रतिभाति ब्रह्मणो विनेति रूढिसाधवः ।
१६—नैतद्युक्तं बिम्बेन विसंवदेत्[4] प्रतिबिम्बमिति ।
१७—दन्तमूलादुपरिष्टादुच्छूनः प्रदेशो वर्त्स इत्युच्यते ।
१८—सन्ततेः परिणयननिर्वृत्तिमेव तस्याः प्रति स्वस्य।परं कृत्यं प्रपश्यन्ति प्रायशो लोकाः ।
१९—न च बहवो वैयाकरणास्तुलामारोहन्ति दाधिमथैस्तत्र भवद्भिः श्रीशिवदत्तैर्महामहोपाध्यायैः ।

---

१ उपधिः कपटम् । २ अभिरत्र भागे वर्तते । ३ कर्तरि क्तः । व्यवसितादिषु क्तः कर्तरि चकारादिति वामनसूत्रम् । ४ विसदृशं स्यात् ।

(२५२) न [illegible]य भीताय विरथाय प्रयच्छते।
व्यसने वर्तमानाय प्रहरन्ति मनस्विनः॥

(२५३) वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि (भा० पु० १०।४५।६)।

(२५४) भोजितं परमान्नेन संविष्टं कशिपौ सुखम् (भा० पु० १०।४६।१५)।

(२५५) कादम्बरीरसज्ञानामाहारोऽपि न रोचते।

(२५६) दापयेद् धनिकस्यार्थमधमर्णाद् विभावितम् (मनु० ८।४७)

(२५७) यश्च वेदेषु देवेषु गोषु विप्रेषु साधुषु।
धर्मे मयि च विद्वेष्टि स वै आशु विनश्यति॥

(२५८) विदेशात्प्रत्यागतं सुतं मुक्ताहारं धापयत्यम्बा।

(२५९) प्रणयादहीनमात्मनीनं तद्वचो निशम्य स परं आहृष्यत्।

(२६०) इन्द्रियवारीजालं छित्वा तीर्णो भव भवार्णवात् (महोपनिषदि ५।८४)।

(२६१) अस्य वचनस्य पूर्ववचनाद् विरोधो नाशङ्कनीयः।

(२६२) द्वेष्टि प्रायो गुणिभ्यो यत् (भट्टि० १८।९)।

(२६३) स्वर्गतस्य च तस्य महात्मनः शाश्वतशान्तिलाभायेश्वरं प्रार्थयामहे।

(२६४) न स्वदन्ते सुतृप्तस्य यथा प्रीतिविधा रसाः (यो० वा० ४।२३।६८)।

(२६५) लोकायते शास्त्रे पदार्थान्नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति (काशिका० १।३।३६)।

(२६६) बहुव्रीहिरिवान्यपदार्थप्रधानैरर्थवादैर्नार्थः।

(२६७) स्वामिंस्त्वत्प्रसादेन उत्तीर्णोऽहं भवाब्धेः (यो० वा० ६ (उत्तर०) २१६।२४)।

(२६८) नोद्विजन्ते स्वकार्येषु जना अध्यवसायिनः (यो० वा० ६ (पूर्व०) ८८।१९)।

(२६९) तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्।

(२७०) यत्नयुक्तिविहीनस्य गोष्पदं दुस्तरं भवेत् (यो० वा० ५।७२।४३)।

(२७१) [illegible]


(२७२) देवतायतनस्य प्रदक्षिणं कुर्वन्ति प्रणताः।

(२७३) नायं सन्तमसोऽपि जयं परमन्त इति प्रतिहतगतयः।

(२७४) तान्मध्ये वेश्मं निधाय यतिवरा: किं प्रतिष्ठापितवे।

(२७५) आ आ त्रिकूटमधिरूढगिरां गुरूणां चरणौ नमामि
(श्रीकेशवदिग्विजयकाव्ये १०।५)।

(२७६) य उत्क्रान्ते देवहन्यौ प्रेक्षावत्सु न गण्यते।

(२७७) पुत्रदारस्य वाग्वैतं शिरांसि स्पर्शयेत्पृथक् (मनु० ८।११४

(२७८) न कुर्वीत वंशमत्याकाल हिमवांस्तापसो भवेत् (बौ०ध० ३।३।३, १९

(२७९) यथा यथं चित्तलोकोऽयं दिनान्येतानि यत्नतः।
प्रयाति व्याहृता: सर्वो न च लोको व्यपद्यत (राज० २।३४)॥

(२८०) सौरतरान्तरविचारचणान् प्रतीच्छन् (अमरोद्धाटनोपक्रमे क्षीरस्वामी)।

(२८१) न च स्निह्यति कस्यचित् (भट्टि० १८।१९)।

(२८२) मैथ्याके गृह्णीश्च (भट्टि० १८।१९)।

(२८३) संस्कृता भाषा जायते इति केचित्।

(२८४) लोकाचारैराचारा व्यवहाराश्च जायन्ते।

(२८५) श्रीमधुसूदन शाङ्कर सम्प्रदायात्मना विरुद्धोऽद्वैतमार्गवर्तिनी भक्तिसिद्धिरिति नाम्ना ग्रन्थो ग्रथित:।

(२८६) इमं माणवकं [illegible]: परिधापयत (अथर्व० २।१३।२ भाष्ये सायण:)।

(२८७) उक्तं रुद्रदास: — यथा परिधापिता: कुमारेण भरणानि यत्र (मुद्रा० ५)।

(२८८) देवी सम्प्रत्येव मां परिणाययिष्यति तामेव चिरन्तन ब्राह्मणीम्
(विद्धशाल० )

(२८९) कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च।

(२९०) कौतूहलं मां प्रच्छयति।

(२९१) विश्वासमागतं सन्तं प्रायो दुष्टात्ममानव: (का० नी० सा० ११। १५।२४)

(२९२) इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत्।
असौ कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात्॥

(२९३) सा राज्ञा भार्याभावाय प्रार्थिता।

(२९४) उन्नतेऽवनिं शरीराण्येव करभा: स्वानि भाराय मेनिरे
(शि० मा० २०।३४)।

(२९५) 'प्रैदिपत्स्याम्' वकाराय प्रतिजज्ञे प्रतापवान् (शि० मा० १३।१५)।

(२९६) प्राक् केकयीतो भरतस्ततोऽभूत् (भट्टि० १।१४)।

(२९७) प्रोत्साहयन्तां द्रुमिवत्तेरयो यो असृजयत (भट्टि० २।४२)।

(२९८) तौ दम्पती नि: परिणीय वह्निम् (कु० ५।८०)।

(२९९) पुरुषोत्तमं तु सर्वेषां यत्पक्षं तत्र रोच्यते (रा० ३।५३।१७)।

(३००) कथं चित्तगतो भर्ता [illegible] (मा० मा० ४)।

(३०१) [illegible] इति बौ० ध० सू० २।८।११ इति सूत्रे गोविन्दस्वामिकृते विवरणे)।

(३०२) हा हतदैव! केलिकदलीकन्दली मत्तकरी शुण्डा वेणुं सायते /

२०—महाकविभ्यः पश्चात्कवयः, ततः कविपाशा[1] अजायन्तेति क्रमिको ह्रासः कवितायाः ।

२१—अनु रोगिमरणं प्रदिश्यमानं महौषधं किंफलकं भवेत् ?

२२—दक्षिणतो विद्याशालादद्दूरे[2] शिल्पशालेति प्रशमभङ्गाय कल्पते ।

२३—जलदा अपि ज्वलदङ्गारवृष्टिसृष्टौ प्रभवन्ति कामुकानाम् ।

२४—इदं देवदत्ताय हितकरं भवतीति नैतावता यज्ञदत्तायाऽपि हितं भवेत् ।

२५—तस्याधस्ताद्राजमार्गस्योभयतो य आपणास्तेष्वयं श्रेष्ठी स्वामी ।

२६—अतोऽस्माभिस्तथा स्थेयं यथा द्वात्रिंशतो दन्तानामन्तरा सेयं जिह्वा ।

२७—शिरोरेखायाः शून्या इमा अक्षरपङ्क्तयः शिरोवेष्टनविरहिताः कुलाङ्गना इव न शोभन्ते ।

२८—रामस्य वनं प्रतिप्रस्थानस्योत्तरं विश्वस्तेवाभूदयोध्या[3] ।

२९—विदेशात्प्रत्यागतं सुतं मुक्ताहारं धापयत्यम्बा ।

३०—गुरोः प्रणामादनु स नीचैरासनमध्यास्त ।

३१—अध्यापकेन सर्वत्र समं वर्तितव्यम्, नैकेन च्छात्रेण सह पक्षपातो युक्तः ।

३२—माता सुताभिर्मधुरं व्यवहरति, तथाऽपि तास्तस्यामुद्धतं[4] वर्तन्ते ।

३३—कार्यार्थमुपेतो दूतो गां[5] गतेन मौलिना प्रभुपादपङ्कजयोः प्रणम्य सिंहासनमधोऽतिष्ठत् ।

३४—हा कष्टं किं करोमि प्रियतमविरहे कामदूतो वसन्तः ।

३५—हा पितः क्वाऽसि हे सुभ्रू बह्वेवं विललाप सः ।

३६—उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः । ( जातकमालायाम् ) ।

३७—तुलां यदारोहति दन्तवाससा ( कुमारे ) ।

३८—पूर्वं कायस्येति पूर्वकायः । एवमपरं कायस्येत्यपरकायः ।

३९—उत्तरेऽस्य भारतस्य त्रिविष्टपम् ।

---

१ कुत्सिताः कवयः । याप्ये पाशप् । २ विभाषा छायासुराशालानिशानाम् इति वा तत्पुरुषो नपुंसकम् । ३ विधवेव । ४ सदर्पम् । ५ भूमिम् ।

४०—द्विविधं हि कारणम्। उपादान कारणं सहकारिकारणं च। तत्र यत्कार्येणाभिन्नदेशं तदुपादानकारणम्।

४१—यदि वेदाः प्रमाणमिति वदन्नेव भट्टकुमारिलः पर्वतशिखराद-धोऽपतत्।

४२—सूर्यं परितः पृथिवी तस्याश्च परितश्चन्द्रः परिक्रमं करोति।

४३—अद्य प्रभृत्यवनताङ्गि तवास्मि दासः।

४४—आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुः स्मृतः (कात्यः)।

४५— [illegible] (पा० ८।१।२)

४६— [illegible] —— [illegible]

४७— [illegible]

## केवल विभक्त्यधिकारस्तृतीयः।

१—अद्य स्वतन्त्रं भारतं वर्षं वर्षादधिकः कालो गतः।

२—तस्योपस्थिते सत्येव समृद्धानि[1] नः कार्याणि।

३—आपस्तु परमाः पूताः पेयाः स्नानीयाश्च भवन्ति।

४—वर्षद्वयाद्रुज्यतेऽयं वराकः, न जाने कदा कल्यो[2] भविष्यति।

५—अद्यत्वे त्रिषु जातिसहस्रेषु विभक्ता हिन्दव ऐक्यमनश्नुवानाः परैः सहेलं शक्या आस्कन्तुम्[3]।

६—य आत्मानं व्यकत्थन्त तेऽव्यसन्त।

७—प्राड्विवाकमतानुसारं व्यवहारान्व्यवस्थापयेन्नृपो न तु स्वमतेन केवलेन।

८—एतावत्पर्यन्तं समासतो[4] वर्णिता वर्णधर्माः, आश्रमधर्मान्सम्प्रति वर्णयिष्यामः।

९—गुणकर्मस्वभावेषु यः सर्वेभ्यः सत्तमः स नाम नृतमः।

१०—विदेशस्थो देवदत्तश्चिरस्य दृष्टाया अम्बायाः संजानाति[5]।

११—नक्तं दिनं च परप्रतारणादन्यत् तेषां कृत्यं नास्ति।

---

१ फलितानि। २ वार्तः, स्वस्थः। ३ आक्रमितुम्। ४ संक्षेपेण। ५ आध्यायति, उत्कण्ठापूर्वकं स्मरति।

४८— [illegible]

४९— [illegible]

१२—अयं साधुरयं चानेन साधुतर इति कथं जानीमः ।

१३—किमिति वेदनिन्दाया न लज्जसे, गुरुजनापवादेन वा नाऽपत्रपसे ? अतीन्द्रियेष्वप्यर्थेषु स्वमनीषिकामेव प्रमाणी करोषीति हा हतोऽसि ।

१४—जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते ।

१५—त्वं ह्यो नोपातिष्ठाः । तत्कस्य हेतोः ।

१६—नास्ति पामरायाऽपि तस्य प्रयोजनम् ।

१७—ते महता कालेन पुत्त्रागमं प्रतीक्षमाणाश्चिन्तापरीताः स्थिताः ।

१८—एतस्मा आविष्काराय तस्य महाभागस्याधमर्णा वयम् ।

१९—यदाऽस्य तापसस्य मर्त्यलोकपरित्यागस्य दश दिनान्येवाव शिष्टानि तदाऽयं स्वशिष्यान्समाहूय सविस्तरं कृत्यमनुशशास ।

२०—धर्मभावनया मनोविनोदभावनाया अन्तरं व्यक्तमेव ।

२१—समाजवादस्येदानीं भारते नास्ति प्रयोजनम् ।

२२—बौद्धग्रन्था विक्रमात् सार्धशतं पश्चात् ताम्रपत्रेषु लिखिताः ।

२३—सर्वेषु गुणेषु प्रकामं पूर्णोऽयं कुमारः कस्य न प्रियः ?

२४—विचार्यमाणे सर्वमप्येतत् संसारासारतां बोधयति नः ।

२५—महात्मनो दर्शनाय समुत्कण्ठमाना लोका दूरविदूरेभ्यः प्रदेशेभ्यः संनिपतिताः ।

२६—मदनपरवशाऽपि नात्मने प्रभवामि । जनको हि ममेष्टेऽस्य शरीरस्य ।

२७—इतः पूर्वस्यां दिशि नवक्रोशान्दूरो मे ग्रामः ।

२८—महात्मानं दर्शका लोका भूयस्यां सङ्ख्यायां समवेताः ।

२९—अवरङ्गजीवो हि भारतं वर्षं वर्षाण्येकपञ्चाशदशिषत् ।

३०—रविवारस्य दिनम्, डाक्टर महोदयः कालेजकार्यनिर्मुक्तः सुहृज्जनेन गोष्ठीसुखमनुभवति ।

३१—कालो हि बलिनां बलीयान् ।

३२—देवदत्तो व्यायामस्य परमरसिकोऽभवदिति दृढसन्धिबन्धान्यस्य गात्राणि ।

३३—विलोक्यतां तावन्महात्मनामग्रेसरस्य श्रीमोहनदासकर्मचन्द्रस्य दिव्यं निदर्शनम् ।

३४—इह भूतले घटो नास्त्यनुपलब्धेः ।

३५—पर्वतो वह्निमान् धूमात् ।

३६—स्वार्थस्य पङ्के निपतन्ति प्रायेण पुरुषाः ।

३७—स्रवति[1] न गरलं वा पादपश्चन्दनस्य ।

३८—देशभक्तिप्रयुक्तेन तेन महाभागेन मिथः कलहस्योपशमाय प्राणानामाहुतिर्दत्ता ।

३९—घ्नतः पृष्ठं ददाति ।

४०—इदं च स्वेन स्वीकृतस्यार्थस्य विरुद्धमिति कथं नेक्षसे ?

४१—दरिद्रानातुरान्निःशुल्कमुपचरन्तो भिषग्वरा यशसो भागिनो भवन्ति ।

४२—शतशः संवत्सरादनुभूतां दासतां दूरीकृत्य साम्प्रतं स्वातन्त्र्यसुखमनुभवामः ।

४३—षोडशाब्दे वयः प्राप्ते संज्ञायास्तत्पिता सुखी ( भविष्यपुराणे प्रतिसर्गपर्वणि ३।४।१८।४ ) ।

४४—मासोऽयं माधवस्यासीत् । नवकुसुमविकासात्सौरभयोगेनायं सुरभिरित्यप्यभिधीयते ।

४५—परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः ।

४६—वस्त्रेष्ववधीद् दासीं कृष्णः ।

४७—पश्यत एव हरति स्वर्णं स्वर्णकार इति पश्यतोहर इत्युच्यते ।

४८—भाषतो बहुकाकस्य बलिनः पततां वराः । इदमूचुः स्म चक्राङ्गा वचः काकं विहङ्गमाः ।। ( भारते कर्णपर्वणि ४१।२१ ) ।

४९—रात्रौ रोचमान इन्दुः कस्य न प्रियः ।

५०—इदानीमहमागन्तुकानां श्रुत्वा पुरुषविशेषकौतूहलेनागतोस्मीमामुज्जयिनीम् ( चारुदत्ते ) ।

---

१ अन्तर्भूतण्यर्थोयं बहुलं प्रयुज्यते शिष्टैः । अत्रार्थेऽस्मत्कृतिरनुवादकला द्रष्टव्यताम् । तत्र 'विषयप्रवेशे' उदाहृतयः प्रपञ्चिताः ।

५१—एतद्विषय विचारणा मासार्थमरुध्यत ।
५२—आकृतौ विप्राः कर्मणि तु वृषलाः ।
५३— [illegible] गतः [illegible]गतः ।
५४— बलि नियमनोत्तो बलिनः [illegible] ।
बलिनियमनः [illegible] चचार (चम्पू० ९।४५)।
५५— रामचन्द्रपुरी प्रभा आदित्यै [illegible] (श्री केशवदिग्विजय [illegible])।

## अथ तिङ्क्षु विवेच्यानि ।

## तत्र गणाधिकारः प्रथमः ।

१—अत्र भवान्साधु सन्दृभ्णाति[1] वाक्यानीति जिज्ञासे केनात्र कर्मण्यभिविनीतोऽस्ति[2] ।
२—दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
३—पूर्वे यथाऽशासन्प्रजास्तथा नूतना अपि शिष्युश्चेत्साधीयः स्यात् ।
४—शत्रोरपि शुभं ध्याति शमदमादिसमन्वितः ।
५—रक्षांसि भीतानि दिशो द्रुवन्ति ।
६—सर्वोऽपि तत्त्वबुभुत्सया व्याप्रणोति न च सर्वः सिध्यति ।
७—कान्तिमत्तमं विलसिताधिकरणं ते करणमेवं निमेषेण भस्मावशेषं दृष्ट्वाऽपि न दीर्ये । कठिनाः खलु स्त्रियः ।
८—संस्कृतं शिक्षितुं प्रयस, एष तवागमकालः ।
९—अज्ञातकुलशीले न सहसा विश्वसेत् ।
१०—कामो मे धर्ममातिष्ठेयमधर्मं च घृणीयाम्[3] ।
११—यथा शास्त्रमादिशति तथैव तं भगवन्तमुपासेयुर्लोकाः ।
१२—ये सततं शास्त्राण्यभ्यसन्ति स्वाध्यायं[4] चाधीयते ते कृतिनः ।
१३—उदीयन्तेऽस्य पुण्यानि । यस्माद् यदग्रं प्रारभते तदेवाऽस्य फलति ।
१४—उदयति दिशि यस्यां भानुमान् सैव पूर्वा ( उदयनाचार्यः ) ।
१५—यो हि स्वयं सूत्रं कृन्तति वयति च स वर्धते पूयते च ।

---

१ मथ्नाति । २ शिक्षितः । ३ निन्देयम् । ४ वेदम् ।

३ ५६— प्रदीप एव [illegible] विनाशयते ।
५७— [illegible] दक्षिणे (भा० पु० ३।२१।४)।
५८— [illegible] ईक्षित ईक्षते - ८

१६—प्रतिरुद्धा आपः पूयन्ते ।
१७—न चापररात्रमधीत्य पुनः स्वपेत् ।
१८—प्रबला मत्स्या निर्बलान्निगृणन्ति । प्रसिद्धो हि मात्स्यो न्यायो लोके ।
१९—एष कालः समुत्पन्नो यः पलाति स जीवति ।
२०—शुक्तिं पश्यन्रजतमिति भ्राम्यति ।
२१—त्रिः परिक्राम्यति दैवतायतनं भक्तः ।
२२—सन्नह्यति[1] वाग्भिः प्रैष्यं स्वामी ।
२३—मुहुर्मुहुर्विधवति[2] चन्दनमञ्जरीः समीरः ।
२४—सङ्घाधिकारिणः समनुरुन्ध्मः[3] क्रियतां यत्नः संस्कृतेः पुनरुद्धाराय ।
२५—केयं भिक्षाव्यसनिनी कुलाटेति[4] सोऽञ्जसाऽविदत् ।
२६—यत्नान्तं शठ ! मुञ्च मुञ्च शपथैः किं धूर्त्त ! निर्बन्धसे ।
२७—आत्मौपम्येन मनुजं आपृच्छ्यानं कर्ता बुधः (भा० पु० १।११।३७)
२८—कुचतटन्यस्यति वदनं वदना कुचमण्डलं ग्लानि ।
२९— न विदीर्ये कठिनाः खलु स्त्रियः (कु० ४।   )।

## उपग्रहाधिकारो द्वितीयः ।

१—किमित्यज्ञवदनुकुरुषे परेषाम् ? सदसती विविच्य प्रवर्तस्व ।
२—देवदत्तो विशिखातो[5] विशिखां विपणीतश्च विपणीं[6] संचरते ।
३—वसुमित्रो ऽनवग्रहं[7] ब्रूते न च विरमते । अप्रसक्तं च बहु भाषते ।
४—एहि, आरामेऽत्रारमामहे ।
५—अयमाक्रीडः[8] । अत्राक्रीडन्ति च्छात्रा विहरन्ति च लोका अहर्मुखे[9] ।
६—किं विस्मृतोऽसि यदेभिः समक्रीडः पांसुषु[10] शैशवे ?
७—यो ह्यधीतस्य प्रणाशनमिच्छत्यधन्यः स षण्मासान्ग्रामेऽवतिष्ठेत् ।
८—ब्रह्म सत्यं जगन्मिथ्येत्यातिष्ठन्ते शाङ्कराः ।

---

१ भर्त्संयते । २ विधूनयति । ३ तेष्वयमनुरोधः कामोऽस्माकमित्यर्थो विवक्षितः । ४ या शीलमभिन्दती कुलान्यटति सा कुलाटा । अत्र पररूपं न भवति । ५ रथ्यायाः । ६ पण्यवीथिकाम् । ७ अनर्गलम् । ८ उद्यानम् । ९ प्रत्यूषे । १० पांसुः प्रायेण बहुत्वे प्रयुज्यते ।

९—अमी बालाः खेलन्ति च कूर्दन्ति चोच्छलन्ति चान्योन्यमुपहसन्ति च रमन्ति च चिराय ।

१०—यो गुरून्नाभ्युत्तिष्ठते सोऽपध्वस्यते[1] ।

११—अस्माद्ग्रामाच्छतमुत्तिष्ठते । सोऽयमल्पीयानायः ।

१२—इह लोकोऽर्थकामयोरासक्तो धर्मेऽपि नोत्तिष्ठति किमुतापवर्गे[2] ।

१३—बहुरूपोऽसौ यस्य कस्यापि रूपमातिष्ठते स्वेच्छया; न च निपुणमीक्ष्यमाणोऽपि व्यक्तितः परिच्छिद्यते ।

१४—अद्य संस्थास्यते[3] यज्ञ इति प्रस्थास्यन्तीतो याज्ञिकाः ।

१५—वर्षास्वयं सरोवरो जलधिमनुहरते, नाऽस्यावारपारे दृश्येते ।

१६—वञ्चयन्ति वणिजः स्वानपि, किम्पुनः परान् ।

१७—न पदा कृमिकीटादीनाक्रमेत न चाघ्नीत ।

१८—ते युत्सु महतीषु पराक्रमन् यशश्चानल्पमवाप्नुवन् ।

१९—पश्य, आक्रमतेऽत्र धूमः कुटीरेभ्यः, मन्येऽग्निहोत्रं जुह्वति वनौकसः ।

२०—नाऽस्य गणितेऽत्रतिबन्धेन वर्तते बुद्धिः, न्याये तु साधीयः क्रामति ।

२१—यो यज्ञगतोऽपशब्दान्प्रयुनक्ति स पतति ।

२२—द्वन्द्वं न्यब्जि[4] यज्ञपात्राणि प्रयुनक्ति ।

२३—सुहृदं देवदत्तमनुयोक्ष्यामि ह्यो मद्गेहे किमिति नोपातिष्ठ इति ।

२४—विजये ! जानीहि कः प्रतीहारमुपतिष्ठते ।

२५—भोजनकाल उपतिष्ठसे कार्यकाले क यासि ?

२६—श्यामः पितरि प्रतिकूलो मात्रा तु संजानीते[5] ।

२७—नित्यः शब्द इति वैयाकरणाः प्रतिजानन्ति कार्य इति च नैयायिकाः ।

२८—न हि शास्त्रं विधवापुनरुद्वाहमभ्यनुजानीते व्यपेक्ष्यते तु सः ।

२९—अहमचिरेण वैद्यकाध्ययनमुपक्रमिष्यामि । अधीतं मया ज्यौतिषम् ।

३०—इह नगर्यां साधूपक्रमते[6] आतुरान्पीयूषपाणि ध्रुवसिद्धिर्नाम वैद्यः ।

---

१ धिक् क्रियते । २ मोक्षे । ३ समाप्स्यति । ४ न्युब्जीकृतानि । ५ आनुकूल्येन वर्तते । ६ चिकित्सति, उपचरति ।

३१—नवतन्त्रो[1]ऽयं वैद्यः। साधु चिकित्सत्यसाधु वेति विचिकित्सते[2] जनः।

३२—शतं मे धारयसि। यदि न सहसे दातुं मा दाः। अपजानासि[3] किम् ?

३३—अयमध्ययनाय क्रमतेऽयं च खेलनाय। सहोदरावपीमौ विसदृशौ शीलेन।

३४—ते नाम जयिनो येऽन्तःस्थान् रिपूनधिकुर्वन्ति[4]।

३५—ये श्रियं प्राप्य न विकुर्वन्ति ते जितेन्द्रियाः।

३६—अहो विक्रमन्ते वाजिनः। साधु विनीताः[5] खल्वमी।

३७—दृश्यते लोके वृत्तिकर्शितो ब्राह्मणो व्यतिकृषति भूमिं हलेन।

३८—अकृतात्मानो व्यतिघ्नन्ति विवेकविधुराः। इह चामुत्र च स्वार्थाद् धीयन्ते।

३९—सान्द्रायां तरुच्छायायामपस्किरन्ते श्वान आश्रयार्थिनः।

४०—स्मृतमात्रो भगवान् विघ्नानपोहति प्रणतानाम्[6]।

४१—राजान्नं तेज आदत्त इति पराकुरुते राजप्रतिग्रहं द्विजः।

४२—इमे नेतारो जनानां संशयेषु महात्मनि श्रीगान्धिनि तिष्ठन्ति स्म। स महाभागः सम्प्रति स्वर्यात इति वैक्लव्यमेषाम्।

४३—सत्योऽयमाभाणको[7] मातृकं गावोऽनुहरन्ते[8] पैतृकमश्वा इति।

४४—अन्यत्र विसंवदन्तोऽपि न प्रेत्यभावे व्यूदिरे[9] प्राज्ञाः।

४५—समिधमाहर सौम्य ! एषोऽहं त्वामुपनेष्यामि।

४६—यो हि केवलं वृत्तिहेतोरध्यापयते च्छात्रांस्तं ज्ञानपण्यं वणिजं वदन्ति।

४७—महात्मानो हि न चिराय कुप्यन्ति। अनुनाथिताश्च[10] कोप विनयन्ति शापादि च परिवर्तयन्ति।

---

१ सद्योऽभिविनीतः। २ सन्देग्धि। ३ अपलपसि। ४ अभिभवन्ति। ५ शिक्षिताः। ६ भक्तानाम्। ७ लोकवादः। ८ गतं शीलयन्ति। ९ विवादं चक्रिरे। विपूर्वाद्वदेर्लिटि। १० प्रार्थिताः।

४८—वायोर्विकुर्वाणादग्निरजायतेति प्रथते स्मृतिः ।
४९—न वयमभ्यूहामस्त्वच्चेतसि किं वर्तत इति ।
५०—यदीच्छसि लोकस्य प्रियः स्यामिति तर्हि सन्ततमभ्यस्य संस्कृतेन संभाषाम् ।
५१—धन्योऽयं द्विजन्मा योऽगाधे शब्दशास्त्रे शिक्षति ।
५२—विप्रतिष्ठन्ते[1] विस्फुलिङ्गा इति हसन्तीं[2] मोपश्लिक्षः ।
५३—ये समुदाचारमुच्चरन्ते[3] तेऽवगीयन्ते[4] ।
५४—यत्र प्रदेशेऽभ्यधिक ऊष्मा, तत्रत्यो वायुरुच्चरति वायवन्तरं च रिक्तं तत्स्थानमापद्यते ।
५५—संकटेनानेन[5] मार्गेण संचरन्ति यानानि संवट्टन्ते ।
५६—अश्वः संक्रोडन उदग्रेगाश्मनाऽभिहतस्यास्योरुपर्व व्यक्रमत ।
५७—अरुणकरोदय एष वर्तते । वरतनु ! संप्रवदन्ति कुक्कुटाः ।
५८—निपानं प्रति गा उपह्वयति गोपः ।
५९—स साधिष्ठमुपकरोति लोकस्य यो रामायणं प्रकरोति ।
६०—कृष्णश्चाणूरमाह्वयते युद्धं मे देहीति ।
६१—शाङ्करं धनुरानम्य रामः सीतामुपायच्छत् ।
६२—महीं भुङ्क्ते भुनक्तीति च महीभुगुच्यते भूपः ।
६३—इह जगति विरला एव शमदमादिषट्कसम्पत्तिमासाद्य ब्रह्म जिज्ञासन्ति विरलतरा एव च तद्विजानन्ति ।
६४—श्लोकै राजानमुपतिष्ठते[6] कविः पारितोषिकं चादभ्रं[7] लभते ।
६५—अयं पन्थाः स्रुघ्नमुपतिष्ठत्ययं च पाटलिपुत्त्रम् ।
६६—दृश्यतां तावत्कः कपाटमाहन्तीति ।
६७—स्वर्णमुत्तपति स्वर्णकारो मूषायाम् ।
६८—केचिदाहुर्न वयं गृध्यामोऽर्थेषु किन्त्वर्था नो गर्धयन्तीति ।
६९—नेदमनीदृशं जगदिति जैमिनीयाः संगिरन्ते ।
७०—ये कापथमभिनिविशन्ते ते क्लिश्यन्ते ।

---

१ व्युच्चरन्ति । २ अङ्गारशकटीम् । ३ अतिलङ्घन्ते । ४ अवगीयन्ते = निन्द्यन्ते । ५ संबाधेन, संकुचितेन । ६ स्तौति । ७ अनल्पम् ।

७१—संदणुहि[1] शस्त्रीम् । इयं कुण्ठिताश्रिर्न[2] किमपि कृन्तति ।

७२—अम्बा दण्डेन भीषयते चापलमाचरन्तं किशोरम्, न चासौ बिभेति वियातः ।

७३—अनुजानीष्व मां गमनाय । उत्सुकोऽहं मातृदर्शनेन ।

७४—प्रवहन्ते सरितः सागराय, न च सर्वाः समुद्रगा भवन्ति ।

७५—यावद्वेदं विप्रान् भोजयते । यावदमत्रं च बालानाशयति ।

७६—शयालुरेष[3] शिशुः । एनं शाययस्व ।

७७—गुरो ! प्रथममिति ममेदमागः[4] परिमृष्यस्व ।

७८—काष्ठं काष्ठेन योधयते, अग्निं जनयिष्य इति च मन्यते ।

७९—इदं ते दुर्वृत्तं पितुः कोपं जनयिष्यते मातुश्च शोकम् ।

८०—धन्यः स माणवको यो वेदे व्याकरणे च समं समुद्यच्छते[5] ।

८१—प्रदीपप्रभा हि बाह्यं तमो नाशयते नान्तरम् ।

८२—अहं तेन पथि समागच्छं चिरं च समलपम् ।

८३—यो हितानि सुहृद्वाक्यानि न संशृणुते स पङ्के गौरिव कालेऽवसीदति ।

८४—मुहूर्त्तमिह तिष्ठ, ततः प्रतिष्ठ । नाहं त्वामुपरोत्स्यामि ।

८५—सुहृदं देवदत्तमभिक्रुद्धो गुरुरिति तमनुनाथे । मर्षयार्हन् ! इमं प्रथमापराद्धम् ।

८६—आयुषो रागिचित्तस्य वित्तस्य पिशुनस्य च । अथ स्नेहस्य देहस्य नाऽस्ति कालो विकुर्वतः[6] ॥

८७—उषः प्रशंसते गर्गः शकुनं च बृहस्पतिः । अङ्गिरा मनउत्साहं ब्रह्म-वाक्यं जनार्दनः ॥

८८—अनुवदते कठः कालापम् ।

८९—पौर्विकीं संस्मरञ्ज्ञातिं ब्रह्मैवाभ्यसते पुनः ।

९०—पितरावपि तावन्मां न संविदाते किमुतेतरे ॥

९१—विक्रामत्यनिलात्मजे दशमुखः कां कामवस्थां गतः ।

---

१ निश्य, तेजय । २ कुण्ठितधारा । ३ निद्रालुः । ४ अपराधः । ५ उद्योगं कुरुते । ६ विकारं गच्छतः ।

९२—अस्थाने विचिकित्ससे। अस्त्यात्मेत्यभ्युपगच्छन्ति परीक्षका लौकिकाश्चाऽपि। किं च। अहमस्मीति कोऽसंमूढोऽपलपेत् ?

९३—सविता पङ्कजान्येव बोधयते शशाङ्कश्च कुमुदान्येवेति निसर्गः।

९४—सप्ताहात् परेण सूर्यं ग्रसिष्यति ग्रहः।

९५—संगच्छ शूलमादाय पाशहस्त इवान्तकः।

९६—उपह्वयति गाः शष्पैर्गोपः।

९७—शरीरेन्द्रियसङ्घाताद् व्यतिरिक्त आत्माऽस्ति न वेति विचिकित्सन्ते केचिदार्षमनाद्रियमाणाः।

९८—नास्तिकं बलवज्जुगुप्सन्त्यार्य्याः, वेदनिन्दको हि स भवति।

९९—यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता। योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥

१००—इष्टं चेन्नाप्नुते जनः प्रयतमानोऽपि न स आत्मानमवसादयेत्।

१०१—नायं मे प्रैष्यः सत्ये स्थित इति गृहगमनमस्य नानुजिज्ञासे।

१०२—कष्टं दानमिति याचितं नाऽऽशुश्रूषते धनिको विप्राय।

१०३—यथा पुष्करपलाशे[1] आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते।

१०४—आकाशे वा पाताले वा गतिर्नो सज्जते क्वचिदिति हरयः प्रतिजज्ञिरे।

१०५—अयं ते कामः समृध्यतामिति नित्यमाशास्महे।

१०६—युक्तं नाम सभापतिं सभ्या वयं संभूयेदं[2] प्रार्थयेमेति।

१०७—प्रथमं यत्स्पृशेद्बालो रिङ्गमाणः स्वयं तदा। जीविका तस्य बालस्य तेनैव तु भविष्यति॥

१०८—यदि ते प्रतिवेशी भ्रश्यते सत्पथाद्, भ्रश्यताम्। किं तवानेनेति केचिन्मिथ्योदासीना अनुशासति लोकम्।

१०९—सिध्यन्तां नः कर्माणि लौकिकानि पारलौकिकानि चेति नित्यमाशंसामहे।

---

१ कमलपत्रे। २ संमिल्य।

११०—विश्वामित्रः किल वसिष्ठेन पराजितो निर्विवेद ।
१११—तपस्तप्यति तापसस्त्वगस्थिभूतः ।
११२—विसृजन् कफपित्ते कृपणं च परिदेवयन्[1] यो राजन्यः शय्यायां म्रियते सोऽधमः ।
११३—दास्या सम्प्रयच्छति मुक्ताहारं राजापसदः[2] ।
११४—न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
११५—सर्वतः सारमादद्यात् ।
११६—नान्यथा शाण्डिली माता विक्रीणाति तिलैस्तिलान् ।
११७—अभिवादयामि देवदत्तोऽहं भोः ।
११८—स्वं कृत्यं सुष्ठु संविदन् प्राज्ञो मातापितृभ्यां संवित्ते[3] ।
११९—इदं नाटकं प्रयोगेणाधिकुर्वन्तु कुशीलवा नान्दीं च कुर्वन्तु रङ्गविघ्नापशान्तये ।
१२०—पश्य नभोमध्यमाक्रामति सूर्यः ।
१२१—चिरतरं मया त्वयि स्थितम्,[4] समुत्सुकाश्च बान्धवा मद्विप्रयोगेण, तेन त्वामापृच्छामि ।
१२२—अयि कोकि ! आमन्त्रय सहचरम् । उपस्थिता रजनी ।
१२३—नूनं वैयाकरणपाशोऽसि, यदेवं पदानि मिथ्या कारयसे ।
१२४—नवनवा अर्थाः समुदयन्ति मनसि प्रहर्षं च कमपि जनयन्ति ।
१२५—यदा वृत्तिकर्शितो विप्रः कृषति भूमिं हलेन तदा व्यतिकरोति ।
१२६—आगमय[5] तावन्माणवक ! एत आयान्ति गुरुचरणाः ।
१२७—किमिति मुधा भर्त्सयसि शिशून् । मुग्धा इमे काममुद्धतं वर्तन्ताम् ।
१२८—समर्थोऽपि त्वं कस्मादृणं न विनयसि[6] पैतृकम् ?
१२९—वद्धस्य श्रेष्ठिन आवेशनेषु[7] कार्यमिति बहूनयमुपनयते[8] कर्मकरान् ।

---

१ विलपन् । २ क्षुल्लको राजा राजापसदः । ३ संजानीते, अनुगुणं वर्तते । ४ त्वदन्तिके । सामीप्ये धिकरणे सप्तमी । ५ कंचित्कालं सहस्व । ६ विगणयसि । ७ शिल्पिशालासु । ८ बिभर्ति ।

१३०—एवं शास्त्रेषु वादिनो वदन्तेऽन्योन्यं च विजिगीषन्ते।

१३१—तयोर्भ्रात्रोराकृती प्रायेण संवदेते इत्येकं दृष्ट्वाऽपरोयमिति भ्रमति जनः।

१३२—सबला दुर्बलान् दुर्वारन्निति न संभाव्यतेऽयमनाचारो मनुष्येषु।

१३३—अनुक्तमप्यूहति पण्डितो जनः।

१३४—नियोगिनो राजानमुपकुर्वन्ति राजप्रसादमिच्छन्तः। हृदयेन त्वनुवृत्तिं नेच्छन्ति।

१३५—स नित्यं मातरं वरिवस्यते,[१] आशीर्भिश्च तत्प्रयुक्ताभिरेधते।

१३६—युद्धश्रद्धां[२] च तेऽद्याहं विनेष्यामि महाहवे। (महाभारते)

१३७—स्वगोत्राद् भ्रश्यते नारी उद्वाहात्सप्तमे पदे।

१३८—यत्स्वयं नमते दारु न तत्सन्नामयन्त्यपि।

१३९—स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा। वर्णानां संकरं चक्रे कामोपहतचेतनः[३]॥

१४०—अत्रार्थे पठकानां[४] पाठकानां चावधानमाकर्षामहे।

१४१—ते विक्रान्तवद्[५] अयुत्सन्, परं रिपूञ्जेतुं नापपारन्[६]।

१४२—अङ्गाङ्गिभावो गौणमुख्यतामेव जनयति न तु हेयोपादेयभावं प्रयुनक्ति।

१४३—सत्त्वोद्रेकसिद्ध्येऽहर्निशं तपश्चरन्तं महर्षिनिवहं न न निशामयामस्तथापि कृत्ये न जागृमः।

१४४—यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। उभौ तौ सुखमेधेते क्लिश्यत्यन्तरितो[७] जनः॥

१४५—कुतुकिनो हि बाला इति तेषां हृत्स्त्रेवंविधाः प्रश्नाः स्वत उत्तिष्ठन्ते।

१४६—ग्रहणधारणशक्तिर्हि च्छात्रेषु ह्रसमाना लक्ष्यते, तत्र हेतुर्मृग्यः।

१४७—सुजनेषु तिष्ठत्सु दुर्जनास्तरन्तीति खिद्यति नश्चेतः।

---

१ परिचरति। २ युद्धतर्षम्। ३ कामेनोपहता दूषिता चेतना बुद्धिरस्येति। ४ पठतीति पठः। पचाद्यच्। स एव पठकः। ५ शूरवत्। ६ पार तीर कर्मसमाप्तौ चुरादिः। लुङ्। ७ मध्यगतः।

१४८—इदं च प्रतिपन्नप्रायं पण्डितराजस्य शैली तत्कालै[1] र्भाषान्तरकविवर्यैर्भूयः संवदते ।

१४९—श्रीजवाहरलाले महामन्त्रिणि भरतभुवं शासति सति भूयांसमभ्युदयमाशंसति लोकः ।

१५०—इह देशे भूसुरा अभीतवन्मृत्युना संग्रामयाञ्चक्रुः ।

१५१—ये अकृत्याऽजिह्मा वरीवर्तन्ते तैर्जितम् ।

१५२—सुहृदो भोजनेन निमन्त्रयति तदर्थं च महतः संभारान् कुरुते ।

१५३—सख्यः शपामि यदि किंचिदपि स्मरामि ( अमरुशतके ) ।

१५४—इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ( उत्तरे रामचरिते ) ।

१५५—इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्य (भट्टौ) ।

१५६—वारिपूर्णां महीं कृत्वा पश्चात्संक्रमते गुरुः ।

१५७—उपायंस्त[2] महास्त्राणि निरगाच्च द्रुतं पुरः ( भट्टौ १५।२१ ) ।

१५८—आजघ्ने विषमविलोचनस्य वक्षः ( भारवौ ) ।

१५९—कदाचित्कुप्यते माता नोदरस्था हरीतकी ।

१६०—पातालहंसाः पटुभिर्निनादैः प्रबोधयन्ते नृप ! नागकन्याः ।

१६१—न वयं परस्त्रैष्वातिष्ठामहे[3] ।

१६२—समस्थमनुरज्यन्ति विषमस्थं त्यजन्ति च ।

१६३—अद्य चिरं तं परिचिनोमीति सोऽसंशयं विरहेऽस्मिन् मामनुसुस्मूर्षेत्[4] ।

१६४—अहो मलीमसं ते चरितम् । अल्पजले क्वचिदेत्य निलीहि सरसि ।

१६५—श्याम सृजस्व तनुं न विलम्बय ।

१६६—अहं च तस्मिञ्जने विश्वस्तस्तूष्णीमस्थिषि ।

१६७—त्राहि त्राहि न आपद्गतान् । कमन्यं शरणं यामः ?

१६८—नृपात्मजौ चिक्लिशतुः ससीतौ, ममार राजा विधवा भवत्यः। (भट्टौ) ।

---

१ स कालो येषां ते तत्कालाः, तैः । २ स्वीचकार । ३ आस्थावन्तो भवामः । आस्थाऽऽदरः, स्पृहेति यावत् । ४ स्मर्तुमिच्छेत् ।

(९६२) तमार्थगृह्यं निगृहीतधेनु
मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ (रघु० )।

(९६३) अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते (मनु० ३।७६)।

(९६४) गुरोरासनं नाधितिष्ठते। अहो अत्याहितमेतत्।

(९६५) नाधिकपद्धिक्यौ न संवदेते (पा० १।१।५८ सूत्रे भाष्ये)।

(९६६) तमनुमानं प्रत्यक्षमनुविधातीत्येवं न प्रजानीते ~~योग~~ योग० १।३४ व्यासभाष्ये)।

(९६७) स एवायं नागः सहति कलभेभ्यः परिभवम्।

(९६८) यथा पृथिव्यां बीजानि रत्नानि निधयो यथा।
एवमात्मनि कर्माणि तिष्ठन्ति प्रभवन्ति च ॥

(९६९) अथ यदात्मानं दरिद्रीकृत्यातीभूत्वा भिक्षते... स एवाहम् मृत्यौ पादस्तम्भेन तेन परिक्रीणाति (कौ० ब्रा० १।२।४।६)।

(९८०) शान्तिरस्तु नः सन्तु मा च यान्ति कञ्चन।

(९८१) इमां किमापि न्यसते न चक्षुषी (नै० )।

(९८२) तपामपाकृत्य निशान्तिमालय (नै०

(९८३) अयि मूढ! अखिलमप्यस्य शब्दस्यार्थं न संजिजानीषे।

(९८४) अपि च भट्टः शब्दशास्त्रनैपुणीं तस्य वर्णनचातुरीं कौशल्यं चोपस्करोतीति।

(९८५) विक्रमते स विक्रान्त इत्यमरोद्घाटने स्वामी।

(९८६) ग्रामस्तिरेऽस्मिन् किल चन्द्रकान्तं
निर्भिद्य विपणिं गोपाः (चम्पू० १।८८)।

(९८७) कुर्वन्ति चक्रा इव दिशो मेघाः सम्प्रतिष्ठते (बृहत्० १।३४)।

(९८८) आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयम् (भा० द्रो० ८१।२२)।

(९८९) सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् (रघु०

(९९०) ततः प्राकृतिर्दिष्टं पुनीयां पुत्रकारणात् (रा० १।१४।३)।

(९९१) त्वां विजेष्यस्युपायेन निषादं वा गमिष्यति (रा० ४।१२।१)।

(९९२) कस्ते न सन्निधिवति वाङ्निदेशे (रा० ४।३३।४१)।

(९९३) मिथो ऽनेनोपाद विवदति मैत्रीं भजति बोधतः (यो० वा० ६(२)४५।६९)।



(९९४) मृत्याः प्रिया: किल तथा सन्निष्ठति स भिक्षुः (यो०

१९६) राम भ्रूभङ्ग मात्रे ते सुचिन्तानन्दवर्धन (रा० ३।११९।२८)।

(१९७) तपश्चरत्व प्रदधात्मे सो हि युद्धं युयुत्सवः (रा० ४।११।२९)

(१९८) ब्रह्मचक्रपाणौ मैतिन् तत्र वाचमतीघते (भा० सभा० ४१।४०)

(१९९) देवशुनी इन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्या-
ख्यानम् (नि० ११।२५।१)।

(२००) अर्बुदेन गवां अध्मन् यत्र स्थानेन वा पुनः।
नन्दिनी सम्प्रयच्छस्व ... (म० आदि० )॥

(२०१) आसिभ्यां सम्यजह्राते परस्परं नरेन्द्रौ (भा० द्रोण० १४२।३६)

(२०२) भुजौ दीर्घौ निकुर्वाणम् (रा० ३।७४।१८)।

(२०३) इत्युक्त्वा मैथिली भर्तुरङ्के निषिषाद भयात् (रघु० १२।३८)।

१६९—ग्रहीतुं न ते शेकिरे दक्षिणाशाम् ।
१७०—परं ह्यग्रेमिरे सम्यग्ज्ञानाय मुनयः ।
१७१—तस्याकृतिं कामपि वीक्ष्य दिव्यामन्तर्भवच्छद्मविहङ्गमग्निम् ।
विचिन्तयन्संविविदे स देवः ( कुमारे ९।५ ) ।

---

## रूपाधिकारस्तृतीयः ।

१—यत्त्वं प्रास्तौषीस्तन्नाहमनुमोदे[1] ।
२—श्वोऽहं भ्रात्रे पत्रं लिखितास्मि ।
३—वामनजयादित्यौ काशिकां वृत्तिं सम्भूयारीरचेतामित्यनुश्रूयते ।
४—सम्प्रति प्रासादेषु निवस्यते पङ्कजसुरभिषु दीर्घिकासु च स्नायते ।
५—असुरास्तस्य सत्त्राऽस्य यज्ञे न संनिदधे ततः सोऽनुमिमाय कुपितोऽसौ मह्यमिति ।
६—अभ्युदीयादयं देशः स्वे महिम्नि च जागृयादिति नित्यमाशास्महे ।
७—केचिद्रक्ता अनुसरन्ति श्रियम्, श्रिया च केचिद्विरक्ता अनुसर्यन्ते ।
८—राजान्नं तेजो जरयतीति नेदं प्रत्यगृह्णन् द्विजाः ।
९—किं मुधा विभ्रमयसि मुग्धान् स्वानुगान् ।
१०—नहीदानीं वेत्थ । कालेन कियतापि वेत्स्यसि सारमस्य ।
११—यज्ञदत्तः षोडशवर्षां गुणग्रामात्मसदृशी[2] कन्यामुपायत[3] ।
१२—अतिश्रमः खलु जारयति तेज इन्द्रियाणाम् ।
१३—ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वाणि भूतानि यन्त्रारूढानि मायया ॥
१४—स तीर्थाटनव्यपदेशेन वृथा भुवमाटत् ।
१५—गां बधानीहि रज्ज्वा शिवके, नो चेद्व्रजान्निष्क्रामेत् स्वैरं च विचरेत् ।

---

१ अभिनन्दामि, समर्थये इति यावत् । २ गुणतुल्याम् । ३ ऊढवान्, पर्यणयत् ।

१६—को नाम सृद्यति विचित्रमिदं जगदन्यत्र विधेः।

१७—प्रज्वालय प्रदीपम्, उपस्थितः प्रदोषः।

१८—प्रतीहि[1] वा न वा। अहमस्य क्षोदिष्यामि जानू, भङ्क्ष्यामि चोरू।

१९—विप्राः शापेन शत्रूनपरेधू[2] राजन्याश्च चापेन।

२०—यो हि मन्दः परुषाक्षरैरसन्तत्क्णोति सुहृदः स विस्मरति न वाक्क्षतं संरोहतीति।

२१—वनमक्षिकाः खलु गर्हितं दंशन्ति, मक्षिकान्तराणि तु न तथा तुदन्ति।

२२—केचित्पुरातत्त्वविशारदाः पुरातत्त्वरत्नानि महता यत्नेनान्वसन्दधुरनुसन्दधति चापरे साम्प्रतम्।

२३—प्रचुरा अत्राशुद्धयो मातृकायाम्[3]। तथाऽपि यथामति यत्नेनापरिष्करवम्। तस्य सदसत्त्वे सुधियः प्रमाणम्।

२४—यो हि शादयति[4] गा इति वक्तव्ये शातयति गा इति ब्रूयाद् बाढं[5] दुष्येत्[6] स मूढधीः।

२५—यदि दुर्जनसंसर्गान्नोद्वेजिष्यसे नियतमात्मानं पातयिष्यसे।

२६—वत्स! त्रातारं मामुपस्थितोऽसि। अवेहि मां भुवः परिवृढम्[7]। मा स्म शुचः।

२७—एतावतीभिरद्भिर्न शोधिष्यन्ति नो वस्त्राणि।

२८—केकयान्प्रति दूतानप्रैषयन्राजमन्त्रिणो भरत आनीयतामिति।

२९—यदि त्वं तस्मिन्प्रेष्यसे[8] सोऽपि त्वयि प्रीतिं करिष्यति।

३०—यदि खलैः संजिगमिष्यसे तदा नरकाय रात्स्यसि।

३१—न हि क्रोधः क्रोधेन शाम्यति यथा विषेण विषमिति सत्यमेवावोचि तापसेन।

---

१ विश्वसिहि। २ हिंसितवन्तः। राधो हिंसायामित्येत्वाभ्यासलोपौ। ३ ग्रन्थादर्शे। ४ कालयति, प्रचोदयति। ५ भृशम्। ६ दोषभाग् भवेत्। ७ ईश्वरम्। ८ प्रीङ् प्रीतौ इत्यस्माल्लृटि।

३२—परिवर्ती लोकः । ये पूर्वत्र समृद्धिमच्छँस्ते सम्प्रति व्यृद्धाः ।

३३—हनुमताऽधिष्ठिता वानरा अनेकानि काननानि पर्यटन् न च सीता-
मासीदन् ।

३४—केचन ग्रामवृद्धाः कथं कथमप्या शतात् संख्यान्ति ।

३५—शाखिनोऽन्य शाखां चालयति शाखामृगः ।

३६—कुणिं[1] वा खञ्जं वा खलतिं[2] वा दृष्ट्वा मोपहासीः ।

३७—यदि साधुषु साधु वर्त्स्यसि[3] तर्हि वर्त्स्यसि[4] ।

३८—शर्करिल एष पन्थाः । स्खलयति नः पदे पदे ।

३९—न कितववचसि विश्वसेत् । कितव[5] इति पर्यायः शठस्य ।

४०—किमेवं धृष्णोषि ? धर्षयसि गुरूनिति किं शोभते ते ?

४१—प्रवासादागतश्चैत्रः पणिगृहीतीं कण्ठे बलवत्समाश्लिषत् ।

४२—न हि ज्योतिरन्तरेणातिशीयते विवस्वान् ।

४३—तेन सम्यगभ्यूहतेऽध्येतुं ग्लायति ममानुज इति ।

४४—अन्वतापि पापेन कर्मणा पापकृदित्यनुशासनायाभूल्लोकस्य ।

४५—समारन्त समाभीष्टाः संकल्पास्त्वय्युपागते ( भट्टौ ) ।

४६—विद्याशालं गच्छन्नहं गृहात्त्वामाह्वयिष्यामि ।

४७—सुव्रतेयं[6] गौः स्वयमेव दुग्धे ।

४८—सर्वस्वर्णमयी लङ्का न मे लक्ष्मण रोचते । पितृक्रमागताऽयोध्या
निर्धनाऽपि सुखायते ॥

४९—एवं प्रोत्साहितास्ते कमपि निगूढं स्वं महिमानं प्राचाकटन् ।

५०—अहो बत नक्तंदिवं श्राम्यन्नपि देवदत्तः परीष्टिं नापीपरत्[7] ।

५१—एतावता कतकचूर्णेनात्यर्थं मलीमसान्यपि परिधेयानि नेनेजानि ।

५२—आवेशनेषु कर्मकरा वेतनवृद्धिं तदीश्वरानप्रार्थयन्त ।

५३—ये राष्ट्रियमिदं विधानं व्यतिक्रमिष्यन्ति ते वन्धिष्यन्ते ।

५४—क्षिप्रमारभसे कर्म न दीर्घयसि राघव ( श्री रामायणे ) ।

---

१ कुकरम् । २ खल्वाटम् । ३ वर्तिष्यसे । ४ वर्धिष्यसे । ५ दुरोदरः । ६ सुखसन्दोह्या । ७ पार तीर कर्मसमाप्तौ इत्यस्माल्लुङि प्रामादिकं रूपम् ।

५५—यो मामस्थाने स्तुवीति भृशं तस्मा अभ्यसूयामि ।
५६—स्फुरति तेऽधरः । मन्ये किमपि पिप्रच्छिषसि ।
५७—चर्मरत्नं च धनमित्रमेव प्रतिभजिष्येति (दशकुमारचरिते पृष्ठे ११३)।
५८—समये तिष्ठ सुग्रीव ! मा वालिपथमन्वगाः ।
५९—एवं कदर्थिताः प्रजा अपरक्तारः[1] प्रकोपं चानल्पं जनयितार इति कः संदिग्धे ।
६०—राजान्नं तेज आदत्त इति तन् प्रत्याचचक्षुः पूर्वे तपःप्रधाना द्विजातयः।
६१—चिरन्तनो मे सखा यज्ञदत्तोऽद्य मया पथि [2]समार्तेति नन्दामि ।
६२—केचिदविप्रकृता अप्यनाक्रान्ता अपि व्याला गर्हितं दंशन्ति ।
६३—ये प्राणात्ययेऽप्यनृतं नोदीरयन्ति ते धीरा इति चक्ष्यते विचक्षणैः ।
६४—नहि प्रकरणमविज्ञाय श्लोकार्थः साध्ववदायते[3] ।
६५—यो दीनमार्तं जनं प्राणव्ययेनापि गोपयति स गोपाः ।
६६—प्रवृद्धः काञ्चनो वृक्षः फलकाले निकृन्त्यते ।
६७—आरिरात्सामि परार्थं शक्तश्चेत्स्यां न तु प्रतिरित्सामि ।
६८—निश्चिनुहि सौम्य ! अनुच्छित्तिधर्माऽयमात्मेति । माऽत्र विचिकित्सीः ।
६९—यः परेभ्यश्च धियं रायेन् स धीर इति कथ्यते ।
७०—ऐश्वर्यवृद्धिं मा विमुञ्चीः ।
७१—निर्वृत्तश्च राज्याभिषेकः, अहं चामोचि सहेतरैः संयतैः ।
७२—एवमाचरंस्तु बालोपि जिह्मेदात्मना ध्रुवम् ।
७३—यदि साधुषु साधु वर्त्स्यसे तदा वर्धिष्यसे ।
७४—सूर्यप्रभवो वंशः सूर्यवद् व्यरुचदिति न नो विस्मयाय ।
७५—आकाशमन्तरेण प्रकृतिः परमाणवो वा कुत्र स्थायेरन् ?
७६—पुरा भारते वर्षे गवादयो नात्रध्यन्तेत्यत्र कापि पयसः समृद्धिरभूत् ।

---

१ अपपूर्वाद् रञ्जेः कर्मकर्तरि लुटि प्रामादिकं रूपम् । अपरक्ता भविष्यन्तीत्यर्थः । २ सम्पूर्वादर्तेर्लुङि प्रामादिकं रूपम् । ३ शुध्यति, स्पष्टो भवति इति वक्तुरभिप्रेतम् ।

७७—अपि नाम प्रस्तरं द्रवयेन्नतु प्रत्यभिनिविष्टजनचित्तमाराधयेत् ।

७८—यन्नामासम्यक् चर्वितं निगिल्यते न तज्जीर्यति ।

७९—तिष्ठ, इदानीं ज्ञास्यसि जाल्म ! क्व नु गमिष्यते त्वया ।

८०—दिने दिने जायमाना अमी वृत्तान्ता नोन्मीलन्ति विलोचने एषां मूढानाम् ।

८१—क्रोधवशं गतः स सुहृदमाक्रुक्षन्महन्नाम चान्वताप्सीत् ।

८२—तथा बलमुपचिनुत यथा रन्धिष्यथ[1] रिपून् ।

८३—इदानीमहं भवदनुगृहीतः समजनि ।

८४—पुस्तकं क्व न्यधासीः, लघ्विदं[2] मृग्यताम् ।

८५—अहं हि भूयांसं श्रममतनोम्, अल्पीयश्च फलमवाप्नुवम् ।

८६—किं भवानाचक्षिष्ट ? नाहं भवदुक्तं प्रतिपद्ये[3] ।

८७—स्वसुताया विवाहमङ्गलमहे[4]ऽहं श्रद्धया ब्राह्मणानभ्यवहार्यं पायसम् ।

८८—यदि त्वां मिथ्या नापदेक्ष्यः परुषं च न व्यवहरिष्यस्तदा नाऽसौ त्वयि विरसोऽभविष्यत् ।

८९—संकुच्यमानेवाङ्गेषु लज्जया याति कुलाङ्गना रथ्यया ।

९०—बहवो व्यर्थेऽारम्भयुक्ता एव लोप्स्यन्ति[5], एवमभिरूपोयमर्थः[6] ।

९१—कुम्भीलको[7]ऽस्मद् धनमपहरतीति किं वयमपि तद्गृहे सन्धिं छिन्द्मः ?

९२—सद्भिर्बहुधा शपमानाः[8] प्रद्विषाणाश्चाप्यसन्तः क्षाम्यन्ते ।

९३—योऽभित्तौ चित्रं निर्मिमासति स साहसिको मूढः ।

९४—समानशीलौ कुलोद्गतौ शरच्चन्द्रो हेमन्तकुमारी चेति तां तेन पर्यणैषम ।

९५—बलीयसो नो द्विषतो निवर्हयेति ते परमेश्वरमप्रार्थयन्त ।

---

१ रध हिंसासंराद्ध्योः इति धातुः । २ क्षिप्रम् । ३ अभ्युपैमि, स्वीकरोमि । ४ उत्सवे । ५ लुभ गार्ध्ये इति धातुः । ६ सुन्दरः । ७ पाटच्चरः । ८ आक्रोशन्तः, अपभाषमाणाः ।

९६—कथं कथमपि व्यतीयन्तेऽमी दिवसाः, संक्षीयते चाहरहर्जीवितम् ।
९७—शब्दानामावापोद्वा[1]पव्यापारेणैव सर्वं न श्रायु व्ययति ।
९८—यो ह्यमायिको वरीवर्तते तस्य कृच्छ्रा वृत्तिरिति लौकिकाः ।
९९—मन्ये तनुरियं ते तनुरनशनेनाधिकं तानवं भजिष्यते ।
१००—कृत्याकृत्ये विविच्य कृत्यमुद्धरति सुधीर्नाकृत्यम् ।
१०१—एवं चिन्त्यमानेष्वाभ्युदयिकेषूपायेष्वचिरादेव समुन्नमिष्यत्ययं नो देशः ।
१०२—प्राणा इन्द्रियाणि चाहंश्रेयसि विवदिरे ।
१०३—पूर्वे खलु स्वं बोधमभ्यासनैरन्तर्येणैवाञ्चक्रुः ।
१०४—अत्र विषये सभापतिमहोदया बहु सुमधुरमुपान्यस्यन् ।
१०५—यथा पुरा विविधविषया प्रबन्धा न्यबन्धिषत न तथेदानीं निबध्यन्ते ।
१०६—कार्यारम्भे रभसो[2] न युक्त इत्येवाभिप्रैमः, न तु तत्र ते प्रवृत्तिं वारयामः ।
१०७—कस्मात्त्वं मध्येमार्गं तमरोधीः ? इदन्ते विचेष्टितं गर्हे ।
१०८—वाचि विचक्षणोऽसौ विदुषामपि कृतिषु दोषपूगानददर्शत् ।
१०९—यत्त्वं परधनेऽगृद्धास्तेनापन्नः[3] ।
११०—रे रे दुर्जनाग्रणे ! बाढमनियन्त्रितं ते तुण्डम्, विरमातः परं वाक्-प्रसङ्गात् ।
१११—इत्थं निधनं गते श्रवणे तत्पितरौ तन्ताम्येते प्राणैश्च मुच्येते ।
११२—दारुणमिममुदन्तं श्रुतवतां तेषां द्रविष्यन्ति सानुक्रोशानि चेतांसि ।
११३—देव ! बाधतेऽयं करो[4] नः । अयमपकृष्यतामिति सप्रश्रयं[5] सानु-रोधं चार्तीथपन्प्रजाः ।
११४—कार्यान्तरासङ्गान्नाहमशकमितः पूर्वं त्वत्प्रश्नमुत्तरयितुमिति त्वां क्षमापये ।
११५—हन्त देवदत्तस्तपस्वी वर्षपूगान्[6] व्याकरणमधिजगौ न च विवेद ।

१ आधानोद्धारौ । २ वेगः । ३ गृधु अभिकाङ्क्षायाम् । ४ भागधेयः, बलिः । ५ सादरम् । ६ वर्षगणम् ।

११६—परिमितसंख्या अपि ते ऽपरिमितैः समग्रामयन्त[1]। परं च पराक्रमन्त।
११७—ते निद्रातन्द्राभ्यामेव कालमनैषिषुः क्लेशं चान्ते ऽयुः।
११८—प्रिय सत्यव्रत! व्योग्जीव्या[2] नित्यं चाभ्युदीयाः।
११९—अयं निगमान्तविद्यालयः संस्कृतविद्यालयानां शेखरी[3] भूतो जाजागरीति।
१२०—न सम्पप्रच्छे गमनाय सत्वरा सखीजनम्....( अश्वघोषः )।
१२१—शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः (कुमारे)।
१२२—जीर्णमन्नं प्रशंसीयाद् भार्यां च गतयौवनाम्। रणात्प्रत्यागतं शत्रुं सस्यं च गृहमागतम्॥
१२३—अष्टमे गर्भाष्टमे वाऽब्दे ब्राह्मणमुपनयीत।
१२४—अवसितं नो नगरे कृत्यम्। सम्प्रति ग्रामं गन्तुमुपक्रम्यामहे।
१२५—निशामय तदुत्पत्तिं विस्तराद् गदतो मम ( इति चण्डी )।
१२६—कमलवनोद्घाटनं कुर्वते ये ( इति मयूरः )।
१२७—अद्य चिरं तं परिचिनोमीति सोऽसंशयमनुगृहिष्यति माम्।
१२८—निषादमपि वक्षसा त्रिपथगातटेऽपीस्पृशत्।
१२९—बहवस्तु व्युत्पत्तिविधुराः प्रमाण पत्रमेव लेलिहाना दृश्यन्ते परीक्षोत्तरणदृप्ताः।
१३०—न शरणवाञ्छयोपपन्नं भक्तं दूरयति भक्तवत्सलो देवः।
१३१—अत्युत्कृष्टमिदं तीर्थं भारद्वाज निशामय।
१३२—मायूरी मदयति मार्जना मनांसि ( इति मालविकायाम् )।
१३३—मौहम्मदा अकारणमेव हिन्दूनद्विषुर्द्विषन्ति च।
१३४—कार्तिकेयेन तारको नामाऽसुरोऽवधि स्वास्थ्यं च दिवोऽकारि।
१३५—भीमकान्तैर्नृपगुणैः सनाथितस्त्वं चिरं चकाधि।
१३६—भृशं रोचते शोभत इति रोरुच्यते।
१३७—किमत्र न्याय्यम्—यङ्लुकि लुङि अबोभवीदिति अबोभूवीदिति वा।
१३८—पूर्वे राजन्याः स्वदेशप्रेमाग्नौ स्वप्राणांस्तृणवदजुहवन्।

१३९—अहं हि मध्येमार्गं प्रसह्योपारोधिषि देवदत्तेन, तेन मे कालातिक्रमोऽभूत् ।

१४०—यादृंशि कर्मबीजान्युप्यन्त तादृशा एव प्ररोहाः प्रादुरभवन् ।

१४१—नान्यस्मिन्स्नेह्यामः, नान्यस्य श्रद्धीमः ।

१४२—विप्रयोगचिन्ता हि पातयत्यश्रूणि रुणाति च क्षणं कण्ठम् ।

१४३—स्वान्तं शिष्यजनस्य नित्यमुदितं धर्मे सदा दक्षतात् ।

१४४—स सभायां किमप्यपूर्वमुपन्यास्त, न तत्प्रत्यायन् सभासदः ।

१४५—वनस्थमपि तापस्ये यस्त्वामनुविधीयते ( रा० ३।१६।३३ ) ।

१४६—कुतस्तेऽस्य धनस्य लब्धिरित्यभियुक्तः स किमपि नोदतरत् ।

१४७—अयि किमन्वेषसे, किं ते नष्टम् ?

१४८—ते देवा विष्णुमुपेत्य प्रार्थयामासिरे त्रायस्व नस्तारकादिति ।

१४९—जाग्रत जाग्रत भोः सखायः । नाऽयं स्वापकालः ।

१५०—प्रचेरुर्दिक्षु सर्वासु वेदधर्मप्रचारकाः ।

१५१—यो जागार तमृचः कामयन्ते ।

१५२—यदि प्रेत्यभाव उपपत्तिभिर्न सिध्यति मा सैत्सीत् । श्रुतिस्त्वस्यानुग्राहिकाऽस्ति ।

१५३—तेऽयं निजोऽयं पर इति नाविदन्, तेनाहीयन्त ।

१५४—कैश्चिद्वेदाः क्रियार्था यज्ञपरा एवामानिषत ।

१५५—स्वतं दृढयति परमतं च प्रतिक्षिपति ।

१५६—उपनमय मे रथं यावदारोहामि ।

---

## लकाराधिकारश्चतुर्थः ।

१—अपि यायाः अपि तिष्ठेः । नाहं ते स्वातन्त्र्यमाच्छिनद्मि ।

२—अप्येतु सागरो वेलाम्, अपि वह्निः शीततां यातु न त्वहं पितुर्वचनमत्ययानि ।

३—आश्चर्यं संस्कृतमतयो द्विजातयोऽप्येवं शास्त्रविधिमुत्सृज्य वर्तन्ते ।

(१५७) प्राज्यते ऽनेनेति प्राजनं प्रतोदः ।

(१५८) एवं वै ज्येष्ठो ज्येष्ठिनेव पुत्र मा पाण्डवाञ्छिषः (भा० सभा० ५४।१)

(१५९) मा ते बुद्धिः सारस्तु मा प्रवादीः (भा० सभा० ७४।१०)।

(१६०) मा भैः शशाङ्क मम सीधुनि नास्ति राहुः ।

(१६१) हरे यदि क्वापि यदैकदेन स्मर (नै० )।

(१६२) नैनं वनमन्तमपि नामयितुं यतेत (सुश्रुत० उत्तर० १९।१०)।

(१६३) जलमज्जनकल्माषं मा मोहीरानन द्विजम् (हरि० ११६६।३८)।

(१६४) तं पातयां प्रथममास पपात पश्चात् (रघु० )।

(१६५) उद्भ्रान्तप्रचक्रु गिरस्य मार्गान् (भट्टि० ३।५)।

(१६६) अवयामि जयामि यामि (भोजप्रबन्धे)

(१६७) उज्जो दहति चाङ्गारः शीतः कृष्णायते करम् (हितोप० )।

(१६८) यस्मिन्निवेदः क्रियते मूलमिति पुरस्ताद् दरिदृश्यते त्व दरिदर्श-
क्रियते च निदर्शनान्तरैः परस्तात् ।

(१७०) मा यान मा यान्त गहनान् विमूढा
गाङ्गं विहायाखिलभुक्तिनीरम् (श्रीवेङ्कटेशजदिग्विजयसारे २५।१८)

(१७१) अथ दातैं निचिकित्साऽपाकृतये मीमांसा जगत्यवलतीत ।

(१७२) मा त्व मूलमन्ते वदीः (मनु० ८।९९)।

(१७३)

(१७४) नाविदासीददित्सीनु सौमुख्यात्त्वं स्वमर्थवत् (सौन्दर० २।१८)।

(१७५)

(१७६) येषा वने शान्तविलासदास्याः (नै० )।

(१७७) नियमयति विमार्गप्रस्थितानात्तदण्डः (शा० )।

(१७८) मङ्गलश्लोकपाठादूर्ध्वं सूत्रधारः प्रकरणं प्रास्तोत् ।

(१७९) अश्वाः स्वयमेवाकर्षि बलात्कारात् स्वहस्तेन ।

(१८०) श्रीमत्पण्डितराज पण्डितजगन्नाथो व्यधासीदिदम् (प्राणा-
भरणे)।

(१८१) उदगग्नेरुत्सृज्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिरा-
चामेत त्रिः प्रमृजीत (गो० गृ० १।२।५)।

(१८२) ये वीतरागाणां मुनीनां वचनामृतमापिबन्ति
ते धन्याः ।

(१८३) गीर्ते चाध्यवसाने च खेलमाचक्ष्यते बुधैः ।

१७० — कुर्वं नाम दुन्दुभ्याम... ते स्वर्गे: (भा० शान्ति० ८०।५९)।

(१८४) तैः साध्यसिद्धौ ते तेऽभ्युपायाः क्वचं क्वचन स्वुपा-
लम्भित।

(१८५) आपत्कालिकप्रशासने जननायकः श्रीराजपतो बहुर्ज-
नव्यथीत्।

(१८६) अयं कदाचार इदं वैशसं च सर्वं राष्ट्रमान्दूदुलत्।

(१८७) अयं धर्मोऽयं चाधर्म इति मूर्खैः साधु व्यज्ञास्यत।

(१८८) सौहृदं दुस्त्यजं चिन्तोरहायः (भा० पु० ५।५।२६)।

(१८९) स्नायते पटः स्वयमेव।

(१९०) सूर्येणान्तरधीयत।

(१९१) तत्क्षामये त्वामहमप्रमेयम् (गीता० ११।४२)।

(१९२) अशिक्षियद् अशिक्षायद् इत्येतयो रूपयोः ~~क्वचरसाधु~~ रेकतरं साधु-
भवं वेद्मि ~~भवं चेति~~ निर्णेतुं चेत् लहसे नूनं शाब्दिकोऽसि।

(१९३) यं घटं करोति तमानयेत्यर्थे यं घटयति तमानयेति
प्रयोगे किं दुष्यति।

(१९४) मा दीदरस्त्वं सुहृदो मा त्वां दीर्घं ग्रहासिषुः (भा०)

(१९५) तर्षन्ति भूरि विषयाश्च न लोभपाशाः (भर्तृ० नीति० ७५)।

(१९६) अश्नीमहि वयं भिक्षामाशावासो वसीमहि (भर्तृ० वै० [illegible])।

(१९७) हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यवज्ञायते (भर्तृ० वै० ७३)।

(१९८) गतिं जिगीषतः पादौ रुरुहातेऽभिचारिकाम् (भा० पु० २।
१०।२५)।

(१९९) मयर्षेऽरीन् 'विजघ्निथ (भा० पु० )।

(२००) उपनामयति करोऽन्नं रसांस्तु जिह्वैव जानाति।

४—अभिजानासि[1] देवदत्त ! शैशवे पांसुषु सहाक्रीडाव ।
५—गच्छ पुरा वर्षति देवः । अवस्थास्यसे चेदभ्युक्षिष्येते[2] वे वाससी ।
६—यदि गुरुचरणाः साम्प्रतमागच्छेयुराशंसे युक्तो[3]ऽधीयीय ।
७—अपि पतिष्यति जनः पतितैः समीयमानः[4] ।
८—जातु त्वादृशः कुलोद्‌गतो जन ऋषीन्निन्दिष्यति, नावकल्पयामः[5] ।
९—अपि त्वं पर्यविन्दो[6] दारान्, अपि त्वं शूद्रामुदवहः । अहो अन्याय्यमेतत् । अहो गर्ह्यमेतत् ।
१०—योऽयं भृगुवासर आगामी तत्रायं दक्षिणाप्रीकां प्रति प्रस्थाता ।
११—स यावज्जीवमर्थिभ्योऽन्नमददात्, अनाथांश्चान्वगृह्णात् ।
१२—कामो मे भवान्मद्‌गेहे श्वो भुङ्क्ताम् ।
१३—अहं हि धनुर्भृतां वरं देवदत्तमपि जेष्यामि हेलया, किमुतान्यान् धनुर्धरान् ।
१४—कालोयं यद्भवान् दारान्कुरुताम् ।
१५—प्राप्तावसरस्त्वं धनमर्जयेः । पश्चान्निवेदयसे[7] ।
१६—अहमितोऽह्ःसु कतिपयेषु वङ्गाञ्जगाम तत्र च चिरं बभ्राम ।
१७—अपि दोर्भ्यां तरतु पाथोधिमनाविको न त्वहं प्रतिज्ञां त्यजानि ।
१८—स्त्रियोऽपि पुरा निरङ्कुशं विद्यामभ्यस्यन्ति स्म ।
१९—दृश्यमानस्तु युध्येथा मया युधि नृपात्मज ! । अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ।। ( श्रीरामायणे रामं प्रति वालिन उक्तिः ) ।
२०—कच्चित्परीक्षायां सकामः[8] स्याम् ।
२१—अहं चेद्ब्रह्मचारी सन्सर्वमायुरवसं शक्तिमत्तरोऽभूवम् ।

---

१ स्मरसि । २ अभिषिक्ते भविष्यतः । उक्ष सेचन इति धातुः । ३ समाहितः, एकाग्रचित्तः । ४ संगच्छमानः । ईङ् गतौ दिवादिः । ५ न संभावयामः । ६ ज्यायांसं भ्रातरं परित्यज्य अविन्दः । ७ निवेशो विवाहः । ८ समृद्धमनोरथः ।

२२—यदि विनेतृजनः प्रमनायतां[1] यदि विनेयगणश्च सुखायतां[2] तदाऽसंशयं मे कृतिरियमवितथायताम्[3] ।

२३—ऋते तु बुद्धिमात्मीयां कः प्रभूयाद् विनिर्णये ?

२४—अयं तु कदाऽध्येष्यते य एवमनभियुक्तः[4] ।

२५—अरुणद् यवनः साकेतमिति भाष्यकारः स्माह । तत्र लङ् प्रयोगः किंकृतः ?

२६—अद्य श्वो वा गन्तास्मि । अवशिष्यते प्रस्थानसंभारः कर्तुम् ।

२७—अद्य ह्यो वा प्रातः शाकमभुञ्ज्महीति न सुष्ठु स्मर्यते ।

२८—सखेऽन्यत्रमना अहमभूवम् । अन्यथा सभाजनीयं त्वां कथं नासभाजयिष्यम् ।

२९—येषां कुसुमानामामोदो न जाने कियन्ति दिवसानि दिशोऽवासयिष्यत् तानि प्रसाधनरसिका अकाल एवावचिन्वन्ति ।

३०—कर्णिनी वै भूमिः, विविक्ते कथय, मा कश्चिद्रहस्यं शृणुयात् ।

३१—यदि वर्षसहस्रं जीवेयं तदा पुत्त्रशतं जनयेयम् ।

३२—मा स्म सीमन्तिनी काचिज्जनयेत्पुत्त्रमीदृशम् ।

३३—अथाहं प्रसन्नस्तं निजगाद—साधो बहूपकृतोस्मि, नाहं तेऽनुग्रहं विस्मरिष्यामि ।

३४—वेलेयं यत्पाठालयं गच्छेम ।

३५—तत्र समये तादृशं व्यवसायमनुसरन्कश्चित्कथं नाम धनिकोऽभविष्यत् ।

३६—लज्जा तिरश्चां यदि चेतसि स्याद् असंशयं पर्वतराजपुत्त्र्याः । तं केशपाशं प्रसमीक्ष्य कुर्युं र्वाल प्रियत्वं शिथिलं चमर्यः ( कुमारे ) ।

३७—गामधास्यत्कथं नागो मृणालमृदुभिः फणैः । आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत् ।।

---

१ अप्रमनाः प्रमना भवतु इति भृशादित्वात्कर्तरि क्यङ् । २ सुखमनुभवेति । सुखादिभ्यः कर्तरि वेदनायाम् इति क्यङ् । ३ अवितथा वितथा भवतु । अर्थवती भवत्वित्यर्थः । ४ अनेकाग्रचित्तः ।

३८—न हि ग्रन्थकारः संमूढोऽभूत्, यत्स्वमतेन विरुद्धमलेखिष्यत्।
३९—प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो (कुमारे)।
४०—तदयमपि हि त्वष्टुः कुन्दे भविष्यति चन्द्रमाः (अनर्घराघवे ३।८०)।
४१—न भविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः (रघौ ८।४४)।
४२—कालोऽयं कलिराजगाम जगतीलावण्यकुक्षिम्भरिः।
४३—परिघोरुभुजानाह हसन्ती स्वागतं कपीन् (भट्टौ)।
४४—नहि कश्चिदन्त्यजोऽद्यापि प्रविवेश निषिद्धान्त्यजप्रवेशानि देवतायतनानि।
४५—बहु जगद पुरस्तात्तस्य मत्ता किलाहम्।
४६— सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्।
४७— आतेने किरणावलीमुदयनः।

## सकर्मकाकर्मकत्वाधिकारः पञ्चमः।

१—अथ केन कालेन चलितस्त्वयैष पन्थाः[1]?
२—ये गतं रुदन्ति ते सततं रुदन्ति।
३—परकीयमर्थं लुभ्यन्नात्मनः पातित्यमेव साधयसि केवलम्।
४—कदा मां पुनर्मेलिष्यसि। कामो मे न त्वं चिरयेः।
५—अतिमात्रं स्निह्यत्यम्बा शिशुकम्। नित्यं च शङ्कते माऽस्यानिष्टोपनिपातो भूत्।
६—स पापो यः परकीयमर्थं गृध्यति। गर्धो हि पापस्य मूलम्।
७—यत्र वातो नेङ्गति तत्र तरवो न धुन्वन्ति।
८—प्रीताः प्रजाः प्रेक्ष्य प्रीणाति परमेश्वरः।
९—निरायुधेषु दुर्बलेष्ववस्कन्दन्नरो राध्यति नरकाय।
१०—अथं केन वृत्तिमकल्पथा इति गुरुणाऽनुयुक्त[2] उपमन्युर्गवां पीतशेषेण पयसेति प्रत्याह।



१ अतिक्रान्त इत्यर्थो विवक्षितः। २ पृष्टः।

११—किं ते स्वादन्तेऽमी मोदका आहोस्विन्न । मह्यं तु बहुतरं स्वदन्ते ।
१२—इयं हि संस्कृतं नाम दैवी वाक् । अनया वयमुपजीवामः प्रतिष्ठां च लोकेऽधिगच्छामः ।
१३—पुरा किल पराबभूविरेऽसुराः सुरैः । अतिमानो हि तेषां पराभवे हेतुरुच्यते ।
१४—देवदत्तायेक्षते दैवं गर्गः ।
१५—ततः प्राप्ते वैजनने मासि राज्ञी पुत्रमजायत ।
१६—लुलोप वर्णभेदः, सर्वं च संकुलमिव बभूव ।
१७—ते महर्षयो वर्णानामाश्रमाणां च धर्मानादौ शिशिक्षिरे सुखं लोकयात्रां निर्वहन्तु लोका इति ।
१८—योऽयं हव्यवाहने हव्यप्रक्षेपः क्रियते स सूक्ष्मीभूय विस्तीर्य[1] च मातरिश्वानं व्यश्नुते ।
१९—न हि सुनिपुणोऽपि स्वस्कन्धे आरोढुं क्षमः ।
२०—तस्माद्युग्मासु पुत्रार्थी संविशे[2]दार्तवे स्त्रियम् । ( मनुः )
२१—ये ब्रह्मचर्यं चरन्ति ते ब्रह्मवर्चसेन संयुवन्ति[3] ।
२२—वृक्षशाखास्ववलम्बमानानि वल्क[4]वासांसि सूचयन्त्याश्रमपदमेतदिति ।
२३—अवलम्बस्व मां प्रभो ! त्वामेवाहमवलम्बे ।
२४—स्वकं गेहकं विहाय नदीकूलमुपशेषे । किं कलत्रेण कलहायितोऽसि ?
२५—तदानीमार्यावर्ते सौगता भिक्षवो व्यानशिरे[5], विहारांश्च यत्र तत्र निर्ममिरे ।
२६—इह भारते संन्यासमार्गः कदा प्रारभतेति सहसा वक्तुं न पारयामः ।
२७—भूविचाले कदाचिच्छिखरिशिखराण्यपि भङ्क्त्वा निपतन्ति ।
२८—ये महात्मभिरपि समं विरुन्धन्ति, विरुन्धन्ति ते आयतिकं[6]स्वमभ्युदयम् ।

१ विस्तीर्णो भूत्वेति विवक्षितम् । २ सह शयीत । ३ संयुञ्जन्ति । ४ त्वग्वस्त्राणि । ५ व्याप्नुवन्ति स्म । ६ आयतौ भवम् । आयतिरुत्तरकालः ।

२९—येन प्रदेशेन प्रवणेन[1] नद्यामवतरति सोऽवतार इति वा तीर्थमिति वोच्यते ।
३०—यष्टिभिर्लगुडैः पाषाणैश्च भायिताः शाखामृगा वृक्षेष्वारोहन्ति सद्यः ।
३१—दण्डात्कथं नाम मुञ्चेमेति मृगयन्ते हेतूनागस्विनः[2] ।
३२—अतृणे पतितो वह्निः स्वयमेवोपशाम्यति, न च समिन्धितुं शक्नोति ।
३३—वत्स ! आगमयस्व तावत्, रध्यत्योदनः ।
३४—बहवो रक्षापुरुषा युगपदेव लुण्टाकस्य शरण[3]आक्रमिषुः ।
३५—कण्डूयते मे पादतलम् । ब्रूहि किमिवाऽस्य फलं भविष्यति ।
३६—अत्रावधत्त भोश्छात्राः । श्वो ये काले न संनिधास्यन्ते ते दण्डयिष्यन्ते ।
३७—पूर्वे हि दीनेषु दुर्गतेषु च सविशेषमनुचकम्पिरे ।
३८—शिशू पितुरङ्कमुपविष्टौ किमपि वाङ्मनसागोचरं सुखं निर्विशतः ।
३९—विप्रवत्स्यता तनयेनाश्लिष्यच्छोकपर्याकुला साश्रुनेत्राऽम्बा, मुक्तकण्ठं चारोदीत् ।
४०—इमे रथचर्यायां चिरमभ्यस्ता अश्वारोहणे चाद्वितीयाः ।
४१—अयं ते क्लेशानुभवो गच्छता कालेन लोप्स्यति ।
४२—यः परान्मीनाति[4] स स्वयं किं न मीयते[5] ?
४३—असन्तोऽपि सद्भिः सह संघृष्य शक्ता आत्मानमुन्नमयितुम् ।
४४—यदा तमोगुण उद्रिणक्ति[6] तदा सत्त्वं रजश्च तिरोभवतः ।
४५—कालिकमिदं[7] सदनं सम्प्रति विशीर्णम् इति पुनर्निर्माणमर्हति ।
४६—विपुलेयं भूर्नानामतैर्नानावृत्तैर्नानाभावैर्मनुष्यैरुषितेति महद्वैचित्र्यम् ।
४७—न हि मलयचन्दनतरुः परशुप्रहतः स्रवेत् पूयम् ।

---

१ निम्नेन । २ आगोऽपराधः, तद्वन्तः । ३ गृहे । ४ मीञ् हिंसायाम् । ५ मीङ् हिंसायां दिवादिः । ६ उद्रिक्तोऽधिको भवतीत्यर्थो विवक्षितः । ७ प्रकृष्टकालं चिरन्तनम् ।

४८—संसृज्यते घृतं शर्करयाऽभ्यागतं भोजयिष्यामीति ।

४९—नाम्नैव शिष्टवति रुग्णजने किमाश्वासकेन भिषग्जल्पितेन ।

५०—अल्पपरिवारोऽभीतवन्निर्याति मृगयां राजा ।

५१—चिरं मृगयां क्रीडति स राजा, नावेक्षते स्वस्य हितं न च प्रजानाम् ।

५२—नवनीतं चोरयित्वा मातुरपह्नुते कृष्णः ।

(५३) दुनोति पातकं स्मृत्वा विधुनोति महात्मनः (देवीभा० ८।३।८८)।

(५४) नाना नान्ति दिशो दश।

५५— मा नः [illegible] (अ[illegible]० [illegible]।१९६)। ६

## अथोपसर्गेषु विवेच्यानि ।

१—स प्रातः सायं च विजुहोति हव्यवाहनम् ।

२—वियोगवह्निर्न भस्मसात् संस्कुरुते शरीरं ग्लपयत्येव त्वहर्निशम् ।

३—न च पामरैर्विप्रलभ्यः सतां सङ्गः ।

४—द्वेषो वा द्रोहो वा शसनं[1] वा गर्ह्यतमं कर्मेति शास्त्रकाराः ।

५—अनाद्यनन्ता सर्गसंसृतिरियमित्याहुरभियुक्ताः[2] ।

६—अमेध्ये पतितं काञ्चनं न न चिनुते जनः ।

७—दीप्यते सप्तसप्तिर्न तु सन्दीप्यते । अस्ति हि दीप्तिसन्दीप्त्योर्विशेषः । कथं वा मन्यसे ?

८—देवमन्दिरप्रवेशे त्रैवर्णिका एवाधिकृता इति न शास्त्रे क्वचित् प्रतिश्रूयते ।

९—अहं हि तं धर्मं विसृजेयं योऽस्पृश्यत्वं शिष्यात् ।

१०—आङ्गलेषु ज्येष्ठ एव सुतः पितुर्दायमनुहरतीति सामयिक[3] आचारः ।

११—दानवत्रासविह्वस्ता देवयजो यागकर्तृतामुदवीवपन् ।

१२—एवं परापचिकीर्षया ये कुचेष्टन्ते ते हठान्निरोद्धव्याः ।

१३—आमुक्तशस्त्रस्य द्रोणस्य शिरश्चकर्त धृष्टद्युम्नः शरेण ।

---

१ हिंसा । २ विपश्चितः । ३ समयः पौरुषेयी व्यवस्था, तत आगतः सामयिकः ।

१४—उदहारि[2] ! या त्वं शिरसा कुम्भमावहसि सा त्वं किमिति विषमेण पथा धावसि ?
१५—यः शब्दान्सम्प्रयुङ्क्ते नाऽपशब्दान्स व्याकरणं वेद नेतरः ।
१६—शूरोऽपि नृपतिः पथिच्युतश्चेद्भवति निःशङ्कं प्रजाभिः संहननीयः ।
१७—व्याख्यागम्योऽयं सन्दर्भः सूरीणामपेक्षते व्याख्यां वैशद्याय ।
१८—धर्मादर्थः प्रजायते, अर्थाच्च काम इति स्मर्यते ।
१९—भिद्यन्ते हि धर्मा युगावर्तानुसारेण । उक्तं हि महाभारते—न चैकान्तिको धर्मः, धर्मस्त्वावस्थिकः स्मृत इति ।
२०—यस्मात्पुर्यनुशेते तस्मात्पुरुष उच्यते ।
२१—द्वितीयस्यामावृत्तौ ग्रन्थेऽस्मिन्नर्थभेदस्तु न क्वापि कृतः, विशेषस्तु विलिखितः ।
२२—ग्रन्थमिमं संवीक्ष्य महदुपकृताः स्म इत्यनुभविष्यन्ति च्छात्राश्चोपाध्यायाश्च ।
२३—यथाऽहं वैदेशिकैः संवर्ते तथा स्वदेशजैः । नैकत्र मे पक्षपातोऽस्ति ।
२४—भवद्वचनानङ्गीकारे दोषा अपि केचन परापतन्ति ।
२५—इतः प्रेत्य जन्मान्तरं सन्दधति जीवाः । अनुच्छित्तिधर्माणो हि ते ।
२६—अपदे पदसंनिधानेन महान्तोपि गर्हां लभन्ते ।
२७—यः खलु बाल्ये विरज्य प्रव्रजति द्वितीये च वयसि विलीयते विषयेषु सोऽधमो नृणाम् ।
२८—अयि प्रगल्भवादिन् ! सत्यवचसमपि मामसत्यवचसं संकरोषि ।
२९—कोमलास्तरणायां सोपबर्हायां शय्यायां प्रतिशयितोऽहं चिरं निद्रासुखमन्वभूवम् ।
३०—विषयेषु निलीना आत्मानमपि विस्मरन्ति किमुतात्मीयान् ।
३१—हा दास्याः पुत्त्रैर्मधुकरैः सन्दश्ये । त्रायस्व मां सखे ।
३२—केचिदध्यापकाभासाः शिष्याणामर्थं परिहृत्य स्वार्थं साधयन्ति ।

---

२ उदकं हरतीति, उदहारी, तत्सम्बुद्धौ ।

३३—ईश्वराश्च[1] दरिद्राणामुपकण्ठमपि नोपगच्छन्ति, साह्यकरणं तु दूरेऽपास्तम् ।

३४—नदन्ति च बलाहका वार्योघसंग्राहकाः, दूरे च वसतिः । किमत्र शरणम् ?

३५—साम्प्रतिका हिन्दवो हिन्दीमपि विरलमेवासेवन्ते किमुत संस्कृतम् ।

३६—कस्मिंश्चिन्निवसथे सोमदत्तो नाम ब्राह्मणः प्रतिवसति स्म ।

३७—ब्राह्मणेषु प्रमूढेषु[2] राजन्यवैश्या अज्ञानोपहताः स्युः ।

३८—नहि पदान्तरसमभिव्याहार[3]मन्तरेण केवलं सुभाषितमिति पदे समुच्चार्यमाणे माधुर्यविशेषस्यानुभूतिरस्ति ।

३९—इति यथामति स्वमतमुपन्यसितुं परमतं चापोहितुमायते ।

४०—कल्याणी खलु तस्य मतिर्यः शास्त्रशीलनेऽभिविशति[4] ।

४१—न हि गोगौरवं गुरुणा[5]ऽपि निरवशेषं गीर्यते ।

४२—एवं स्वैरिणः सन्तस्ते तमोगर्ते महति संनिपतन्ति ।

४३—धर्मचर्ययैवार्थकामौ संलभते जन इति भारते व्यासवचनम् ।

४४—यथाऽबलाहरणं तथा धनाहरणं पतनीयेषु[6] गण्यते ।

४५—उत्पीडिता अपि पाकिस्थानगता हिन्दवो नैच्छन्गृहांस्त्यक्तुम् ।

४६—न यस्य काराभवनेषु देवना , प्रताडितस्यापि न कापि वेदना ।

४७—यदेव देशाभ्युदयिकमिति रभामहे तदेवाक्षिगतं भवति परेषाम् ।

४८—मेघनादशक्त्या मर्मस्वाहतो मूर्च्छितः सौमित्रिर्हनुमदाहृतयौषध्या जीवितोऽभूत् ।

४९—मातुराशिषः प्रगृह्य पुत्त्र आत्मानं कृतिनममन्यत ।

५०—यज्जीवतस्त्वचमाच्छिन्दन्ति तत् किमपि दुःखं तस्य जनयन्ति ।

५१—गुरोरन्तिकमुपेहि बटो ! व्याकरणं चागमय[7] ।

५२—यदि कथासंकथयोस्ते विवेकोऽस्ति नूनमुपसर्गव्यवहारं प्रजानासि ।

---

१ धनिनः । २ अज्ञानिष्वित्यर्थो विवक्षितः । ३ समभिव्याहारः संनिधावुच्चारणम् । ४ आग्रहवान्भवतीत्यर्थो विवक्षितः । ५ बृहस्पतिना । ६ पातकेषु । ७ विलापः । ८ शिक्षस्व ।

५३—धीरा अपि दुर्जनान् संचक्षते[1], खलसम्पर्कभीरवो हि ते।
५४—उपयुक्तशेषं धनं धर्मार्थे नियुञ्जीत, पात्रेषु वा प्रतिपादयेत्।
५५—देवा ह्यतीतानागतयोः परिवेत्तारः कामानां च दोग्धारः।
५६—ये ये ते परिचिताः सखायो वा सर्वे ते महे स्मिन्नुपमन्त्रयितव्याः।
५७—य आत्मानं तारयितुमनीशः स परान्कथमवतारयेत्।
५८—अहं त्वयि दिनत्रयीमेव पर्यवस्थाताहे, ततो मयाऽऽवश्यमितः प्रस्थेयम्।
५९—उल्लिखिते सन्दर्भे कवेराशयं व्याख्याहि, स्वं मतं च तत्र ब्रूहि।
६०—नानादिग्देशेभ्यः सीतासंवरणार्थमागता राजन्याः शाङ्करं धनुरुत्तोलयितुमपि नेशाञ्चक्रिरे[2] किम्पुनरारोपयितुम्।
६१—प्राकृतान्मा प्रतीषीः प्रसादम्।
६२—कालान्तरे तवोपकरिष्यामीति मा त्वमावधीर्मामिति मूषिकः सिंहम्प्रत्याह।
६३—विविक्तासनो निमीलितनेत्रो नित्यं प्रातः परमेश्वरं निध्यायेत्।
६४—तत्त्वं ज्ञातुं विचेष्टस्व। अक्षरार्थेन ज्ञातेन केवलेन नार्थः।
६५—न हि शशाङ्कविरहिता कुमुदिनी शोभामादधाति।
६६—अथेष्टदेवतामामृशति[3] मङ्ग ं च कामयते।
६७—सुजनास्तु दोषज्ञा[4] अपि परदोषेषु दृष्टिमपि नाक्षिपन्ति।
६८—उत्पथप्रस्थितः को नाम शक्योऽवरोद्धुं प्रत्यभिनिविष्टश्चेत् स भवति।
६९—व्यृद्धपूर्वः[5] सम्प्रति समृद्धोऽविनीतो न समाभाषते सखायमपि।
७०—मनाग् इह समवधीयताम्। अहमस्मि ते किमपि रहस्यमाचिख्यासुः।
७१—आयुर्वेदे निष्ठितोऽप्ययं[6] भिषङ् मन्दं विचिकित्सत्यातुरान्।
७२—यावदेव तं द्रक्ष्यामि तावदेव संदंनिष्यामि।
७३—सन्दिग्धफलेन पत्त्रिणा[7] चकर्त शूरो द्विषतां शिरांसि।

---

१ परिवर्जयन्ति। २ न समर्था बभूवुः। ईशेर्लिटि रूपम्। ३ ध्यायतीत्यर्थो विवक्षितः। ४ विद्वांसः। ५ पूर्वं दरिद्रः। ६ प्रवीणः। ७ बाणेन।

७४—अस्मरसि कृष्ण ! गोकुले वत्स्यामः ?
७५—संजानानान्[1] परिहरन् रावणानुचरान्बहून् ( भट्टौ ८।२७।। ) ।
७६—बाणमुद्यतमायंसीत्[2] ( भट्टौ ६।११९।। , ।
७७—वृद्धौरसां राज्यधुरां प्रवोढुम् ( भट्टौ ३।५४।। ) ।
७८—सन्धत्ते भृशमरतिं हि सद्वियोगः ( किराते ५।५१।। ) ।
७९—आसन्द्यां सुखं संशयानो धनिकः स्वादुङ्कारं ताम्बूलं चर्वति ।
८०—यो हि साध्वतिग्राहयति कृत्यं स सुखं प्रैधते ।
८१—कशाप्रहारवर्षेण प्रवाहयति वाहान् देवदत्तो नियन्ता[3] ।
८२—महाकाव्यानुशीलनोपप्लावितो ब्रह्मानन्दसहोदरो रसः कर्णेहत्य निपीयताम् ।
८३—विनेया[4] व्याकरणे न्याये च तथाभिविनेया[5] यथा गुरुसाहाय्य-निरपेक्षं ग्रन्थान् संलापयेयुः ।
८४—अहह ! सदाचाराः प्रबलवात्योपहता इवोड्डीयन्ते ।
८५—महानस्य विकार उज्जृम्भते रुजार्तस्य । पीयूषपाणिर्ध्रुवसिद्धिर्नाम वैद्योऽप्यत्र विमुह्यति ।
८६—अहो स्पृहणीयः स कालो यत्र विद्वत्सु गुणग्राहिता समसरदनुरागश्च ।
८७—शाकुन्तलादीनि नाटकानि रङ्गस्थलेऽभियोक्तव्यानि जनरञ्जनाय ।
८८—व्यपेता वर्षाः । अद्यापि नोत्तिष्ठते[6] सीतासंमार्गणे सुग्रीव इति कुप्यति रामः ।
८९—कथं व्याहन्यते वालिना ते सखा सुग्रीवः ।
९०—सत्यं संसारशुचामाहर्ता हरिः । प्रसिद्धा हि भगवतः करुणा प्रणतेषु[7] ।
९१—केशांशु प्रसितो[8]ऽयं युवा नित्यं नवां कुन्दमालां परिधत्ते ।

---

१ जानतः, परिचिन्वत इत्यत्रार्थे कविप्रयोगः । २ उपसंहृतवान् इत्यर्थो विवक्षितः । ३ सारथिः । ४ शिष्याः । ५ शिक्षणीयाः । ६ नोद्युङ्क्ते, उद्योगं न करोति । ७ भक्तेषु । ८ संलग्नः ।

९२—अत्र समवधानं दीयमानं प्रार्थये ।

९३—क्रोपपरीतोऽसौ संमतं[1] वाऽसंमतं वा जनं प्रतिघातयिष्यत्यसंशयम् ।

९४—को नाम पुमान् दावानलं संविश्य क्षेमेण निर्याति ?

९५—स्नानागारे स्नातुमभ्यविशं स्नानीयसंभारं च तत्र प्रागेव संगृहीतमपश्यम् ।

९६—आपृष्ट एव ब्रूयान्नापृष्टः ।

९७—अन्तपालपदं सम्प्रति सुवर्णष्ठीवि जातम् ।

९८—वीरोऽपि वीरमित्रो भयाकुलो भूत्वा द्वे पदे पश्चादुपावर्तत ।

९९—ब्राह्मणा अपि श्रुतिपरिशीलनमुदवपन्[2] का कथेतरेषाम् ।

१००—ये परहितं नित्यमुपाचरन्ति ते स्वस्य प्रियं कुर्वन्ति ।

१०१—वत्सलां मातरमुपरतां श्रुत्वा स शीर्षावघातमरोदीत् ।

१०२—एतद्विषयविचारणा मासमवारुध्यत ।

१०३—ब्रह्मचर्यस्यैव महिमा यन्मृत्युरपि भीष्मवशगः प्रजातः ।

१०४—अयं हि मत्प्रतिवेशे[3] प्रवसतीति तमहं साधु वेद ।

१०५—एवमुच्यमाने न काऽप्यसंगतिः परापतति ।

१०६—[4]दिग्धकेनाविद्धो मुहम्मदो घूर्णमानः शिरसा [5]भ्रामगात् ।

१०७—यच्चलचित्रादिषु देशकालतो व्यवहितविप्रकृष्टानां वक्तॄणां वचांसि सामाजिकैः श्रूयन्ते तेनाकामतोऽपि शब्दनित्यत्वमभ्युपपत्तव्यं भवति ।

१०८—निर्भीकोऽयं युवा शत्रुहस्तात्पताकां समाहृत्य वक्षसा न्यगूहत ।

१०९—नेदमस्मास्वाधीनम् । विद्यालयाध्यक्ष एवास्य सर्वस्य प्रभवति ।

११०—केचिदाहुर्भक्तिर्ज्ञानायोपकल्पते, तदपरे न सहन्ते ।

१११—कपोलयोरुद्गतान् प्रस्वेदकणान् संमार्ष्टि ।

११२—विश्वं सिसृक्षता धात्रापि तपोऽन्वतप्यतेति श्रूयते ।

---

१ इष्टम् । २ पर्यत्यजन्नित्यर्थो विवक्षितः । ३ मद्गृहसमीपे । ४ लिप्तकेन, विषदिग्धेन शरेण । ५ भूमिम् ।

११३—तमिस्रा[1] निष्क्रान्ता । प्रत्यूषश्चोपस्थितः ।
११४—यदि मम वचनं हेलसे[2] तदा ते सुखं न भविष्यति ।
११५—स किलात्मशुद्धिमुद्दिश्य नित्यं योगविधीन् मम्नौ ।
११६—इतो गृहमुपगम्य द्राङ् मे पत्त्रं हिनु[3] वृत्तं च सर्वमखिलेन विवृणु ।
११७—श्री गान्धिप्रभृतयो जनानां नेतारो भारतं परदास्यान्निर्मोचयितुं चिरं समयतन्त ।
११८—केयं कुचिता मेदिनी वीरस्य ।
११९—दुर्लभां मानुषीं तनूमवधार्य दुष्कृतं करोषि । हा हतोऽसि ।
१२०—वैदिकमुनिना श्रीहरिप्रसादस्वामिना सर्वोऽपि वेदवारिधिः सूक्ष्मतत्त्वरत्नान्युन्ममन्थे ।
१२१—अधीरस्य पदे पदे व्याकुलत्वं समापद्यते ।
१२२—संहुतेऽधमर्ण उत्तमर्णादात्मानम् ।
१२३—शास्त्राणि सततं परिशीलयन्सोऽचिरादेव तत्र परं प्रावीण्यं समालभत ।
१२४—इदानीमपि भारतं वर्षं पण्डितप्रकाण्डैः संभृनमास्ते ।
१२५—आगमकालः खलु शिष्याणां प्रज्ञामेधयोर्निर्बिभर्ति ।
१२६—विषमे पथि धावन्नन्धः पदे पदे संपतति ।
१२७—स च ज्ञानविशेष उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन् परलोकप्रयोजनो भवति । ( काशिका ६।१।४९ )

———

## अथ कृत्सु विवेच्यानि ।

### तत्र क्त्वाधिकारः प्रथमः ।

१—तातं क्षमां प्रार्थयित्वा लघयति[4] स्वमागः[5] कुमारः ।
२—दारुण एष उदन्तो दहति मेऽवस्कन्द्य हृदयम् ।
३—प्रैष्यानन्तरकरणीयमनुशास्य श्वोऽहमितः प्रस्थाताहे ।

---

१ तमिस्रा तमस्विनी रात्रिः । २ हेडृ अनादरे भ्वादिरात्मनेपदी । ३ हि गतौ वृद्धौ च स्वादिः । ४ लघू करोति । ५ आगोऽपराधः । आग इति सान्तं क्लीबम् ।

(१२८) अभ्यासानुसारिणी विद्या बुद्धिः कर्मानुसारिणी।

(१२९) किमिह किमपि दृष्टं स्थानमस्ति श्रुतं वा
व्रजति दिनकरोऽयं यत्र नास्तं कदाचित्।
भ्रमति विहगसार्थान् इत्थमापृच्छमानो
रजनिविरहभीतश्चक्रवाको वराकः॥

(१३०) हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमपविद्धं पीतमुन्मूलितं च (मालती० )।

(१३१) न तिथिस्तदहोरात्रं न योगः न चन्द्रमाः।
लग्नं तदेव विख्यातं यत्र प्रत्यर्च्यते हरिः॥ गरुडपु० २२२।२१)

(१३२) नीयामहवं भयम् (भट्टि० ७।१०१)।

(१३३) रमा लक्ष्मीर्योपविपद्ये परेशाम्।

(१३४) स्वयं स्वयम्भूरुदयं प्रयातः
श्रीकेशवानन्दमुनीन्द्रनामा (श्रीकेशवानन्ददि० ला०)।

(१३५) बहु निदर्शनावविनीत इति न विद्वत्सु परिगण्यते।

(१३६) नान्येह काचित्त्वादृशी परिवर्तते मम दृशोः।

(१३७) बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमाप्नुयति (सत्संगतिः)

(१३८) ततः कथं कथमप्यहं श्रीनगरं प्रत्यत् पर्यचलम्।

(१३९) विघ्नपाति विहितोत्तरार्थं विभीषणोऽभाषत यातुधानम्
(भट्टि० १२।२१)।

(१४०) स्पृशन्ति तुन्दं सततं महाबालाः।

(१४१) वरं स्थूलभारतो, नत्कुलस्य, न पुनर्म्लेच्छेन मिलन्ति॥

(१४२) नान्तरा निर्बधान तमालापेन।

४—तूष्णीम्भूय गुरोरनुशासनं निशम्यताम् ।

५—सूत्रकारं नमस्कृत्वा वाक्यकारं च निभृतम्[1] । शब्दापशब्दयोरेष विवेकः प्रवितन्यते ॥

६—अत्रैतां निशां परिणाम्य श्वोभूत इतः प्रस्थास्यामहे ।

७—लङ्कां निखिलेन परीक्ष्य जानकीं चादृश्य परं विषादमुपैति पवनात्मजः ।

८—गुरुचरणाञ्छुश्रूषित्वाऽपूर्वः कोपि सुखानुभवो जायते ।

९—गायत्रीं शतशो जप्त्वा पापेभ्यः पूयते नरः ।

१०—एकं केदारं लवित्वाऽपरं लुनन्ति कृषकाः सस्यार्थिनः ।

११—सौम्य बहिर्गत्य लक्षय का वेलेति । अहमस्मि प्रतिष्ठासुः ।

१२—लोमहर्षणीमिमां वार्तां निशम्य तस्य हृदि क्रोधानलः समदीपि[2] ।

१३—लक्ष्म्यां रङ्क्त्वा न सहसा विरज्यते । ततो वा विरज्य सरस्वत्यां रज्यते ।

१४—अग्निं प्रज्वाल्य शीतापनोदमिच्छन्ति शीतार्ता दरिद्राः ।

१५—सूत्रकारं प्रणम्य शारदां च भगवतीमभिष्टूय वाक्यमुक्तावलिं नाम पुस्तिकां तन्मः ।

१६—इदमौषधं शुचिनि वारिणि समुन्द्य[3] गव्येन च पयसा संमिश्र्य सितया च संयुज्य पेयम् ।

१७—त्वया दुर्जनसंसर्गात्पृथग्भूयात्मश्रेयश्चिन्तनीयमित्यसकृत् [4]त्वानुशास्मि ।

१८—इमं निकेतमवपात्यापरं च विरच्य सुखं सविभवं च तत्र वत्स्यामि ।

१९—अचिरादेव गृहात्परावर्त्य त्वदर्थे समीहिष्ये । जानेऽयमर्थो मयि[5] लम्बते[5] ।

---

१ प्रश्रितं, सादरम्, नम्रम् । २ समदीपिष्ट । कर्तरि वा चिण् । ३ उन्दी क्लेदन इति धातुः । ४ त्वाम् । ५–५ मदायत्त इत्यर्थः ।

२०—इदं नारिकेलं पञ्चधाकृत्यामीभ्योऽर्भकेभ्यो देहि ।

२१—आलुलोचं त्वदुत्तरं परं मनसो मे सन्देहो दूरीभूय परितोषो नाभूत् ।

२२—विप्राय संकल्पितां गां निवेद्यान्यच्च देयं तत्सात्कृत्य परं तुष्यति यजमानः ।

२३—आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ।

२४—तन्तवोऽपि संहृत्य शक्ता नग्नमावरीतुम् ।

२५—येयं सम्प्रति प्रचरति भारते शिक्षा तां वित्त्वा[1]ऽपि बहवो नालंकर्मीणा[2] भवन्ति ।

२६—गीर्वाणवाणीं भूयः संचकासय्य संस्कृतसाहित्ये च लोकस्य कौतूहलं संजागरय्य भारतं किमपि गुरुत्वमुपनेष्यामः ।

२७—इदं पुस्तकमचिरेण मुद्राप्य प्रकाश्य चत्मानं कृतिनं मंस्ये ।

२८—त्वयाऽत्र संकटे[3] गृहं निर्मीय किं सुखमाशंस्यते ?

२९—अविप्लुतब्रह्मचर्यो युवा चारुसर्वाङ्गीं युवतिमुदूह्य गृही भवेत् ।

३०—यदि कश्चिदाम्नाये निष्ठित ऋग्वेदे विशद्य भाष्यं वितनुयात्, तदा लोकस्याऽस्य बहूपकुर्यात् ।

३१—अनिष्टकरमवैदिकं मतं प्रचारयित्वा त्वया किं लप्स्यते ?

३२—केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तमिति केशाकेशि ।

३३—एवं हरिमुद्गीय सा सभा तूष्णीमभूत् ।

३४—धन्यास्ते सुमतयो येऽन्योन्यस्मिन्प्रीतिं संजन्य वैमत्यमपाकुर्वन्ति ।

३५—कवी राजानमुपश्लोकयित्वा[4] पुष्कलं धनराशिं विन्दति ।

३६—तास्ताः क्रियाः समनुष्ठीयाऽऽत्मानं च सम्यग्विनीय दैवीं सम्पदं सम्पादयेत् ।

३७— प्रीणत्य सूक्तैर्वाग्भीः स्वदेशा० प्रत्यगायजन् (भा०पु० १०।७२।२८)।

३८— कूचिकाभित्तिकोटर आत्मानं निगूह्य स्थितः।

---

१ विद्लृ लाभ इति धातुः । २ अलंकर्मीणः समर्थः । कर्मणेऽलमिति विग्रहः । ३ संकटं सम्बाधः, संकुचिता प्रतोली । ४ श्लोकैरुपस्तुत्य ।

## तुमुन्नधिकारो द्वितीयः ।

१—अयं ह्यकूपारमपि[1] तर्तुमर्हति किमुत सरसीम्[2] ।
२—पाठे नित्यमनवहितं तं शिष्यचेलं[3] शालातो निष्क्रमितुं ब्रूहि ।
३—महानयं तेऽनध्यवसायः[4] । किमित्यत्यन्तसुबोधमप्यर्थमध्यवसितुं न सहसे ?
४—न हि किमपि कारणमन्तरा समुत्पत्तुं विनष्टुं वा शक्नोति ।
५—अयं चिरं गदीति[5] सम्प्रति गदान्निर्गतोपि पदमेकमपि प्रक्रन्तुं नालम् ।
६—तृणैर्गुणत्वमापन्नैः शक्या मत्ता दन्तिनोऽपि बद्धुम् ।
७—मुद्रासनाथं स्वमङ्गुलीयकं विचेतुमाज्ञापयति भृत्यान् राजा ।
८ अलं वयं परानास्कन्दितुं परास्कन्दं च दूरतो निरोद्धुम् ।
९—शक्यं मयाऽनेन दिग्धकेन व्यात्तदंष्ट्रोऽयं मृगाधिपो वधितुम् ।
१०—वृष्टमात्रे देवेऽभितो विरोतुमारभन्त भेकाः ।
११—उत्तिष्ठ वत्स ! वयस्यस्ते त्वामाह्वयितुमुपागतः ।
१२—मध्यमासनार्हो य उत्तमासनं वाञ्छत्यध्यास्तुं स उपहास्यतां याति ।
१३—सर्वो जीवितं सुखं व्यत्यापयितुमिच्छति न च पारयति ।
१४—यः शास्त्रार्थं वेत्तुं समर्थोऽपि न तत्र वाढं प्रयस्यति न स बहु वेद ।
१५—अहो कालमहिमा । शिष्या अपि गुरुविरोधमाचरितुं न शङ्कन्ते ।
१६—परस्य गुणान् स्वस्य दोषांश्चाङ्गीकर्तुं न कामपि क्षतिमीक्षामहे ।
१७—भृत्यं विपणीत इध्मान्याहर्तुमादिशति स्वामी ।
१८—बाष्पश्च न ददात्येनां द्रष्टुं चित्रगतामपि ( शाकुन्तले ) ।
१९—न हि दुर्बलो बलीयांसं दुश्चरितात्प्रतिषेद्धुं प्रभवति ।
२०—इदं दोषजातमपास्तुं यतस्व, अन्यथा समुत्कर्षः सुदुर्लभः ।
२१—अनुजानीहि मां गन्तुम् । चिरं मे प्रोषितस्य ।

---

१ अकूपारः समुद्रः । २ तटाकम् । ३ गर्हितं शिष्यम् । कुत्सितानि कुत्सनैरिति समासः । ४ अनिश्चयः । ५ रुग्णः । गदो रोगोऽस्यास्तीति गदी । इनिः ।

२२—चतस्रो विद्या अर्थकर्यं इति गणितुं शक्यन्ते।

२३—अहो बत[1] व्यवहारपतितान् सम्प्रतीतानपि शब्दान् यथावल्लिखितुं न जानासि।

२४—अहो धृष्टोऽसि। सभां प्रवेष्टुं प्रतिषिद्धोऽपि न विरमसि।

२५—भवदात्मजोऽस्मच्छिष्यो रमेशः परीक्षां साधीय उत्तीर्ण इति निवेदयितुमलं तुष्यामः।

२६—न मया शक्यते रहस्यमिदं चिरं गोपयितुम्।

२७—सभापतयः प्रधान वक्तृभ्यो भाषणमारब्धुं न्यवेदयन्।

२८—इदानीमयुक्तं विक्रोशितुम्। नष्टं नानुशोचन्ति पण्डिताः।

२९—स्त्रीपरिभवं सोढुं दाक्षिणात्या न शिक्षिताः ( बालरा० १।३ )।

३०—यत्सर्वात्मना चेष्टमानोऽपि भुजङ्गो नोत्थितुं प्रभवति स प्रभावो मन्त्रस्य।

३१—प्रतिवेशिनो मां गृहं त्यक्तुं विवशमकुर्वन्।

३२—न हि पुस्तकभारवहनेन परीक्षापयोधिसन्तरणेनैव वा कश्चिच्छास्त्रेषु व्युत्पन्नो बोभोतुमीष्टे।

३३—महार्घतापिशाची मुखं व्यादाय निगिलितुमिव धावति।

३४—इत्युक्त्वा सोऽचेष्टत कथंचित्स्मयितुम्।

## क्त्तिनोरधिकारस्तृतीयः।

१—घुष्टा मया देवपादानामाज्ञप्तिः। अनन्तरकरणीयं वेदितुमिच्छामि।

२—हृष्टपुष्टो देवदत्तो लक्ष्यते। मन्ये व्यपगतमस्यार्थकृच्छ्रेण।

३—को नु खल्वत्युदारोऽपि[2] मुष्टं स्वमर्थं दस्युना प्रतिग्राहयेदन्यत्र[3] संमूढात्[3]।

---

१ बतेति खेदेऽनुकम्पायां वा। २ दानशीलः, बहुप्रदः। ३—३ विभ्रान्तं वर्जयित्वेत्यर्थः।

४— हह ! क्रूरेण लुण्टाकेनादयं निशस्तो[1] वराको धनिकः ।
५—अहिंसानिष्ठामवाप्नोति प्रयतात्मा पुनीतधीः ।
६—अयं नो देशो वैदेशिकैर्वाणिजैर्दरिद्रितः ।
७—धनधान्यस्य च स्फीतिः सदा मे वर्ततां गृहे ।
८—जागृनोऽहमात्मनि ब्रह्मणि । नहीदानीं विडम्बयितुमर्हति मां माया वराकी।
९—प्रथमोऽपराध इति मृषितो गुरुणा । तेन द्वितीयं मास्म चारीः ।
१०—वर्तितं पारायणं छन्दसां देवदत्तेन । इदानीं पाणिनीयाष्टकं प्रपठति ।
११—तन्त्रके[2] असीविते वाससी वसित्वा यज्ञमेघामासीदेत् ।
१२—नवेन तेन नृपेण नूतनानि दुर्गाणि कृतानि खानिताश्च परिखाः ।
१३—नदीमातृको देशः, धार्मिकश्च नृपतिस्तथापि दरिद्राणाःप्रजा इत्याश्चर्यम् ।
१४—संशातव्रतो हि तिग्मतपा भवतीति केचित्, चीर्णव्रत इत्यपरे ।
१५—नूनं धृष्टोऽसि यदर्थं विधुरं बहु विप्रलप्तं त्वया ।
१६—यतितं मया चिराय व्याकरणमवगन्तुं न च पारितम् । तत्र मे प्रज्ञापराधो न शास्त्रापराधः ।
१७—अद्यत्वे कामपि जागर्ति लक्ष्यामहे विवर्णेषु ।
१८—यदि शब्दाह्वयं ज्योतिर्न दीप्येत तदाऽयं लोकोऽन्धेन तामिस्रेण ग्रसितः स्यात् ।
१९—आसन्नास्तमनवेलेति सलिलमवगाहितो स्नानजनः ।
२०—पूर्वं कृशोऽपि सम्प्रत्यापीन इव लक्ष्यते देवदत्तः ।
२१—मन्येऽनुकरोत्यस्य मन्युः क्षुब्धमकूपारम् ।
२२—कपोलकण्डूतिं विनेतुं विघट्टयन्ति द्रुमस्कन्धान् कुम्भिनः[3] ।
२३—इह केन निमित्तेनैकत्रिता जनाः । अप्यत्र कश्चिदनिष्टो व्यतिकरोऽभूत् ।
२४—पित्रा विचारितां महतीं विभूतिमसदर्थेषु विनियुज्य क्षपयत्यद्रव्यं[4] सुतः ।

---

१ हत इत्यर्थो विवक्षितः । २ तन्त्रादचिरापहृते नूतने इत्यर्थः । ३ हास्तिनः । ४ द्रव्यं भव्य इति निपातितम् । द्रव्यमिति गुणक्रियाधिकरणमिति परिभाषितम् । तत्साम्यादन्योऽपि गुणवान्द्रव्यमित्युच्यते ।

२५— केचित्साङ्गुलिका उच्छलन्त्यनुपलब्धिप्यामेव व्यवस्यन्ति [illegible]
२६— [illegible] नेन यदिदं सूनं विवरीतं न तथा [illegible] नः ।
२७— वत्स ! किं वर्तितं त्वया [illegible] । [illegible] इव [illegible] ।

## शतृशानचोरधिकारश्चतुर्थः ।

१—अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् । ( रामायणे )

२—शास्त्राण्यधीत्यापि वृद्धानुपासमानाः कल्याणपरम्परां लभन्ते ।

३—अम्बा त्वपराधशतमपि कुर्वन्ती न न मान्या सुतानाम् ।

४—परवत्तया[1] परयाऽवसीदन्त्यो लोहभस्त्रा इवोच्छ्वसन्त्य आर्यललनाः कथं कथमपि कालमनयन् ।

५—ततः प्रविशति कामयानावस्थः सवयस्यो राजा ।

६—अधन्यः स पुरुषो यः सुखसंभारमवाप्नुवानोऽपि परमेश्वरं न स्मरति ।

७—शूद्रादिषु शास्त्राण्यधीयमानेषु द्विजातयो मानाद् हास्यन्त इति केचिदाशङ्कन्ते ।

८—इदानीं वासवो वर्षन्नस्तीति न वयं विहाराय निर्गन्तुमीशाः ।

९—अयि पठकाः पाठकाश्च । तांस्तान् विषयान्विशदयन्ती चिरं चकासन्तीयं पत्रिका भवद्भ्यो रोचते न वेति व्यक्तमुद्यताम्[2] ।

१०—मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात् स्थानादस्मि ।

११—ये वागन्तरे भूयः श्राम्यन्ति संस्कृते चाल्पीयस्ते नाञ्जसा[3] तद्बोद्धुमीशाना[4] भवन्ति ।

१२—धनिककुलानि धर्मार्थे धनानि ददन्त्येव शोभन्ते वर्षासु स्यन्दमानानि जलधरपटलानीव ।

१३—प्रातः स्मरणीयः श्री चित्तरञ्जनदासो देशं वरिवस्यमानो[5] नात्मनः क्लेशमजीगणत् ।

१४ — हन्तीति पलायते इत्यत्र लक्षणहेत्वोः क्रियायाः इत्यनेन हेतौ शता कुतो न ?

---

१ पराधीनतया । २ उच्यताम् । ३ अञ्जसा तत्त्वतः । ४ ईशेः कर्तरि लटः शानच् । ५ सेवमानः ।

## कृत्याधिकारः पञ्चमः ।

१—न तज्जानामि लोकेस्मिन्नयेनाजय्यमेव यत् ।
२—अयं हिन्दीवाग्गुम्फः संस्कृतेनानूदितव्यः ।
३—परोपकारप्रियोऽप्यसावनृतिक इति नापलप्यम्[1] ।
४—जाने दुष्करमिदं कृत्यं तथापि मया तत्र प्रवर्त्यम् । एषा मे व्यवस्थिता मनीषा ।
५—उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ।
६—नेदमुश्मो[2] व्याकरणाधीत्यामेव शश्वद्रतः स्याः । विषयान्तराण्यपि ते समाहृत्यानि ।
७—इदमभ्युपेयं भवति न खलु दैवानुग्रहादृते सिध्यन्ति कर्माणि यत्नारब्धान्यपि ।
८—प्रभूताः स्वा न दीयन्त इत्याभणन्ति । सत्यं दुःखमर्जिताः श्रियः सुदेया न भवन्ति ।
९—संमानाद्विषादिवोद्विजितव्यं द्विजेन ।
१०—अयं मे प्रियतमः शिष्य इति विषमे वृत्त्युपायं साध्वनुशास्यः ।
११—यो राजा लोभमोहेन किञ्चित्कुर्यादसाम्प्रतम् । सर्वोपायैर्नियम्यः स यथा पापान्निवर्तते ॥
१२—ब्रह्मचर्या ह्युत्तमं व्रतं व्रतानाम् । अविप्लुतब्रह्मचर्या एव गृहस्थाश्रमं प्रवेष्टुमर्हा नेतरे ।
१३—ग्रन्थाक्षरार्थे न संशय्यम् । यथास्थितमर्थोऽभ्युपेय इति केचिच्छ्रद्धाजडा अमीमांसकाः ।
१४—चिरन्तनाः सखाय इति न ते विषमे विस्मर्याः । कर्तव्यमेव साचिव्यं[3] यच्छक्यम् ।
१५—सर्वा विद्या अभ्यस्या भवन्ति, व्याकरणं तु सविशेषम् ।

---

१ अपलापं नार्हति । २ वश कान्तौ । कान्तिरभिलापः । ३ साहाय्यम् ।

१६—अतिसुकुमारेण कुमारेण नाहोरात्रमुपोषितव्यम्[1]।
१७—शिष्यशिष्टिरवधेन। अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम्। अन्येन घ्नन् राज्ञा शास्यः।
१८—अभिनवाः काश्चित्कलिकाः प्रातरुद्यानादानीयानि।
१९—येयं साम्प्रतं प्रचरति भारते शिक्षा न सा शिक्षापदाभिलप्या भवति।
२०—देवनागरी यवनानी चेति द्वे अपि लिपी अभ्यस्तव्ये।
२१—उत्तरापथे प्रचरिताः सर्वा भाषाः संस्कृतवाच एवोपजीव्याः।
२२—यत्नेन लभनीयाऽऽत्मसंवित्तिः।
२३—मार्गेणारभणीयानि कार्याणि नामार्गेण।

---

## कृत्परिशेषाधिकारः षष्ठः।

१—शोभते ते वयस्यानामतिशयनं गुणैः। मत्सर एव तु परिहार्यः।
२—मांसमेवोपचिनोति मांसादो न तु बुद्धिमिति वैद्याः।
३—उदतिष्ठत्स वेगेन क्रोधेन प्रज्वलन्निव। उद्वृत्य सहसा नेत्रे दन्तान् कटकटाय्य च॥ ( रामायणे )।
४—अहिंसयैव वार्या आक्रन्तारः शत्रव इति श्रीगान्धी स्माह।
५—शास्तुरन्यायशीलस्य शासनं न समादरमर्हति।
६—उपांशु[2] मन्त्रजापस्ते यथा हितो न तथोच्चैरुच्चारणम्।
७—अयं प्रमदजः[3] प्रमाद इति जानन्मर्षये।
८—अज्ञानामनात्मज्ञानां समुदय एष इति नायं समाजः, समजस्त्वेषः।
९—अनागसोपि स्त्रीजनस्य धनलुब्धैर्लुण्टाकैर्हत्या क्रियत इति परा हि सीमा क्रौर्यस्य।
१०—बाह्येन्द्रियोपरमे मनोमात्रे चानुपरते जायन्ते स्वप्नसन्दर्शनानि।
११—बाणो नामासुरः किल लवणकारमभुक्त देवतोद्देश्यान् बलीन् द्विजानीनाम्।

---

१ उपवासः कार्यः। २ रहसि। ३ हर्षजः।

(२४) विभूतिमन्तोऽपि खला नोपसर्प्याः, तत्र गुणीभावोऽपि सावद्यम्)।

(२५) सत्यपि प्रतिबन्धके यस्य वस्त्वन्तरस्य सद्भावेन प्रतिबन्धस्य कार्यस्य पुनरुत्पत्तिर्भवत्येव तदुत्तेजकं मुत्तम्भकं वा।

(२६) न खल्वनुपुरुषे दुर्गणीयं जनेन तत्र विवादनीयमापदि।

(२७) शास्त्रं शिवं सुरा चाप्रतिग्राह्याणि ब्राह्मणस्य (का० सिद्ध च० सू० १३।४५)।

(२८) यूपो निखातस्य उत्क्रमणीयश्चेति द्वे अङ्गे पश्वालम्भविधेः।

(२९) आनिकुम्भमार्गं वसुधा भाति शाद्वलमालिनी (हरि० २।१०।१८)।

(३०) पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः।
रिपुस्थानेषु वर्तन्तः कर्तव्या भूतिमिच्छता॥

१२—अधुनाऽपि केचिद् विधवापुनरुद्वाहे विप्रतिपन्नास्तेनानिष्टं किमप्य-पूर्वं भावीति पश्यन्ति ।
१३—इह भूयांस उदरम्भरिणोऽल्पीयांस एव परार्थघटकाः ।
१४—कृतविद्याः[1] कृतमतयो[2] द्विजातयोऽपि मूढग्राहैर्ग्रस्यन्ते मूढ-निर्विशेषम् ।
१५—अचौरोऽपि चोरतां यातो माण्डव्यो व्यवहारतः ( याज्ञ० ) ।
१६—इदं क्षेमङ्करम् इदं च शिवङ्करमिति विवेक्तुं न सुकरम् ।
१७—कोऽत्र गायति ? किमपि मधुरमस्य गायनं कस्य मनो नावर्जयति ।
१८—स्त्रियो बालाश्च परिक्रमां कुर्वन्ति देवतायतनानाम् ।
१९—सत्यात्मलम्भे सर्वग्रन्थीनां विभेदः ।
२०—पित्राऽऽम्रसिञ्चने नियुक्तः पुत्रः पितुराज्ञां यथेष्टं करोति, आशिषश्च विन्दति ।
२१—मञ्जुला इमाः सहकारमञ्जर्यो वसन्तावतारं सूचयन्ति ।
२२—अवधत्स्व वत्स ! विस्तारेण ते कथयामि शकुन्तलोपाख्यानम् ।
२३—कृतमतिरिक्तेन कुसुमावचयेन । एतावन्त्येव पर्याप्स्यन्ति दैवतार्चनाय ।
२४—वृद्धा मे नखाः । एतांश्चिकर्तिषामि । दीयतां मे स्वं नखनिकृन्तनम् ।
२५—वमिरुद्गिरणे वर्तते, वमति स्नेहमिति वामेत्यत्र तु मुख्यार्थस्य निगरणं दृश्यते ।
२६—अस्ति मे पिप्रक्षा कस्यचिदर्थस्य । यद्यविरोधस्तर्हि प्रक्ष्यामि ।
२७—प्राड्विवाकः केवलं पृच्छको न भवति निर्णयं चापि वक्ति ।
२८—यथाश्मप्लवेन[3] तरन्नुदके निमज्जति तथाऽज्ञौ दातृप्रतीच्छकाविति मनुः सस्मार ।
२९—एको दृतिहरिर्भवत्यपरो दृतिहारः । कस्तयोर्विशेषः ।
३०—परिहर खलसम्पर्कम् । परिहर च बुद्धिविलुम्पकानि मादकद्रव्याणि ।
३१—क इमे सांराविणं कुर्वते ? अयमारवो नः श्रवणशूलायते ।

---

१ आत्तविद्याः । २ संस्कृतबुद्धयः । ३ प्लवः कोल उडुपः, नौका ।

३२—सन्ततेन स्तन्यस्रावेण कृश्यति[1] प्रजातेति[2] स विरमणीयः ।
३३—अदण्ड्यैर्वापराद्धानां विमुञ्चनं नानृशंस्यं[3] भवति, नाऽपि न्यायः ।
३४—इमे खनीनां खन्तारोऽश्रान्तं श्रान्ता विश्रममर्हन्ति ।
३५—प्राचि काले कन्यानामप्युपनायनमनुज्ञातमासीदिति केचित् ।
३६—सुशिक्षको हि समूलकाषमुन्मूलयति दुराग्रहं दुरभिमानं च शिष्याणाम् ।
३७—कृषिकर्मतो विरतेन कृषीवलेन वस्त्रवयनेन स्व आयो वर्धनीयः ।
३८—आमाशयदोषशामकमिदमौषधं न व्यभिचरति[4] स्वामुपयोगिताम् ।
३९—सरला सरसा च काचिदभिनवा व्याकरणपद्धतिर्निबद्धव्या ।
४०—यदाऽशेषोऽपि द्विजातिवर्गो निर्घृणपरस्तदा को नु क्षमेत पतितानुद्धर्तुम् ?
४१—जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥
४२—संयोगा विप्रयोगान्ताः पतनान्ताः समुच्छ्रया इत्याभाणको न जातु स्वमर्थं व्यभिचरन् दृष्टः ।
४३—लोष्टघातमेतमागन्तुकं जीवमितो विद्रावयत ।
४४—समयोऽयं नूत्नसाहित्यसृजनस्यानुगुणः । सन्त्यत्र काव्यरसिकाः प्रभविष्णवः ।
४५—वसुन्धरेयं नो जननी वसुन्धरेति[5] कोऽसंमूढः संशयीत ?
४६—न हिमहा हिमहानिकरोऽभवत् ( माघे ) ।
४७—कृतघ्ने नास्ति निष्कृतिः ( मनौ ) ।
४८—सन्तः प्रणयिवाक्यानि गृह्णन्त्यनसूयवः ( कुमारिलः ) ।
४९—केचिदाहुः शूद्रस्य मन्त्रजापं प्रत्यनधिकारः । तन्मीमांस्यम् ।
५०—अस्तं यियासति रविः । उचितः सम्प्रति कार्योपरामः ।
५१—दुष्करा इमाः समस्यापूर्तयः ।

---

१ कृश तनूकरणे दिवादिः, प्रायेणाकर्मकः । २ प्रजाता प्रसूता । ३ आनृशंस्यं कारुण्यम् । ४ लङ्घते परित्यजतीत्यर्थः । ५ इति यौगिकम् ।

५२—ब्रह्मविदाप्नोति परम् ।

५३—स्वतन्त्रः सम्प्रति प्रौढवयाः सुतो नः । न वयं तस्य कृत्याकृत्ये प्रति दायिनः ।

५४—अवग्राहो[1] हि शोषकः सस्यस्य । स शाप इव भवति कृषाणानाम् ।

५५—यानेवोपन्नानवलम्ब्येयं[2] नो देववाणी पल्लविता पुष्पिता फलिता च, ते प्रनष्टा इत्यस्या अयं दशाविपर्ययः ।

५६—अजिघ्रैः शास्त्राणामजनि बहुधा वादसरणिः ।

५७—मित्रेण चिरन्तनेन क्षणं साम्मुख्यं दधतस्तस्य चेतसि पूर्वे संलापा जागरूका[3] अभवन् ।

५८—अत्रापणे विक्रय्यवस्तूनि कयाप्यानुपूर्व्या प्रसारितानि शोभन्तेतराम् ।

५९—अनवरतशीतातपषाट् तापस आत्मानं सेधयति ।

६०—नानुध्यायेद्बहूञ्शब्दान्वाचो विग्लापो हि सः ।

६१—वन्यानां मृगयां चकार विपिने व्याधव्रजो जन्तुहा ।

६२—भारतीयाः शपथङ्कारमीशवीयाः क्रियन्ते वेषभूषादिपरिवर्तनेन मतपरिवर्तनेन च ।

६३—सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः ( भट्टौ ६।५०।। ) ।

६४—तेन वध्येन हन्तासि त्वमर्यं[4] पुरुषाशिनाम् । ( भट्टौ ६।५१।। ) ।

६५—सुगेन रथेन यातीति सुखायते राजन्यः ।

६६—शत्रुन्दमानां धुरि कीर्तनीयो रघुरस्य वंशस्य प्रवर्तकः ।

६७—नहि गोमायव आत्मरावैर्यूथपतींस्त्रासयन्ति ।

६८—तापत्रयशङ्करं शङ्करं सततं ध्यायन्ति योगिनः ।

६९—शिवदर्शनलालसो[5] गुरूयुः[6] श्रीदयानन्दो यतिवरं श्रीविरजानन्दं मथुरायामुपससाद ।

७०—अमृतम्भरां गुरुवाणीं प्रातर्गायन्ति सश्रद्धं शिष्याः ।

७१—वर्तमानस्यास्य कवितुः कृतौ प्रचुरा संस्कारच्युतिः पदेषु ।

---

१ वर्षप्रतिबन्धः । २ उपघ्न आश्रय इति मत्वा प्रयोगः । ३ जागरिता इति विवक्षति । ४ स्वामिनम् । ५ सतृष्णः । ६ गुरुमात्मन इच्छुः ।

७२—इमं वियातं[1] कण्ठग्राहमितो यापय ।

७३—एतावती ज्ञानसम्पत्तिराय्यर्याणामिति जानं जानं कस्य चेतः प्रह्लाद-परवशं न भवति ।

७४—विदुषंमन्या एवोत्सिच्यन्ते[2] न तु विद्वांसः ।

७५—किमनागतचिन्तनया । यदेव विधात्रा विधीयते तदेव शुभायेति श्रद्धत्स्व ।

७६—न हि सर्वाः स्खलितयः सुसमाधा भवन्ति । व्यर्थश्च प्रमादजानां साधूकरणे प्रयासः ।

७७—न हि ज्ञानेन सदृशं दुःखापहं किञ्चिदस्ति ।

७८—श्वोऽहं वाराणसीं गामुकोऽस्मि ।

---

## अथ तद्धितेषु विवेच्यानि ।

### तत्रापत्याधिकारः प्रथमः ।

१—कौरव्याणां पाण्डवानां च दारुणं [3]जन्यमजनि ।

२—तस्य भ्राता तु वैमात्रो[4] लक्ष्मणो नाम वीर्यवान् । ( श्रीरामायणे )

३—वैयासः शुको ब्रह्मविदां वरो बभूव ।

४—ज्यैष्ठेयो रामो माध्यमेयो भरतः कानिष्ठेयौ च लक्ष्मणशत्रुघ्नाविति रामायणे स्थितम् ।

५—युधिष्ठिरादयः पञ्च पाण्डवेया धर्मप्रधाना अधर्मभीरवश्चेति लौकिकाः प्रतिपन्नाः, परीक्षकास्तु विप्रतिपन्नाः ।

६ पाराशर्यो व्यास उच्यते न चासौ पराशरस्य गोत्रापत्यम् । तत् कथम् ?

७ कथमनन्तरोऽश्वत्थामा द्रौणायन इत्युच्यते ?

८—दाक्षिण्यं नाम बिम्बोष्ठि बैम्बकानां कुलव्रतम् ( मालविकायाम् )

९—विरला ह्यार्षेय्यो भणितयोऽस्य वचसस्तुलामारोहन्ति ।

---

१ धृष्टम् । २ दृप्यन्ति । ३ युद्धम् । ४ विमातुरपत्यं पुमान् ।

(७९) शूराणां च नदीनां च दुर्विदाः प्रभवाः किल (भा० आदि० १३६।११)

(८०) इदं स्थूलीकरणमौपम्यम्। इदं नाम पेशलत्वं नवीमन्त्रिकाणि।

(८१) यूयं तदनुसरणार्थिनि कुरुतादरम्।

(८२) जीवनाऽऽस्वादशाकुन्तपूरितां स्वप्सु न क्षिपेत्।

(८३) देवा एकोनपञ्चाशन्महाया वज्रपाणिनः (हरि०)

(८४) एक पुत्रस्तथा भावानामन्येषामनुगामकः।
न तिरोधीयते स्थायी --- ॥

(८५) यद् घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा (भागवते)

(८६) मग्ने निमज्जय दुरुद्धरपापपङ्के।

(८७) पुराणान्यपि सर्गादिवर्णनेन तटस्थलक्षणं पुरस्कृत्य तन्मुखेन मुख्यतया जगतो मूलकारणस्य प्रतिपादन एव पर्यवस्यन्ति।

(८८) गिरिशमुपचचार प्रत्यहं सा सुकेशी (कु० )।

(८९) अयं गोत्रदः, अयं च गोत्रसम्प्रदायः। किं कृतो रूपभेदः।

(९०) प्रत्यक्ष इति साधु, प्रत्यक्ष इत्यपि। तत्कस्मात्।

(९१) अभियोगशतेनापि दुराधिरूढोऽभिमानः शक्यः प्रतीकर्तुम्।

(९२) येन नाप्राप्ते इत्यस्य यत्कर्तृकावश्यप्राप्ताविक्त्यर्थः (परिभाषेन्दु० ५७ तमां परिभाषायाम्)।

(९३) यदि लवकलावकयोरुभयोः कृद्वृत्त्योर्विशेषं वेत्थ शब्दविदसि नूनम्।

(९४) सुग्रीवो नन वर्षोऽसौ (भट्टि० )।

(९५) एवमेतान्यानीमानि वाक्यानि तत्त्वस्पृशानि नेति न हृदयङ्गमानि भवन्ति।

(९६) जगत्प्रभोरप्रभविष्णु वैष्णवम्।



(९७) एककाले चरेद् भैक्षं न प्रसज्जेत विस्तरे (मनु० ६।५५)।

—वत्स ! कथं जानीषे इमे गार्ग्या इमे मौद्गल्या इमे च मौद्गला इति ।
—प्राक् केकयीतो भरतस्ततोऽभूत् । ( )
—कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
—मानवमाणवयोर्विशेषं चेद्वेत्थ नूनं विशेषज्ञोऽसि ।
—प्रायेण भ्रातृव्या भ्रातृव्या[1] भवन्ति ।
—भीष्मे त्रैशब्द्यं श्रूयते—गाङ्गो गाङ्गेयो गाङ्गायनिरिति । तत्कस्मात् ?
—अयं श्वाशुरिः । अयं च श्वशुर्यः । को विशेषः ?
—इमे गार्ग्या इमे च कौञ्जायन्याः । उभयेऽपि मान्याः ।
—अपत्यार्थ आर्षार्षेययोः कः शब्दः कश्चापशब्दः ?
—वाडववाडवेयशब्दौ व्युत्पादय व्यवहारं च दर्शय ।
—प्रदीयतां दाशरथाय मैथिली । (रा०
— रघूणामन्वयं वक्ष्ये (रघु० )

## मत्वर्थीयाधिकारो द्वितीयः ।

—ये भगवति श्राद्धाः[2] प्रणताश्च ते पूतपापाः स्वर्गाय राध्यन्ति ।
—सर्वप्रिये ज्येष्ठे सुते विप्रोषिते कथं नु माता सुखवती स्यात् ?
—यववानयं स्थायुकः[3] । अयं हि ग्रामीणेष्वाढ्यतमो मतः ।
—अयं वातातिसारी, अयमतिसारकी ।
—[4] रूपिणीयं कन्या कस्य मनो नावर्जयति ?
—सा स्याद् धार्मिकी शिक्षा या नवोढां गृहिणीपदमुपनयति मातृत्वार्हां च करोति ।
—निवृत्तदेहाभिमानिनः प्रत्यग्दृशो[5] मन्वादयोऽत्र प्रमाणं न त्वस्मदादयः पराग्दृशः[6] ।
—रजस्वल एष पन्थाः । पादाहतं रजो मूर्धानमारोहति नेत्रे च रुजति ।
—अत्र जनपदे नाऽवृत्तिः[7] कश्चिदस्ति न वाऽनेकवृत्तिमान् ।

---

१ सपत्नाः, शत्रवः । २ श्रद्धावन्तः । ३ ग्रामेऽधिकृतः । ४ सुन्दरी । ५ अन्तर्हृदयः । ६ बहिर्हृदयः । ७ अलब्धजीविकः ।

— मौद्गलो पुनरवोचे ...  इत्यत्र भाष्ये...
— दशरथान्ये ... सकाशाच्च ... (रा० २।१२।६३) ।

१०—फालकुद्दाललाङ्गलवन्तः कृषीवलाः क्षेत्राणि प्रस्थिताः ।
११—सर्वशक्तिमतीश्वरे शङ्केयं नोपपद्यते ।
१२—ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ॥
१३—हा पितृवन्तोऽप्यनाथवत् कदर्थ्यन्तेऽमी शिशवः ।
१४—किं न स्मरसि सुधीमतो हनुमतोऽकृतार्थो न निवर्तेयेति वचः ।
१५—मात्रादिमूर्तिमतां देवानां वरिवस्ययैव परमं सुखमिति सूत्रकाराः समामनन्ति ।
१६—क्रोधिलस्वभावस्य हि भ्रश्यति विवेकः, भ्रश्यन्ति चार्थाः ।
१७—सर्वे लोका न्यूनातिरिक्तसुखदुःखवन्त इत्यवश्याभ्युपेयम् ।
१८—चक्षुष्मानपि सूक्ष्मं तमर्थमीक्षितुं नेष्टे किमुताचक्षुष्मान् ।
१९—चत्वारोपि भ्रातरः परं मेधस्विनोऽभूवन् ।
२०—दरिद्रिणि इमे गृहस्थिनः कथं कथमपि लोकयात्रां निर्वहन्ति ।
२१—यदा चिन्ता कर्मोन्मुखिनी भविष्यति तदाऽर्था नः [1]समर्धिष्यन्ति ।
२२—इदानीं महाधनिन एव बलिनो गण्यन्ते ।
२३—मयि नाथ महापराधिनि पातय क्षणं कृपामसृणितं[2] कटाक्षम् ।
२४—इमे साहित्यमहारथिनः कवयो येषामा कुमारं गीयते यशः ।
२५—स्वर्णालङ्करणा अङ्गनाः कामपि स्फार्तिं[3] कथयन्ति जनपदस्य ।
२६— [illegible] (अष्टा० २।२।१९)।
२७— [illegible] (भा० द्रोण० ११२।२४)।
२८— [illegible] न हरेयुः।

## विकारार्थाधिकारस्तृतीयः ।

१—प्रायेण क्रमुकविकाराश्चापा भवन्ति क्वचित् तालमया अपि ।
२—उत्तरेण मे निकेतनं काञ्चनी वासयष्टिरित्युपलक्षय ।
३—दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः । (          ) ।
४—न दारवे पात्रे दुह्यात् । अग्निर्वा एष यद् दारुपात्रम् ।

---

१ सिद्धा भविष्यन्ति । फलिष्यन्ति । २ कृपया स्निग्धम् । ३ वृद्धिम् ।

२९— [illegible]
[illegible]
३०— [illegible]

५—रजतमय्यः शृङ्खला लौहीभ्यो नतरां विशिष्यन्ते, केवलं रुचिरतया विभ्रमयन्ति प्रग्रहान्[1] ।

६—क्षत्रियस्य हि मुञ्जमयी मेखला विधीयते मन्वादिभिः शास्त्रकारैः ।

७—आश्मानि प्रायशो गृहाणि वाराणसेयानि ।

८—कर्पासमयानि वासांसि न तथा हृदयग्रहणीयानि[2] भवन्ति यथा कौशेयानि ।

९—यथा जतुमयान्याभरणानि परिहरणीयानि भवन्ति तथा त्रपुमयानि गृहभाजनानि ।

१०—हरीतक्याः फलानि हारीतकानीत्युच्यन्ते बालैः ।

११—अशोको वृक्षः, अशोकं पुष्पमिति कथम् ।

१२—हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।

१३—स्वर्णिले वाससी वसित्वा[3] किमिव न रोचन्ते योषाः ।

१४—न हि यत्किञ्चिदाप्यं तत्तीर्थं भवति । यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ।

---

## भावकर्माधिकारश्चतुर्थः ।

१—यः कौमार्येऽनभिविनीतः स कदा नु विनयं ग्रहीता[4] ।

२—स्त्रियाः पत्युर्ऋक्थे दायाद्यत्वमस्तीत्येके, नास्तीति चैके ।

३—चौरिकाचोरिकयोः शब्दयोः समानार्थकयोरपि भिद्यते व्युत्पत्तिः । तां चेद्वेत्थ शब्दविदसि नूनम् ।

४—भावे आचतुर्यमित्यपि साधु, अचातुर्यमित्यपि । तद् उपपाद्यम् ।

५—ऐक्यसम्पादनाय सौमनस्यतालाभाय च सर्वैश्चेष्टनीयम् ।

६—न त्वमार्य्यशास्त्राणां विशेषतां वेत्थ यदेवमवादीः ।

७—शक्योऽयमर्थः परिहर्तुम् । नास्य ममावश्यकता ।

---

१ बन्दीः, बद्धान् । २ करणेऽनीयर्, यथा स्नानीयमित्यत्र । ३ वस आच्छादनेऽदादिः । ४ विलापं श्वस्तनो ( लुट् ) ।

८—कौमारकेऽपि गिरिवद्गुरुतां दधान उद्धतगतिरेष कः ?

९—शिरीषे यत्सौकुमारकं निसर्गसिद्धं न तत्कुसुमान्तरे ।

१०—कुरुपाण्डवानां भविष्यन्तीमाजिं[1] वारयितुं सन्धिं च कारयितु भगवान् वासुदेवः स्वयं दूत्यमुपेयिवान् ।

११—अयमहं भवन्तमनुरुन्धानश्चिरं मौनतामालम्बे ।

१२—आदिमध्यावसानेषु भजसा यान्ति गौरवम् । यरता लाघवं यान्ति मनौ तु गुरुलाघवम् ॥

१३—गृहसम्बन्धीनि कार्याणि [2]वैयाकुलीमनासेव्य नैयूनीं[3] च विवर्ज्य निर्वर्त्यानि ।

१४—उद्भटभटचातुरीतया रुद्धानां दुर्गस्थानां प्राणाः कथंचिद्रक्षिताः ।

१५—श्री सुरेन्द्रनाथो वन्द्योपाध्यायो वाग्मिनां वरिष्ठ इति तस्य वक्तृतां श्रोतुमहं कदाचित्कलिकातामयाम् ।

१६—[illegible]

१७—[illegible]

## स्वार्थिकाधिकारः पञ्चमः ।

१—ओषधिं पिब भिषङ्निर्दिष्टां यथा ते ज्वरोऽपेयात् ।

२—रमायाः काली शाटी श्यामायाश्च श्येनीत्युभे सम्पद्येते[4] ।

३—अयं लोहितकः कोपेन । एनं परिहर ।

४—अयं देवदत्तो ब्राह्मणजातिर्न तु क्षत्रियजातेरिति कथं जानीषे ?

५—बहुश्रुतोप्यननुष्ठितशास्त्रार्थो नाऽलन्तरां भवते स्वमुन्नेतुम् ।

६—स्वरतो वर्णतो वा हीनः शब्दो न विवक्षितमर्थमाह ।

७—सहस्रशः समेतानां परिपक्त्वं न विद्यते ।

८—युधिष्ठिरः श्रेष्ठतमः कुरूणाम् ।

९—अयमृजुर्मार्गः, अयं च रजीयान् । येनेष्टं तेन गम्यताम् ।

---

१ युद्धम् । आजिः स्त्रियाम् । २ व्याकुलस्य भावः । ३ न्यूनस्य भावः । ४ शोभेते ।

१०—विद्याधनः सोमदत्तो भवन्तोऽपि भाग्यवन्तमात्मानमजीगणत्।
११—धर्मे स्मृतयः प्रमाणं वेदास्तु प्रमाणतराः।
१२—कुलधर्मो दाक्षिणात्यचूडा वासिष्ठानाम्।

---

## शैषिकाधिकारः षष्ठः।

१—केचिच्छ्रौता आहुरक्रियार्था मन्त्रा अनर्थकाः। तदपरे न सहन्ते।
२—अद्य बहोः कालाच्छ्रीमदीयं दर्शनं लब्धम्। ब्रूहि सर्वमेतं कालं काऽभ्रमीः।
३—ब्राह्मी खल्वेषा त्रयी वाङ् न पौरुषी।
४—अद्यतनीयाः पण्डितमानिनः केचन शिष्टजुष्टां वाग्वर्तनीं[1] व्यतिक्रामन्ति न च तत्र दोषं पश्यन्ति।
५—वासवीनां[2] चमूनां कार्त्तिकेयः सेनानीर्बभूव।
६—अनभिज्ञोऽहमत्रत्यस्य प्राक्कालीनस्य वृत्तान्तस्य।
७—पार्वतीयानीमानि फलानि सुतरां स्वदन्ते नो नागरिकेभ्यः।
८—वानरी सेना जातु राक्षसीं चमूं जयेदिति केन स्वप्नेऽपि संभावितमासीत्।
९—पश्चात्तनैः कैश्चिद्द्विशेषज्ञैर्नुद्यमाना एतद्देशजाः शास्त्रेषु श्रद्धां जहति।
१०—आपत्कालिकेयं रीतिरित्यभ्युपगमो विदुषाम्।
११—नैकग्रामीणमतिथिं विप्रं साङ्गतिकं[3] तथा। उपस्थितं गृहे विद्यात्। (मनु० ३।१०३)
१२—इदं सांवत्सरिकं पर्वेति नानादिग्देशेभ्यः संनिपतिता यात्रिकास्तीर्थेषु सिषण्णासवः।
१३—औषसेन रागेण रञ्जिताः ककुभः कामपि रमणीयतां वहन्ति।
१४—का नाम राष्ट्रीयता। राष्ट्रे भवतां नोऽधिकारा अपि सन्ति कृत्यान्यपीति सततं स्मरणीयम्।

---

१ वाचः पद्धतिम्। २ वासवस्येमाः श्रम्वः, तासाम्। ३ सङ्गत्या वृत्त्यर्थिनम्।

१५—इयं हि कापुरुषी गाथा। नात्र वीरसेनो देयम्।
१६—पार्वतोऽयं जनो न वेद नागरकवृत्तं विशेषतः। कादाचित्क एवास्य नगरेष्वागमः।
१७—तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत्। ( रघौ )।
१८—गोमहिष्यादयो ग्राम्याः पशवः, गवयादयस्त्वारण्यकाः।
१९—राजवंश्योऽयं न तु राजा, तथाऽपि राजवदस्य कर्माणि।
२०—इयं सामुद्री नौः, इयं च नादेयी। विशेषो हि लक्ष्यते।
२१—कीदृशी तात्कालिका स्थितिरार्य्याणामिति व्यक्तं न विद्मः।
२२—इह भरतभुवि तास्कर्यस्य नामापि नाश्रूयतेति प्राच्यमैतिह्यम्।
२३—कालिङ्ग सम्पराये महन्नाम कदनमजनिष्ट जनानां योधानामयोधानां चेति युद्धादुदविजिष्ट महाराजोऽशोकः।
२४—स्रौघ्नेभ्यः पाटलिपुत्रिका आढ्यतराः किल।
२५—काश्मीरका हि प्रायेण दुर्गता अत एव कौसृतिकाः[1]।
२६—किं भो आङ्गोऽसि ? नाहमाङ्ग आङ्गकस्त्वस्मि।
२७—इदं काश्मीरकं कौशेयमुत्कृष्यते कौशेयान्तरात्।
२८—इदं कौमुद्यां पौर्वार्धं सूत्रमिदं चौत्तरार्द्धम्।
२९—कादयो मावसाना वर्गीया वर्णाः; शेषा अवर्ग्याः।
३०—भारं स्वकं च परकं च समुद्वहन्ति।
३१—इदमावश्यकीयमिदं नेति न सहसा शक्यं विनिर्णेतुम्।
३२—अतीते दशाब्दे मनुष्यगणने बहवः स्वमतान्धाः श्रद्धाजडा अन्यथाऽलेखयन् स्वजनसंख्याम्।
३३—प्रायेणापूपिका वैश्याः पायसिकाश्च विप्राः।
३४—केचिदाहुर्गव्यं पयो गुणवत्तमम्, अपर आजिकमिति।
३५—बाल्यकालीनो विवाहो जातेः समुत्सादक इति दर्शनं नः।
३६—शारीरिकसूत्रैर्जीवब्रह्मणोर्भेदः प्रतिपाद्यत इति केचित्।

---

१ छाद्मिकाः, अनृजवः।

३७—अद्यतनीनो वाचि वेषे चाडम्बरः केवलं विडम्बनैव [१]।

३८—इदं गतवार्षिकस्याधिवेशनस्य विवरणं शृणुत।

३९—अस्य निकेतस्य पूर्व्यः प्रदेशोऽभिरामतरः पश्चिमादिति मे मतम्।

४०—पश्चापदेशे सरहन्दपुरेऽस्त्यैतिहासिकः प्राकारो यं दिदृक्षवः प्रत्यब्दमुपयन्ति शतशो भक्तिमन्तो नराः।

४१—चीनदेशस्य मध्यो भागः प्रायेण नदीमातृकः।

४२—पारस्परिकः प्रेमा यथान्तर्भेदं चिकित्सति न तथेतरत्किंचित्।

४३—न वयं धार्मिकेषु नः कृत्येषु मानुषीं चोदनामाद्रियामहे।

४४—पूर्वीयपाकिस्थाने वङ्गवाचमभिरोचयति जनता न तूर्दुम्।

४५—सुगतः किल तात्कालिकनया पालीति विश्रुतया भाषया लोकान् धर्ममनुशशास।

४६—आयोध्यकं संस्कृतपत्त्रमपभ्रंशबहुलमिति न विदुषां समादरणीयं भवति।

४७—गतवर्षीये सभाधिवेशनेऽयमर्थो वितत्य विचारितोऽभूदिति नायं पुनर्विचार्यः।

४८—विधर्मीयैर्मौहम्मदादिभिर्हिन्दुधर्मिषु न साधु व्यवह्रियत इति खेदः।

४९—यदि त आन्योन्यं कलहं विहाय संवसेयुस्तदा सुखं जीवेयुः।

५०—स्वर्गीयः श्रीरमाकान्तो यावज्जीवमन्नार्थिभ्योऽन्नमदात् स्वपोषं[२] च दरिद्रानपुषत्।

५१—देशान्तरेषु भूयांसि दैनिकानि द्विदैनिकानि च वार्तापत्राणि प्रकाश्यन्ते।

५२—किमीयमिदं पुरस्तनं गेहम्। विशेषयतीदं गृहान्तराणि रामणीयकेन।

५३—मानवीषु वृत्तिषु परदुःखदलनाभिलाषः परं प्रशस्यः।

५४—श्रावण इति प्रथमो वार्षिको मासः।

५५—प्रातरेव स कृपणो मम चाक्षुषो जातः।

५६—वाराणसीयानां परीक्षाणां का त्वयोत्तीर्णा?

---

१ अनुकरणम् अनादरः उपहासः। २ स्वे पुष इति णमुल्। स्वशब्दो धनवचनः।

५७—न केवलमस्य नियुद्धकौशलमनितरसाधारणं स्नायविकी शक्तिरपीतरान्विशेषयति।
५८—वर्तमानेयं जागतिकी दशा दृढमुद्वेजयति नः।
५९—नूनमुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये (कुमारे ८।५८)।
६०—शारदीयशशिभासो रम्यमुपवनं रम्यतरं सम्पादयन्ति।
६१—केचिदस्थान एव सौवं[1] महिमानमुत्कीर्तयन्ति लाघवं च लोके यान्ति।

---

## तद्धितपरिशेषाधिकारः सप्तमः।

१—तृष्णा नाम सार्वजनीना[2]। नहि विततेभ्योऽस्याः पाशेभ्यः कश्चिदमुक्तनी विनिर्मुच्यते।
२—अहह संकटे पतितः स जिह्वावद् दन्तानां शत्रूणां मध्येऽवर्तत।
३—ये स्वान् दोषान् स्वी न कुर्वन्ति ते नोन्नमन्ति।
४—कस्मादिमे लोका अशोकत्राभराः ?
५—अर्शातिवर्षीयोऽय वृद्धो न क्षमते आत्मानमालम्बितुम्।
६—अद्यश्वीनमिदं कलेवरम्। यावदिद कल्यं[3] तावदर्जय गुणान्।
७—पितृवत्स्थूलः पुत्रस्तथापि बलवत्तरः।
८—वेणुमयीयं यष्टिः। इयं भारस्यासहा।
९—दशवार्षिकोऽयं बालः प्रदीप्ताभ्यां प्रज्ञामेधाभ्यां पञ्चदशसांवत्सरिकानप्यधरयति।
१०—अन्तरा सैनिकं बलं कथं नाम परित्रायेत देशः परावस्कन्दादिति पृच्छति लोकः श्रीगान्धिनम्।
११—न हि सुराज्ञि देशे धार्मिका विरोधा आत्मानं लभन्ते।
१२—यद् इदानीं मध्यभारतमिति विदुः स भारतस्य वर्षस्य मध्यः प्रदेशो न भवति।

---

१ स्वस्यायं सौवः, तम्। २ सर्वजनान् व्याप्नोतीति। ३ नीरोगम्।

(६२) पुत्त्रेण स्मा तव सेना पाण्डवी मथिता रणे (म० द्रोण० १४३।१९)।

(६३) इदं नव्यमिदं च पूर्व्यमिति निश्चित्य यदुपन्यासकं तदर्हणम्।

(६४) प्राप्य राज्यविभूतिमैश्वर्यसुखं मैत्रं प्रपेदे स्म सः (श्रीकेशवा-
नन्ददि० ला० १।९६)।

(६५) इतः पूर्वतनान्यद्यतनानि संस्करणान्यपेक्ष्य संस्करणेऽस्मिन्
भूयसी शुद्धताऽनुप्रकृतिरिति निश्चप्रचम्।

(६६) वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः (मनु० १०।९७)।

(६७) कृच्छ्रं पञ्चवर्षीयं कृत्वैतद् दारुणं तपः (वि० पु० ३।१२।९७)।

१३—अयमस्य पूर्व्यो भागोऽयं पश्चिम इति कोऽमन्दो न वेद।
१४—शतवर्षीया पुराणीयं पाठशाला सम्प्रति जीर्णकुड्या प्रपित्सति[1]।
१५—गाणपत्योऽयं मन्त्रो न त्वैन्द्र इति केचिद् विभ्रान्ताः।
१६—शास्त्रोक्ता अपि केचिद्विधयो वर्तमानयुगीना नेति नानुविधेयाः।
१७—पादशो गायत्रीं शंसति न चान्यथोच्चारयति पदानि।
१८—इयं शस्त्रीकल्पा। शक्यमनयाऽपि मांसशकलं कर्तितुम्।
१९—उभे अपि भगिन्यौ विदुष्यौ, तथाऽपि कनीयसी विदुषीतरा।
२०—योऽधर्मं चरति सोऽधार्मिक इत्यज्ञवद्वचनम्।
२१—आसुतिवलो ह्यभोज्यान्न इति स्मरन्त्यृषयः।
२२—क्रोडीकरोति प्रथमं यथा जातमनित्यता। धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः॥
२३—अस्ति मे त्रैवार्षिकं धान्यं तेन भविष्यदर्थचिन्ता नातीव बाधते माम्।
२४—अनन्ता वै वेदा इति प्रवादमसंख्यधा वेदा इत्येवमर्थापयन्ति[2]।
२५—उपाद्यमः स्वकरणे (अष्टाध्याय्याम् १।३।५६)।
२६—न हि रजोवीर्यसंयोगमात्रेण ब्राह्मणं शरीरमुत्पद्यते।
२७—प्राङ् निशातो वासरो वासराच्च प्राङ् निशेत्यनादिरेष प्रवाहः।
२८—याज्ञवल्कानीमानि ब्राह्मणानि वेदसमसामयिकानि न भवन्ति।
२९—युष्माभिस्तेषामेकतरेण सह वञ्चकैरिव व्यवहृतम्।
३०—चौररूपो[3]ऽयं यद्गोरप्यञ्जनमपहरति।
३१—वरदः करोतु सुप्रानमतामयं हि नायकः।
३२—इह पाठालये नवतम्यां श्रेण्यां पञ्चचत्वारिंशच्छात्राः संस्कृतमधीयते।
३३—विविधा हि व्यापारा भवन्ति—केचिन्मानसाः, केचिन्मौखाः, परे हास्ताः, अपरे पादाः।
३४—एवं सति पारम्परिकाः काश्चिद् हानीर्विभावयन्ति सुधियः।

---

१ पतनमस्या आशङ्क्यते। २ अर्थमाचक्षते, व्याचक्षते। ३ प्रशस्तश्चोरः, चौर्ये कुशलः।

३५—यदितो वत्सराणां पञ्चसाहस्र्यामभूत् तद् इदानीमपि पश्यामो-रूप[1]मिति स प्रसादो भगवतो व्यासस्य ।
३६—प्रायेण मध्यकालिका अनृषिप्रणीता ग्रन्था: शब्दडम्बरभूयिष्ठा इति न तेषु बहु ग्राह्यं भवति ।
३७—इदं नाम कालिकं वैचित्र्यं या खलु संस्कृति: पुराणैर्मुनिभिः प्राणपणेनापि संरक्षिता सेदानीं तदनुगैरनास्थया वेत्रदण्डैरिव समुत्सार्यते ।
३८—गुरुचरणानामभिमुखीनः स्थित्वाऽञ्जलिं च बद्ध्वा शास्त्रमागमय ।
३९—अद्य सुतरां सुस्था भवन्त इति हार्दिको नः परितोषः ।
४०—कर्मकराणामिमाः कदर्थना यामीर्यातना अप्यतिशेरते ।
४१—नाहमस्यान्तरीयमभिप्रायं वेद । न चायं स्वयं निर्वक्ति ।
४२—प्रसिद्धा हि पुराणेषु दैवासुर[2]कथाः ।
४३—कतमो भवतां देवदत्तः ?
४४—प्रधानं षट्स्वङ्गेषु व्याकरणमिति भाष्यकारवचनमवमत्य किमिदि ज्योतिषमधीषे न व्याकरणम् ?
४५—अहो वाग्मिनां वाग्धाराः किमपि संवननं[3] हृदयानाम् ।
४६—अत्र विषय उपेक्षां तूष्णीकां वा युक्तां पश्यामः ।
४७—अद्यतो नैकवर्षे दुरन्तोऽयमुदन्तोऽजायत ।
४८—प्राचीनसामयिका इममेव क्रममातस्थुः ।
४९—सेवा श्ववृत्तिराख्याता, तीव्रश्चैष मानस्योपरित आघातः ।
५०—सर्वाङ्गिण्याः संस्कृतेरुद्धार इष्यते न तु तदेकदेशस्य ।
५१—लक्ष्मणो मेऽनुजोऽपूर्वी, भार्यया चार्थीति रामेण शूर्पणखोक्ता ।
५२—ब्राह्मण्यं कृत्स्नमेतत्त्वां ब्रह्मण्यमनुगच्छति ।
५३—गते समरे परश्शताः प्रवीराः सर्वदार्थं वीरशय्यामध्यशेरत ।

---

१ साधु पश्यामः, यथा स्पष्टावभासो भवति तथा पश्याम इत्यर्थः । २ देवानामसुराणां च वैरं दैवासुरम् । ३ वशीकरणम् । ४ पूर्वं परिणीतमनेनेति पूर्वी, स न भवतीत्यपूर्वी ।

(६४) इमे कुरव इमे कौरवा इमे च कौरव्याः। को विशेषः।

(६५) मूलेनावाहयेद् देवीं श्रवणेन विसर्जयेत्।

(६६) औदरं रेचयेद् वायुम् (अग्निपु० ३७२।७)।

(६७) पूर्वेण ग्राममभिराम आरामः।

(६८) अनावृष्टिर्जनपदे छायाय बाहुवार्षिकी (रा० १।८।१२)।

(६९) द्वारं रुरुन्धतुर्योम्यम् (भट्टि० १४।२५)।

(७०) अप्राप्तस्य मयि पुत्रकल्पः स्नेहः।

(७१) यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये (मनु० ११।७)।

(७२) प्रोष्ठपादप्रौष्ठपदयोः को विशेषः। यदि शक्नोषि वक्तुं नूनं शाब्दिकोऽसि।

(७३) शाब्दिकमीश्वरस्वरूपं विद्वांसोऽपि वयं न तत्त्वतस्तद् विजानीमः।

(७४) चत्वार्याहुः पदजातानि शाब्दाः (स्कन्दपु० १२।१७)।

(७५) किमनार्यचर्यं कदनं दारवा कुरुते।

(७६) सांशयिकः संशयापन्नमानस इत्यमरः।

(७७) संयुगे सांयुगीनं तमुद्यतं प्रसहेत कः (भट्टि० )।

(७८) शमीव गाढाश्लिष्टां स्व तुरञ्जलिकायाम् ऊर्णो पसादयति पश्चादग्नेः (गो० गृ० २।१।१५)।

(७९) नाद्यं साधु, नाद्यं चापि। तत्कस्मात्।

(८०) कली चान्द्रायणाभ्यासैः श्रेष्ठसंचेति गुणो भवेत् (अग्निस्मृ० श्लो० २५७)।

(८१) न च ग्रामेयकालापैस्त्वं मां बाधितुमर्हसि (कृ० श्लो० सं० ८।२७)।

(८२) कथं शार्ङ्गिनीतरः (चिपुन् लू० भा०)।

(८३) तिलाश्च माषकसंश्लेषाः प्राप्नुवन्त्यधिवासताम्।
स्नेहभरास्तद्गन्धं सर्वे साङ्गत्यमिश्रा गुणाः (कामन्दकः)

(८४) मत्यपि भोऽभिकः (भट्टि० ८।९२)।

(८५) ~~[illegible]~~म् ... सीतापूतो सुरवामव (भट्टि० ५।६४)।

(८६) पश्यामि तावित इतः पुरतश्च पश्चात् (इति मालत्यां भवभूतिः)।

(८७) वृद्धजीवकः वाचुविरिव्यमरः। अत्र वाचुविरित्यस्य स्वाध्वर्थ चिन्त्यः।

(८८) गजपतिर्द्वैविताड्यस्येति गणपतेर्मन्त्रः।

(८९) पल्लवपत्रिकशब्दयोः को विशेषः।

(९०) ततो यथावद् विहितार्थ्वराय।

(९१) द्वे वर्षे भृतः कर्म करिष्यतीति द्विवार्षिको मनुष्यः।

(९२) अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः (मनु० १२।१०३)।

(९३) द्वे वर्षी जीवितपरिमाणमस्येति द्विवार्षिकः।

(९४) निवर्ते इति दार्शनिक शब्दस्य कोऽर्थः ?

(९५) नीलहारिद्रकौसुम्भवासोराशिमदापयत् (बृहत्कथा-श्लोकसंग्रहे ८।३७)।

(९६) स्वरतो हीनः स्वरतो वर्णतो वा। चिन्त्यम् दुष्टम्।

५४—यद्यपि नास्ति सत्यात्परो धर्म इति नित्यं कर्णकुहरीकुर्मस्तथाऽपि नानृतं परिहरामः ।

५५—सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ।

५६—जरासन्धो नाम मगधस्य महाबलो भूपो बभूव ।

५७—सार्वभौमिका इम आचाराः, यस्मान्नैते देशविशेषावच्छेदेनोपलभ्यन्ते ।

५८—अल्पीयांसोऽचोऽस्येत्यल्पाच्तरमित्युच्यतामल्पतराचकमिति वा । सोपपत्तिकं ब्रूहि ।

५९—उभे अपि भगिन्यौ सुन्दर्यौ । कनीयसी तु सुन्दरीतरा ।

६०—चाक्षुष्ये भूतग्रामे परिस्फुरति महिमा भगवतः ।

६१—कथं काषायौ गर्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादाविति ?

६२—रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिक् धिक्। अस्मिन्पद्ये योऽपशब्दं न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग् धिक्।

६३—देवदत्तश्चतुष्कृत्वोऽपि पाठं श्रुत्वा न धारयति, विष्णुमित्रस्तु सकृच्छृणोति चिरं च धारयति ।

---

## अथ समासेषु विवेच्यानि ।

## तत्र नित्यसमासाधिकारः प्रथमः ।

१—मद्यमकरन्द[1]माक्षिकाणां[2] वाची मधुशब्दो द्विलिङ्गः ।

२—चिरमनुनाथितोऽपि कोपनोऽसौ स्वी न कृतवान्प्रणयं शिष्याणाम् ।

३—भुजङ्गानां पयसः पानं विषमेव वर्धयति न तु दशनप्रवृत्तिं तेषामुपरमयति ।

४—आकाशेन संकाशं नीलं विमलं च जलमस्याः सरस्याः ।

५—धर्माधिकारिणंमन्याः शास्त्रिणो बलात्पातितानामपि प्रतिसंस्कारं न प्रतिपद्यन्ते ।

---

१ मकरन्दः पुष्परसः । २ माक्षिकं मधु ।

६—वेदिनः स्वस्य परस्य च भाषायां वाग्विशेषं विदुः, नेतरे ।
७—अद्य वाऽब्दशतान्ते वाऽवश्यभावी मृत्युर्जनिमताम् ।
८—साधु खलु पयसः पानं देवदत्तेन । ( काशिकायाम् )
९—अस्मास्वधीनं किमु निःस्पृहाणाम् ( किराते ) ।
१०—प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः । ( रघौ १।३ )

---

## अलुक् समासाधिकारो द्वितीयः ।

१—इतः प्राह्णतरे प्रस्थाताह इति मतिर्मम, विघ्नश्चेन्नातर्कितमुपनमति ।
२—इदमस्य वचो वाचस्पतेरपि विस्मयमादधीतेति दृढं प्रतीमः ।
३—त्रिंशतिरिमे च्छात्राः, देवदत्तस्त्वात्मचतुर्थः ।
४—विषमेस्थस्य हि न पापाच्छङ्कते चेतः ।
५—यः स्थण्डिलेशायी स स्थाण्डिलो ब्रह्मचारीत्युच्यते ।
६— सतत नैशं तमो नृत मन्यत: ( किराते)

## अविहितनिषिद्धसमासाधिकारस्तृतीयः ।

१—अस्रवारिस्रवन्नेत्रयुगेन मुखेन स आत्मवृत्तान्तं मन्दमन्दमलापीत्[1] ।
२—व्यवहारे सर्वश्रेष्ठः स्याः शास्त्रे च परिनिष्ठितः ।
३—विद्वत्पूजाऽकर्तुर्न केवलं व्यतिक्रमः स्वार्थहानं च ।
४—दुःखाग्निदग्धाङ्गानवनोपरमतो जनाननुकम्पन्ते सम्यग्दर्शनसम्पन्ना महात्मानः ।
५—अष्टाध्यायीमधीतवतः कस्य नाम न विदितो महिमा पाणिनिसूत्रकारस्य ।
६—स षष्टिरूप्यकाणि मासिकं वेतनं लभते न च निर्वृणोति[2] ।
७—मत्संमतोऽयं पक्षस्तवाप्यभिमत इति संभावयामि ।
८—सहजं हि काककार्ण्यं तत्क्रौर्यचापले च ।
९—एतत्पर्वतोपरिष्टाद् विस्तीर्णा समतला भूरस्ति ।



१ लप व्यक्तायां वाचि, तस्य लुङि रूपम् । २ सुखायते, सुखितो भवति ।

१०—परस्परविरोधजनयितार इमे ग्रन्था न विश्वजनीना[1] इति सत्यम्।
११—अस्त्ययं लोकः पुत्राभिलाषुकः।
१२—अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता (कुमारे ६।७९)।
१३—महिलोत्तमायाः श्रीसीतायाः के वयं महिमानं परिच्छेत्तुम्।
१४—कविप्रथमपद्धतिग्रणेता भगवान्वाल्मीकिरद्यापि कवीनामुपजीव्यः।
१५—कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रभृत्।
१६—शुक्राचार्यकन्यादेवयान्या वृषपर्वदुहितृशर्मिष्ठायाश्च मिथः कलहोऽभूत्।
१७—मा स्म केवलो गमः। एते वयं त्वत्साकं यामः।

---

## दुर्घटासमर्थसमासाधिकारश्चतुर्थः

१—इमां प्रश्नोत्तरीं परिशीलयिष्यसि चेद् ध्रुवं परीष्टिं[2] तरिष्यसि।
२—न हि मृत्युनिर्भयचेतसां वीराणामजय्यं नाम किञ्चिदस्ति।
३—पुंसां शरीरं हि पुण्यावासः परमेश्वरस्य। तस्य परास्त्रभञ्जनं कथमुपपद्येत।
४—धर्मिष्ठे राज्ञि [3]बल्यपीडिताः प्रजा नन्दन्ति।
५—वर्तमानस्य वैषम्यस्य प्रतीकारार्थं यतनीयं साम्यं च कथंचित्कल्पनीयम्।
६—ये संस्कृतपुनरुद्धारमिच्छन्ति ते संस्कृतज्ञान्भूयो मानयन्तु।
७—नृणां श्रेष्ठो रामो धर्मज्ञां योषित्सर्वगुणालंकृतां सीतां परिणिनाय।
८—प्रश्नान्वक्तु[4]मक्षमोऽसौ चिरं मौनास्थितः स्थितः।
९—गीर्वाण[5] समर्पणीया इमे बलयो न दूषणीयाः।
१०—आगामिपूर्णिमा-पूर्वं प्रकाश्या निबन्धाः सम्प्रेष्या इति सबहुमानमभ्यर्थ्यन्ते विपश्चितः।

---

१ विश्वजनेभ्यो हिताः। २ परीक्षाम्। ३ बलिः करः। ४ प्रतिवक्तुम्। उपसर्गाणां द्योतकत्वात्प्रत्यर्थः प्रतिना। तथा च भारते प्रयोगः—प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व चेति। ५ गीर्वाणा देवाः।

११—देहस्यावसानोत्तरस्मिन्समये कां गतिं गच्छति देहीति सर्वस्य जिज्ञासाविषयः ।

१२—हे त्रिलोकनाथ ! दयाकूपारो[1]ऽसि ।

१३—भोः पदार्थमात्रस्य ज्ञातयाथार्थ्य विद्वन् ! किं नाम तेऽविदितं यन्मयाऽऽख्येयम् ।

१४—अद्यत्वे त्रिसहस्राभिर्जातिभिर्विभक्ता हिन्दवः परोपजाप[2]मन्तरेणाप्यन्तर्जर्जरतां गताः ।

१५—स्वोदात्ताचरणेन पुरुष आत्मानमुन्नयति, अनुदात्ताचरणेन चाधो नयति ।

१६—अपन्थानं तु गच्छन्तं सोदरोपि विमुञ्चति ।

१७—प्रतिप्रश्नस्योत्तरे द्वे संभवतः पक्षविपक्षसमाश्रयेण ।

१८—रम्यौ हि सूर्योदयास्तौ भवत इति तत्र काले नियतं विहरेत् प्रधीः ।

१९—को भेदः स्व-सुराज्ययोः । यदि जानासि नूनं निपुणोऽसि ।

२०—तत्तद्ग्रन्थानधीतानामबहुश्रुतानामगम्योऽयमर्थः ।

२१—रजोदर्शनस्य पञ्चमदिवसादारभ्याषोडशीं तिथिमृतुदानकालः स्मर्यते ।

२२—अन्यैः कृतोपकारावेदनं कृतघ्नता नाम ।

२३—सन्तानस्य विनयाधानं हि जनकयोः प्रथमं कर्तव्यम् ।

२४—त्रिचतुर्वाऽङ्गुलायामाः समिधः कुर्वीत ।

२५—सर्वैर्यथाशक्ति परोपकर्तव्यं सफलं नोऽस्तु जीवितमिति ।

२६—आ चतुश्चत्वारिंशद्वर्षाणि मध्यमं ब्रह्मचर्यम् ।

२७—साङ्गोपाङ्गस्य प्रतिवेदस्याध्ययनं द्वादश वत्सरान्व्याप्स्यति ।

२८—स्मृत्युक्तोऽयमर्थ उपनिषद्भिरविरुध्यत इति सुतरामादेयो भवति ।

२९—आर्यदस्यूनां सञ्जातसंग्रामे दस्यवोऽशूरायन्त परं पराभवन्[3] ।

३०—अर्जुनः किल पातालदेशस्य नृपकन्यामुलूपीं परिणिनाय ।

३१—इन्द्रश्चाध्येता बृहस्पतिश्च प्रवक्ता, दिव्यसहस्रवर्षाणि चाध्ययनकालः, न चान्तं जगाम ।

---

१ अकूपारः समुद्रः । २ उपजापः कर्णे जपः । ३ पराजयं प्राप्नुवन् ।

३२—पञ्च शतानि च्छात्रा अस्यां पाठशालायाम्। अत्रार्थे पञ्चशतमिति समासोक्तिः सावद्योत निरवद्येत्यत्र निर्णयं ब्रूहि।

३३ शतवर्षेभ्यः किञ्चिन्न्यूनवर्षाणि पञ्चनदं नाम जनपदमाङ्ग्ला अशासुः।

३४—अयं महान् विद्वानस्ति। अयं च महद्विद्वान्। अत्र वाक्यार्थे को विशेषः।

३५—चतुश्चत्वारिंशत्सहस्राधिका लक्षलोकास्तत्र महात्मनो दिदृक्षया समवेताः।

३६—तृणानि शय्या परिधानवल्कलं वरं, बन्धुमध्ये धनहीनजीवनं तु न वरम्।

३७—आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः। परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम्॥

३८—अहर्निशं वर्षति वारिधारा तथापि पत्त्रत्रितयः पलाशः।

३९—राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः।

४०—पुरा किलाऽऽबालवृद्धाश्चन्दनचर्चितभालाः संस्कृतमधिजगिरे।

४१—चतुः पञ्चशतं वा रोगिणस्तत्रानुदिनं प्राप्नुवन्ति, इष्टं चोपचारं विन्दन्ति।

४२—सत्यंपरिच्छेत्तुमसाध्ययशसो रामादयो भुवः परिवृढाः।

४३—ततः सहसा बिल्वबृहत्फलेन पतता भग्नमस्य खल्वाटस्य शिरः।

४४—मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम्।

४५—पतन्त्यनेके जलधेरिवोर्मयः ( किराते )।

४६—आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः[१] परश्शताः (माघे)।

४७—अत्र देशे निरन्तरायां वृद्धयां सत्यां विंशतिवर्षादूर्ध्वं सर्वं साधू भविष्यति।

४८—स नक्तंदिनं ( दिवानिशं ) परिश्राम्यति न च सिध्यति। बाढं मन्दो[२] भविष्यति।

४९—क्व वा वेदानां शास्त्राणां वा तुलाऽधिरूढं पुस्तकम्?

२ मूढः।

५०—अनद्यतनभूतादिकतिचिल्लकारैर्ज्ञातैर्न खलु वाङ्मयं ज्ञातं भवति।
५१—गते समरे परस्सहस्राः प्रवीराः सर्वदार्थं वीरशय्यामध्यशेरत।
५२—कतिपयेऽस्य चान्येषां कवीनां च श्लोकाः सनामग्राहमिहोदाह्रियन्ते।
५३—पिब मौकुन्दं पदमकरन्दम्।
५४—भारतस्य प्रतिकोणं संस्कृतपाठशालाः प्रवर्त्यन्ताम्। अत्रैव लम्बते हितं प्रजानाम्।
(५२) [illegible]

## पूर्वनिपातपरनिपाताधिकारः पञ्चमः।

१—यो हि कृमिपक्षिमृगादीनि भूतानि समं पश्यति स धीरः।
२—ते नामासमर्था ये हिंसां बलोत्तमं विदुः।
३—शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः। तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते (मनु०)॥
४—शूलपरशुशरचापभृता निर्यान्तु मे योधाः शत्रुनिर्दहणाय।
५—उद्यतासिर्व्यूढकङ्कटो[1]ऽभीतवद् यात्यरीन्योधः।
६—मुहूर्तैकं तिष्ठ। अस्ति मया किमप्यात्ययिकं कार्यम्।
७—भसि[2]तशरीराः संमुद्रितश्रवणा[3] मृदुपलिप्तवदनविवराः केचित्तापसलिङ्गिन आत्मानमेवातिसन्दधति[4] केवलम्।
८—सर्वे मनुष्याः स्वलाभहानिपरिचिता इति न तत्र शास्त्रेणार्थिनो भवन्ति।
९—स्वकठिनपरिश्रमस्य फलमवाप्नुहि सर्वं चायुरिह।

---

## पुंवद्भावाधिकारः षष्ठः।

१—वाराणसेयीं प्रथमापरीक्षामुत्तीर्णो मे वत्सः, सम्प्रति मध्यमां तितीर्षति।
२—तृतीयाप्रकृतिरिति नपुंसकपर्यायः।
३—कश्चात्र शब्दो दृढभक्ति दृढाभक्तिरिति वा बहुव्रीहौ?

---

१ दंशितः, वर्मितः। २ भसितं भस्म। ३ श्रवणः कर्णः। ४ प्रतारयन्ति।

४—याऽऽत्मानं दर्शनीयां मन्यते सा दर्शनीयमानिनीति वक्तव्या स्यादुत दर्शनीयामनिनीति सप्रमाणं ब्रूहि।
५—नेष्टं पुरो द्वारवतीत्वमासीत्।
६—नाहमन्यमना अस्मि। अनिर्वर्णनीयं मे परकलत्रम्।
७—न ह्येश्वरीसृष्टेः स मुत्पादकाः परमाणवो भवितुमर्हन्ति।
८—पश्य प्राचीदिशोऽलङ्कारभूत उदेति भगवान् विवस्वान्।
९—शूद्रादयोगवः क्षत्ता चाण्डालश्चाधमो नृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः॥ ( मनु० १०।१२॥ )
१०—तामसीवृद्धिरसौ पृथग्जनोऽसकृत्प्रेर्यमाणोऽपि न सुकृते प्रवर्तते।
११—अस्मिन्कर्मणि तस्याः कर्तृत्वं केनापह्नूयते ?
१२—ते हि भगवन्तो नैःस्पृह्यस्य पराकाष्ठां भेजिरे।
१३—इमे मान्या व्यवस्थापिकासभायाः सभ्याः।
१४—सरस-रसवतीसुरसरस्वतीधाराभिः को नेच्छेदात्मानमभिषेक्तुम् ?
१५—परपुरुषार्थब्रह्मज्ञानहेतुत्वादुपनिषदां पराविद्यात्वम्।
१६ प्रेक्षावान् खलु पूर्वतरमेव दैवीसम्पत्सम्पादने प्रवर्तेत।
१७— निरीक्षणे मेने शब्दः कुत्सितः।

## पूर्वपद ह्रस्व दीर्घाधिकारः सप्तमः।

१—अभिरूपः[1] सुकुमारः स कुमारो नारीमन्य इत्यहो अस्य विभ्रमेण जितम्।
२—न गङ्गदत्तः पुनरेति कूपम्।
३—इयं हि ब्राह्मणीब्रुवा[2]। अस्या ब्राह्मणीत्वे मानं मृग्यम्।
४—वैदेहि वन्योर्हृदयं विदरे।
५—मर्माविध इमा उक्तयः किमपि क्षिण्वन्ति हृदयं श्रोतॄणाम्।

---

१ मनोज्ञः। २ आत्मानं ब्राह्मणीं ब्रूते। ब्रुवः पचाद्यच्। गुणाभावो निपातनात्।

६—अस्तीहच्छात्राणामेको विश्वमित्रो येन विष्णुमित्रस्य सतीर्थ्यस्य पुस्तकं चोरितम् ।
७—प्रतिकाशशब्दं निभसंकाशादिभिः सदृशवचनैः समानार्थं पठन्ति कोषकाराः ।
८—केचिच्छस्त्राशस्त्रि युध्यन्ते, परे मुष्टिमुष्टि, इतरे बाहूबाहु ।
९—कियदस्य परीमाणमिति विमाय जानीहि ।
१०—द्वाःस्थे द्वारि प्रतीहारः प्रतीहार्यप्यनन्तरे ।



## समासनपुंसकताधिकारोऽष्टमः ।

१—आसन्नां काममपि महतीं व्यापदमाशङ्क्यानाहूता एवामात्या नृपतिसभामगमन्परामर्शाय ।
२— इक्षुच्छायानिषादिन्यः शालिगोप्यो जगुर्यशः । ( रघौ )
३—इयं भाषान्तरोक्ता विषयग्रहणसरणिर्न मदुपज्ञा ।
४—इदं स्त्रीसभं याति ।
५—सान्द्रासु तरुच्छायास्वपस्किरन्ते श्वान आश्रयार्थिनः ।
६—नेत्रश्रवणनासासु नित्यं तैलं निषिञ्चेत् ।
७—गृहिणो हि नित्यमुलूखलमुसलेन व्यवहारः । शास्त्रकाराश्च तत् सूनात्वेन रूपयन्ति ।
८—काकोलूकानां वैरं काकोलूकिकेत्युच्यते तद्धितवृत्त्या ।
९—पिपतिषतीयं गृहस्थूणा, श्च्योतति च च्छदिः ।
१०—शशोर्णं शशलोमनीत्यमरः पपाठ । तत्राद्यस्य षटस्य साधुत्वमुपपादय ।
११—राजहंसास्तु चञ्चुचरणैर्लोहितैः सिता इति चामरः । तत्र दोषं विभावय ।
१२—नृपति सभा मग न्वयेपमानः ( श्री-चक्रनवे )

# समासाश्रयविधिपरिशेषाधिकारो नवमः ।

१—उदकपेषं पिनष्टि चन्दनं भालं चर्चयिष्यामीति ।
२—काश्मीरेष्वच्छोदकं नाम सरः श्रूयते प्रशस्यते च वैमल्येन शैत्येन चापाम् ।
३—स्वस्त्यस्तु ते पुत्रि ! सहभर्तृकायै । अलमिदानीं रुदितेन ।
४—मातृ पित्र्यध्यापका हि बालस्य संस्कारकाः ।
५—अष्टत्रिंशतं मुद्रा राजतीरपेक्षे नातोऽधिका इति तातपादा आवेदिताः ।
६—अष्टगवेन शकटेन याति गोपो विभवो मे प्रथतामिति ।
७—गायकानामेको हरिश्चन्द्राभिधो मुखं व्यादाय दशनान् प्रदर्श्य चक्षुषी च विस्फार्य तथोच्चैर्गायति यथा बाला अट्टहासं हसन्ति वृद्धाश्चान्तर्लीनम् ।
८—स्वस्ति तेऽस्तु सवत्साय च सहलाय च ।
९—सहपुत्राऽपि भारं वहति गर्दभी वराकी ।
१०—इदं कामधुरं जलम्, इदं च कालवणम् । यतरत्ते रोचते तदादत्स्व ।
११—महद्बलेनाऽपि न शक्यं कार्यमेतन्निष्पादयितुम् ।
१२—उक्षा स द्यावापृथिवी बिभर्तीत्यृच्युक्षाशब्दः कमर्थमाहेति जिज्ञास्यम् ।
१३—प्रत्येकस्य प्रश्नस्य समा अङ्काः । ये केऽपि षट् कामतः प्रतिवक्तव्याः ।
१४—प्रतिकशप्रतिष्कशशब्दयोर्विशेषं ब्रूहि यदि वेत्थ ।
१५—कदाचारा अपि पुरुषाः कदाचिच्चातुर्यवशात्सदाचारा इति प्रसिध्यन्ति ।
१६—वेदान्तेषु यं द्यावाक्षामे व्याप्य स्थितं पूरुषमाहुः स निःश्रेयसाय नोऽस्तु ।
१७—इदं त्र्यृचं सूक्तम् इदं सप्तर्चम् ।
१८—इमां समस्यामवश्यावश्यं पूरयेयुश्छात्राश्छन्दोविचित्यां च स्वस्य वैशारदीं प्रमाणयेयुः ।
१९—वेधा द्वेधा भ्रमिं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥
२०—मुहम्मदानुगा हैन्दवीषु स्त्रीष्वप्यसदचेष्टन्तेति महल्लज्जास्पदम् ।

२१—अमूदृक्षा[1] विरला एव जगति जायन्ते परदोषेषु वाचंयमाः।
२२—सायाह्नि वहिर्नगराद् भ्रमणं शरीराय हितं भवति।
२३—श्वश्रूश्वशुरौ पुत्रेण पुत्रवध्वा च कलहायेते।
२४—शिलामूर्तिरियं रामकान्ताप्रतीका[2]। सैवेयं तत्प्रतिकृतिर्वेति सन्दिह्यते लोकाः।
२५—अद्य शुक्लाष्टमीति महद्भूनश्चन्द्रमाः।
२६—ग्रीवाकुक्षिललाटे नित्यं स्वेदः प्रशस्यते।
२७—गर्भाधारणपोषाभ्यां मता माता गरीयसी।
२८—मध्यन्दिनार्कसंतप्तः सरसीं गाहते गजः।
२९—सन्देहद्वारावंतौ पर्यायवचनौ परिपठति कोषकारः। तत्रोत्तरपद आत्वं केनेति वेत्थ चेच्छब्दविदसि नूनम्।
३०—देवासुरैरमृतमम्बुनिधिर्ममन्थे।
३१—मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम् ( मेघदूते )।
३२—किमिदं मदर्थमन्यदर्थं वा। अन्यार्थमेवैतत्।
३३—सर्वाणि श्रेयांस्यधिजग्मुषस्ते कामन्याशिषं प्रयुञ्जीमहि।
३४—इदं बृहत्तन्त्रम, इदं च कातन्त्रम्।
३५—अयं मे समानगोत्रः। यथाहं वासिष्ठस्तथाऽयम्।
३६—त्रिस्त्रिंशानि वर्षाणि चैत्रस्य, मैत्रस्य तूनविंशानि।
३७—कति वा युष्माकं पञ्चविंशवर्षाधिकवयस्काः ?
३८—महादर्पोऽवरङ्गजीवो महामहतीं चमूमादाय दक्षिणापथे गोलकुण्डाख्यं राज्यमवास्कन्दत्।
३९—कुशलवौ मुनेराज्ञया श्रीरामायणं स्थानस्थानतो लयतालसहकारेणागासिष्टाम्।
४०—पितृपादानुध्यातः पुत्रो यथेष्टान् कामानवाप्नोति यथेष्टां च सिद्धिं लभते।

---

१ तादृशाः। २ प्रतीकं प्रतिकृतिः।

~~(५३) [illegible] वर्तते वत्सः।~~

~~(५३)~~

(५४) इतरा पितरां भोजयत इमे ब्राह्मण्यौ।

(५५) क्रियमाणमानं ब्राह्मणा कुलमन्यत इति क्रियमाणमिति भाष्ये स्थितम्। तत्र साधुत्वं चिन्त्यम्।

(५६) यत्र सपक्षविपक्षसद्भावेनोभयव्याप्तिभ्यां साध्यं साध्यते तदन्वयव्यतिरेकि।

(५७) शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः (मनु० ८।१०४)।

(५८) सौम्य! त्वर्यताम्। इध्मा बर्हि रानीयताम्।

(५९) महापादपच्छाये नान्यः पादपः प्ररोहति।

मधुर (६०) एष खलगुडप्रहारोऽपि मनस्विनं तं भृशमतुदत्।

(६१) कदरा: स्म मा न: (भा० पु० ५।५।२८)।

(६२) कथं विनता हतबान्धवा' (भट्टि० )।

७—पाद्यार्घ्याचमनीयं त्रिविधं जलं निवेदयेद् गृहागताय।

८—प्रमीत[1] पतिपत्नीकौ स्त्रीपुंसौ नियोक्तव्याविति केचित्।

९—यदभिमुखं पश्यति गोस्वामी तदीयं भाग्योदयं निश्चितमवैति श्रद्धाजडो जनः।

१०—क्वचित्काणो भवेत्साधुः क्वचित् खल्वाटनिर्धनः।

११—साम्प्रतं लब्धप्रचारमतानि प्रायशो विरोधमुपजनयन्ति जनतायाम्।

१२—प्रच्छन्नपापिनो ये स्युः कृतघ्ना दुष्टचारिणः। नरकेषु च पच्यन्ते यावदाभूतसम्प्लवम्[2]॥

१३—एतदेवान्तरं प्राचीननवीनपरिपाट्योः।

१४—अशक्येयं शिविका[3] शतपुरुषैरपि वोढुम्।

१५—वात्सल्यातिशयलालिताङ्गयष्टिकतनय-यमसदनातिथिभवने पिता शुचो वशमगात्, चिरं च प्रामुह्यत्।

१६—एवं वचनोपन्यासः परचक्षुर्धूलिनिक्षेप इव भवति।

१७—अस्यैकदिनपूर्वं सोऽयं ग्रन्थः पूर्त्तिमगात्।

१८—देव! अशरणोऽहं ते चरणशरणमापन्नः। पाहि माम्।

१९—संस्कृताधीतिनां[4] कृते बहु कर्तव्यमवशिष्यते शासितृवर्गस्य।

२०—अज्ञानमेवावृतवेदभानो चार्वाकादय उद्बभूवुः।

२१—कृष्णेनानेन कर्मणा स पितुरपि कलुषवदनं चकार।

२२—योऽभिवादितविप्रस्तु नाशिषं सम्प्रयच्छति....।

२३—सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः। (अमरे)

२४— आसुरे कुलमनादरणीयं लीलया भवजलं तरणीयम्।

---

२५— यथा शरीरस्य पतितो म्रियते तथा प्रासादः पतितोऽपि। [illegible] निश्चेष्टः।

---

[1] प्रमीतौ मृतौ। मीङ् हिंसायां दिवादिरकर्मकः, ततो निष्ठा। [2] भूतसम्प्लवः प्रलयः। [3] शिबिका याप्ययानं स्यात्। [4] अधधीतमेभिरित्यधीतिनः। इष्टादिभ्यश्चेति इनिः।

# समासान्ताधिकारो द्वादशः ।

१—व्यूढोरा[1] वृषस्कन्ध उग्रमन्युः स राजन्यः कस्य भयं न जनयति ।
२—सुराजान[2] इमे देशा यत्र राजहंसा राज्यं शासति ।
३—यः सखायं किंसखायं च विविङ्क्ते स सुखं समश्नुते ।
४—नवप्रसूतगावो धेनव उच्यन्ते ।
५—अनर्थ एव वाक्यव्रातः । अज्ञानस्य प्रतिपत्तौ यत्नेन ।
६—अद्य सुप्रातं यच्चिरस्याकाङ्क्षितदर्शनो देवो दृष्टः ।
७—यो दिवारात्रं स्वपिति तस्य का सिद्धिः सम्भाव्यतेऽधन्यस्य ।
८—नातन्त्री विद्यते वीणा नाचक्रो विद्यते रथः । ( श्रीरामायणे )
९—वापीकूपतडागादिभिरलङ्कृता सुपथीयं नगरी किमपि रामणीयकं धत्ते ।
१०—एकार्थके इमे ऋक्सामनी इति न न विदन्ति मन्दप्रज्ञा नरास्तत्राऽपि ।
११—अयं किंगौः, अयं च सद्गवः, जरन्नपि[3] यो न हत्यनोदितः[4] ।
१२—किमित्यवमूर्धः[5] शेषे ? उत शिरोऽर्तिस्तेऽस्ति ?
१३—अनेकप्रकटितपरिपाटीनटीनर्तकानां वेपलीलेयं ललिता मनो हरति प्रेक्षकाणाम् ।
१४—इह कतिपयाहोवासः शरीरं तवोपस्करिष्यते[6] ।
१५—प्रसन्नललिता सुमाधुरीयं वाग्धोरणी कस्य मुदे न ?
१६—अहो अन्धतमः प्रविष्टाः स्मः । नेह हस्तस्पर्शादिनापि किंचित्प्रज्ञायते ।
१७—सुगन्धिरयमापणः क्षणमत्रैव तिष्ठामः ।
१८—अयं पथिप्रज्ञ[7] इति पथप्रदर्शको नो भवितुमर्हति ।
१९—पञ्चषड्दिवसान्मयि[8] वस्तुमर्हसि । ततः स्वान्गृहान् गमिष्यसि ।
२०—वाङ्मनसोरगोचरो भगवतो महिमा । तथा हि श्रुतिः—'एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः' इति ।

---

१ व्यूढं विस्तीर्णमुरो यस्य । २ शोभना राजानो यत्र । ३ वृद्धः । ४ अप्रेरितः । ५ अवनतो मूर्धाऽस्य । ६ गुणमाधास्यति । ७ वाक् प्रवाहः । ८ पन्थानं प्रजानातीति । ९ मदन्तिके ।

२१—आहूय सुग्रीव वालिनं भ्रातृगन्धिनम्। ( श्री रामायणे )
२२—कल्याणी खलु पूर्वोत्थायिनो जघन्यसंवेशिनो[1]ऽस्यान्तेवासिनोऽहोरात्रिचर्या।
२३—अन्तर्लोमाऽयं पटः स्पर्शे मृदुः।
२४—रामेण ह्येकेन चतुर्दश सहस्राणि भीमकर्मणां रक्षसां हतानि खरदूषणत्रिमूर्धानश्च।
२५—इदं च साधारणमेधसामपि न न विदितं सारल्यं सत्तमो नय इति।
२६—यदि प्रत्यहं पात्रसंमार्गो न स्यात्तर्हि पात्रेषु पूतिगन्धिर्जायेत।
२७—शोभनगन्धिना प्रातस्तनेन समीरेण यथा सन्तृप्यतीन्द्रियग्रामो न तथार्थान्तरेण।
२८—यावदिदं शरीरं स्वस्थमरुजमपरीतं च जरया तावन्निःश्रेयसि प्रयतेत सुधीः।
२९—अद्यत्वे यश्चिरं जीवति स वर्षशतं जीवति। इदमेव च पुरुषायुरित्यामनन्त्यृषयः।
३०—ईश्वर एकं विपथेन नयत्यपरं सुपथेन। तेन भगवतोऽनुग्रहः सततमेषणीयः।
३१—नहि रात्रिन्दिवा प्रयस्यन्तः समे[2] समं समृद्धमनोरथा भवन्ति।
३२—मध्येदिवं तपति दिनकरः। महांश्च नः क्लमः। तेनेहैव विश्राम्यामः।
३३—यत्र समेधितमेधसोऽपि विमुह्यन्ति तत्र हता दुर्मेधस इति किमु वाच्यम्।
३४—आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी। ( अमरे )
३५—वरतनु ! सम्प्रवदन्ति कुक्कुटाः।
३६—धावकादिभिः कविभिः स्वराज्ञो नाम्ना प्रकाशितानि काव्यानीति प्रथते प्रवादः।
३७—सर्वाहं यत्किमपि गृहकृत्यं सम्पादयन्ती सा परं निर्वृणोति।

---

१ पश्चाच्छायिनः। २ सर्वे।

(४४) एकपादा द्विपादाश्च नर्दन्तो युद्धकाङ्क्षिणः (हरि० २।८?।२२)।

(४५) निःश्रेयस्कः पुरुषः इत्यत्र (अच्प्रत्ययौ) न भवति, (तद्धि निःश्रेयसे तत्पुरुषे निपातितः) (काशिका ५।४।७७)।

(४६) वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।

(४७) अयं प्रजाः पुत्रवत्पालयतीति सुराजा, अयं च राजा तु पुनः केवलं षष्ठांशभुगिति कुराजा।

(४८) नगरवर्णनमपि सिद्धहस्तानां कवीनां प्रतिभाप्रकाशाय निकषोपलो गण्यते।

(४९) प्रबलं निपीड्यमानाः पिबन्ति कटु भेषजम्।

(५०) केचित्तत्त्वदर्शनाय नक्तंदिवा यतन्ते न च लभन्ते।

(५१) वाली हेमाम्बुजमाली गुणनिधिरिपुणा निर्जितो दाशरथिना।

(५२) वरदः करोतु सुश्लाघ्यमलानयं हि नायकः।

(५३) परमस्त्वथर्वैः परमस्त्वथर्वेति च साधुनी शब्दरूपे। तत्र समासान्तकत्वाभावस्त्वयोर्हेतुं चेद् वेत्थ नूनं शाब्दिकोऽसि।

(५४) पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः (मनु० १।४३)।

(५५) सामध्वनावृग्यजुषी नाधीयीत कदाचन (मनु० ४।१२३)।

(५६) ~~[illegible]~~ कुम्भकर्णी न मार्जारी द्विजिह्वा न च सर्पिणी। पंचभर्त्री न पांचाली यो जानाति स पण्डितः।

(५७) सौमित्रिश्च बद्धलक्ष्यः कर्णान्ताकृष्टमौर्विकस्तिष्ठति प्रतिभयाकारः।

(५८) सरजसं मकरन्दनिर्भरासु (शिशु० )। सरजसमपहाय केतकीनाम् (किरात० )।

(५९) प्रियमधुरसनानि षट्पदाली मलिनयति स्म विनीलबन्धनानि (कि० १०।२६)। [नील written above]

(६०) [illegible] काले विधुवद् विभुनं चास् (अमरे)।

३८—गणरात्रं निशा बह्व्यः । ( अमरे )
३९—पुरा किल सुकर्मार्जितशान्तिसम्मर्दं भारतं वर्षं लोकस्य स्पृहणीयं बभूव ।
४०—धर्मस्यैकपादेवाऽवशिष्टः कलावित्याहुः ।
४१—अज्ञानान्धतमसि दन्द्रम्यमाणा[1] न जातु परं पुमर्थं साधयन्ति ।
४२—इदानीमर्धरात्रिर्गतेति विरमामोऽध्ययनात् ।
४३—न गर्दभा वाजिधुरं वहन्ति ।

---

## अथ लिङ्गेषु विवेच्यानि ।

१—अयं पद्मः किम् ? न खलु । मही‍तलसंचार्येषः, स च सरोविहारी ।
२—शुचौ[2] शुष्यन्ति पल्वलाः ।
३—वित्तं खलु समस्तकार्याकरम् ।
४—महानयमाजि[3]र्न जाने कदाऽवसास्यति ।
५—अयं ते धनुः । तूणीरं क्व निहितमिति नाहं वेद ।
६—क्षमे ! सत्यं सर्वसहाऽसि यदतिनृशंसस्य जनस्यापि समाश्रयासि ।
७—अतीते महायुधि लक्षशो योधाश्चायोधाश्च विगतविग्रहा अभूवन् ।
८—पुराणीयं कलिरेतद्वंशजानाम् । नैषा शक्या शमयितुम् ।
९—दुर्भेदा इमा ग्रन्थग्रन्थयः । सर्वतन्त्रस्वतन्त्र एव कश्चिद् एतद्विभेदनायाऽलं स्यात् ।
१०—धनधान्यसमृद्धायामस्यां नीवृति[4] बह्वयः प्रजा दुर्विधाः[5] सन्तीति किमेतत् ?
११—प्रतिष्टम्भनिः स्पन्दीकृता सव्या मे बाहुः ।
१२—नेमा इषवः शिखण्डिनः ।
१३—कियत्यो वितस्तयो वरिमा[6]ऽस्य पटस्य ?

---

१ जङ्गम्यमानाः । बम्भ्रम्यमाणा इत्यर्थः । २ आषाढे । ३ युद्धम् । ४ जनपदे । ५ दुर्गताः, दरिद्राः । ६ विस्तारः ।

१४—पञ्चालास्तत्र पश्चिमेन त इमे वामा गिरां भाजनाः। (बालरामायणे)
१५—भूमिरियं सर्वेष माधेयानामाधारोऽतो महदावपनमुच्यते।
१६—नायं सारः[1], स्वयं रथेन यासि, उपाध्यायं च पदातिं गमयसि।
१७—केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः। (भर्तृहरौ)
१८—वर्धनं वाऽथ सम्मानं खलानां प्रीतये कुतः?
१९—देहमनसी दुःखाश्रये न त्वात्मा।
२०—कण्टकं मे पादे लग्नम्। तदुद्धर।
२१—वत्स! सद्य आपणं याहि। आम्रांश्च स्वादीयसः कियतोप्याहर।
२२—द्वौ द्वौ चत्वारो भवन्ति।
२३—इमाः पुष्करिण्य इमानि च नानाकुसुमानि सरोवराणि कस्य मुदे न?
२४—वल्मीकं नाम पिपीलिकाभिरुत्क्षिप्तं मृदां पुञ्जम्।
२५—बृहदिदं राष्ट्रियं सङ्घमिति सर्वं एनत् संनमन्ति।
२६—सस्याढ्या ग्रामाः समृद्धिमन्ति च नगराणि प्रसृतश्च वणिजां व्यवहार एतद् शवैभवस्य व्याख्यातारः।
२७—योऽबलेषु परकृता बलात्कृतीस्तूष्णीं सहते स सत्त्वहीनो नपुंसकः।
२८—येन केन प्रकारेण सर्वस्य जन्तुनः सन्तोषं जनयेत्।
२९—धनेन मानस्य विनिमयो न वरम्।
३०—दुःखाकराभिर्गृहकृत्याभिरहरहः क्लिश्यन्ते गृहिणो निर्विद्यन्ते च।
३१—क्लिश्यतेऽसौ नाडीव्रणेन। नेदमद्यापि संरोहति।
३२—स्वरपि मे न मनोहर उत्त्रसत्पृषतलोचनया[2] रहितस्त्वया।
३३—अमित्रा मित्ररूपेयं पाणिगृहीती मम। (श्रीरामायणे)
३४—इमानि कन्दराणि श्वापदाकुलानीति भयं जनयन्ति यात्रिकाणाम्।
३५—जर्जरिता गृहस्थूणेति पित्सति पटलम्[3]।
३६—अपार्यं खे सम्पतन्ती बलाकपङ्क्तिर्दृष्टेस्ते गोचरा?
३७—अहो रमणीया अस्य बर्हिणस्य[4] बर्हाः[5]। प्रत्युत्पन्न[6] इवात्र दृष्टिः।

---

१ न्यायः। २ पृषताक्षना हरिणाक्षी। ३ छादः। ४ बर्हिणः, मयूरस्य। ५ पिच्छानि। ६ सज्जति।

३८—वर्तमाना हिन्दवः सभ्यानामार्याणां सन्तानानि सन्तीति लोकस्यादृता भवन्ति भूयसा ।

३९—उत्तरस्य : पश्चिमायाश्चान्तराला दिगुत्तरपश्चिमोच्यते ।

४०—धनधान्येन समृद्धिमदिदं जनपदम् इति सुकृतिनो जनपदिनः ।

४१—नैत्यशब्दिका वैयाकरणाः कार्यशब्दिकाश्च नैयायिकाः । इतरत्रापि भिद्यन्ते सिद्धान्तानि विमर्शकानाम् ।

४२—मयि दूरीभूते त्वयैव मे जनन्या योगक्षेमसवेक्षणीयम् ।

४३—नाको मे स्यान्नरकं मा भूदिति सर्वस्य हृदि स्थितः कामः ।

४४—अस्ति कश्चित्पुस्तको यमवलोकयेयं कालं च साधु नयेयम् ?

४५—इह ग्रामे क्षारवारयः सर्वेऽप्युदपानास्तेनेतो दूराद् ग्रामान्तरादाहरन्ति पानीयं ग्रामीणाः ।

४६—अत्र सद्मनि किमपि गवाक्षं नास्तीति नेदं वासार्हम् ।

४७—अयं त्रिपथः, नैनेन गन्तव्यं गन्तुमर्हसि ।

४८—क्रव्यादस्यास्य तालुनि तीक्ष्णेनास्थ्ना विद्ध इति वराकः परं दुःखायते ।

४९—द्रव्य[1]सियं ब्राह्मणी । धन्यावस्या मातरपितरौ ।

५०—जीर्णेयं छदिः पिपतिषति नूनम् ।

५१—कुम्भूलं[2] विरच्यताम् । संस्करिष्याम्यनेनात्मनो देहम् ।

५२—यो हि मित्राणि वा बन्धून्वा नित्यं याचते स बहुतृणो[3] नरः ।

५३—कस्येदं कुटीरं स्यात् । अपि नामाऽस्य स्वामी वासं नो दास्यत्येकरात्रम् ?

५४—इयं कुतूस्त्रिंशत्सेटकमितं तैलं संभवति । इदं कुतुपं तु पञ्चदशसेटकमितम् ।

५५—रौद्रश्चतुष्पथ इत्यृषय आमनन्ति । तथाम्नाने च न दुष्करो हेतुरुन्नेतुम् ।

५६—शुक्ले अपाङ्गे नेत्रप्रान्तावस्येति शुक्लापाङ्गो मयूरः ।

---

१ भव्या । २ तृपानलः । ३ तृणप्रायः । बहुच्प्रत्ययः ।

५७—अयमपथः, एनेन चेद्यास्यसि पदे पदे स्खलिष्यसि।
५८—गभीरमिदं जलाशयम्। नात्र बाहुक[1] स्तरेत्।
५९—प्राचीनं ग्रामादाम्राः। (भाष्ये)
६०—अन्तरेण स्वार्थहानं परार्थं न सिध्यतीति प्रायिकम्।
६१—कैरध्युषिता इमेऽन्तरा गेहकाः। इमे हि मलवन्तो भवन्ति।
६२—अत्र कियन्त्यक्षतान्यपेक्ष्यन्ते तिलकक्रियायाम्?
६३—कस्य नाम न वन्द्या अमी मुनयः प्रशमायनाः?
६४—अहो अवश्यायसिक्ता इमे किसलया बालार्कोपरक्ताः कामप्यभिख्यां पुष्यन्ति।
६५—श्वदृतिः क्षालिता तीर्थे किं शुद्धिमधिगच्छति?
६६—भारतोपनिबद्धमिदं वृत्तान्तं सत्यं स्यान्नासत्यमिति नः प्रत्ययः।
६७—किं धर्मः किमधर्म इति प्रश्नश्चिरन्तनः।
६८—बहूनि विघ्नानि कुर्वन्ति दुर्जनाः सुजनक्रियासु।
६९—भवन्ति चात्रार्थे यजुषः प्रमाणम्।
७०—प्राणस्य निग्रहादिन्द्रियपूगं स्वायत्तं भवति।
७१—शास्त्रसहकारेण बुधजनोपासनया च सत्यासत्यौ विविञ्चीत।
७२—अप्रमोदात्पुनः पुंसः प्रजनं[2] न प्रवर्तते। (मनु०)
७३—मञ्चाः क्रोशन्तीत्यत्र तास्थ्योपाधिरवगन्तव्या।
७४—सूर्यादीनि लोकान्तराणि सर्वे चैहिका भोग्यार्था भगवतैव विनिर्मिता इति सत्यम्।
७५—तदिदं धर्मचक्रमनादिकालात्प्रवृत्तं प्रवर्तिष्यते निरवधिम्।
७६—ननु किं नाम मुक्तिः। कैवल्यमिति साङ्ख्याः, आत्मोपलब्धिर्ब्रह्मभावो वेति वेदान्तिनः, अपवर्गो दुःखात्पृथग्भाव इति च नैयायिकाः।
७७—ब्रह्म च जीवश्च भिन्नावेवेति मध्वादयः।

---

१ बाहुभ्यां तरतीति। २ गर्भाधानम्।

७८—वत्स ! कपाटौ पिधायान्तस्तिष्ठ । प्रवाति वातो रजोविक्षिपः[१] ।
७९—इदमस्य प्रमत्तगीतं भङ्गमदवशं गतस्य ।
८०—रे रे पान्थ ! व्रतशुचेर्ममायं कङ्कणः प्रतिगृह्यताम् ।
८१—यादृशी शीतला देवी तादृशो वाहनः खरः ।
८२—निरर्थकाश्च जटा वर्धयित्वा तापसव्यञ्जनोपेता अमी भिक्षुकाः कदाचारवृद्धये कल्पन्ते ।
८३—आर्हताः[२] खलु जगज्जीवो जीवकर्माणि बन्धश्चानादिरिति मन्यन्ते ।
८४—शिखिपिच्छमयो मुकुटः कमपि शोभातिशयं जनयति रुक्मिणीजानेः ।
८५—यदा नभसि तारको दृश्यते तदाऽयं[३] वाचं विसृजति[३] ।
८६—अत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसत इत्ययं भूभाग स्त्रिदिव एव ।
८७—अद्य सहस्रमब्दानि महमूदेन भरतभुव आक्रान्तायाः ।
८८—ब्रह्मसूत्राण्युपनिषदो गीता चेत्यध्यात्मविद्या । इमा एव प्रस्थानत्रयीत्युच्यते ।
८९—स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम् ।। ( श्रीमद्भागवते )
९०—सर्वे पदाः हस्तिपदे निमग्नाः ।
९१—न साहसैकान्तरसानुवर्तिना न चाप्युपायोपहतान्तरात्मना । विभूतयः शक्यमवाप्तुमूर्जिताः ।
९२—विशेषणैर्यत् साकूतै[४] रुक्तिः परिकरस्तु सः ।
९३—यो हि भूयसः शब्दार्थजातान्वेद, साधीयांस्तस्य वाचि भागः ।
९४—पूर्णिमायां सामुद्रा वीचयः कामपि शोभां पुष्णन्ति ।
९५—वश्यवाचः श्री वाचस्पतिमिश्रा दर्शनेषु वैदुष्यनिकषाणि दार्शनिकहृदयहारीणि व्याख्यानानि वितेनिरे ।

---

१ विक्षिपतीति विक्षिपः । कः प्रत्ययः । रजसो विक्षिप इति षष्ठीसमासः । २ जैनाः । ३—३ मौनं त्यजति । ४ साभिप्रायैः ।

९६—देवदत्तः परीक्षामुत्तीर्णानां गणना प्रसङ्गे कनिष्ठिकाधिष्ठितोऽभूदिति प्राश्निकाः[1] पुष्कलः पारितोषिकोऽस्मै देय इति निरचैषुः ।

९७—प्रणेष्यमाणमिदं काव्यं श्रमप्रसूरेव भविष्यति नार्थकृत् ।

९८—प्रजनं नाम प्रजननं प्रथमगर्भग्रहणमुच्यते । तदेव चोपसर इत्युक्तः सूत्रकारेण ।

९९—सत्यं लोके स्मिन्प्रमेयशतांशमपि स्वानुभवेन ज्ञातुं न शक्यम् ।

१००—पावको लोहसङ्गेन मुद्गरैरभिहन्यत इत्याभाणकं[2] न जात्वलीकं भवति ।

१०१—त्वदुक्तोर्थः सत्यमेव भाति, नाऽसत्यम् ।

१०२—स्त्रीणां वेदेधिकारोस्ति न वेति विवादास्पदो विषयः ।

१०३—सज्जं तवेदं कुङ्कुमकर्दमम्, यथेष्टमुपयुङ्क्ष्व ।

१०४—मृत्युर्वै प्राणिनां ध्रुवा ।

१०५—अवनतेश्चरमं सीमानं विलोक्य परं दुःख्यन्ति[3] सहृदयाः ।

१०६—जैनसाधूनामुपाश्रयाणीमानि निःशब्दलेशानि ।

१०७—मल्लिकायाः कण्ठस्वरमतिमधुरमिति प्रसिद्धिः ।

१०८—दानशौण्डेन देव शर्मणाऽत्र ग्रामे औषधालयमप्येकं समुद्घाटितम् ।

१०९—न हि कश्चिद् व्यक्तिरत्र दुष्यति, समष्टिरेव तु दोषभाक् ।

११०—अयं सुपन्थाः, अयं च विपथः, येनेष्टं तेन गम्यताम् ।

१११—शेषं स्पष्टम् ।

११२—मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् । ( कुमारे )

११३—दरिद्रस्य मृतिरेव वरा न तु बन्धुमध्ये जीवितम् ।

११४—गरुडो ध्वजायां यस्य सोऽयं गरुडध्वजो विष्णुः ।

११५—किमित्यनर्थसार्थं मौनं सुखं सेव्यते ?

११६—यं यमक्षरं तैलङ्गपण्डितोऽशोचत्स स सत्योऽभवत् ।

---

१ प्रश्ने नियुक्ताः, परीक्षका इत्यर्थः । २ लोकोक्तिः । ३ दुःखमनुभवन्ति । कण्ड्वादिः ।

११७—खगव्याल्यादिनोर्वयः । ( अमरे )

११८—यः सतामालवालः[1] शुष्यद्गीर्वाणवाणीसुमन[2]स्तृप्तये मेघमालो ऽभूत् क्वाऽसौ सम्प्रति पुण्यायतनं पण्डितो मदनमोहनो मालवीयः।

११९—परिमितसंख्यैः संख्यातीतानामाक्रमणमात्मघातमेवेति स्थितम्।

१२०—इयमुक्ति र्न मे चाटुरु चिन्तनीयः।

१२१—कामं सर्वस्वं नो नश्येन्न तु मानम्। मानेन हीनास्तु न जीवामः।

१२२—तरुराजिवलयिताः सानवः सस्यश्यामलकेदारालङ्कृताश्चोप-कण्ठाः[3] पर्वतानां हृदयानि हरन्ति यात्रिकाणाम्।

१२३—अद्य मे दर्पणं कराद्विगलितमत्रुटीत्[4]। त्वं मे दातुमर्हसि क्षणम्।

१२४—विशालोऽस्य ललाटो व्यूढं चोरः प्रलम्बौ च बाहू इति भाग्य-वानयं भाति।

१२५—मन्ये दूरमुत्सारिता दोषनिकुरम्बाः[5]। इदानीं सर्वमवदातम्।

१२६—इदं कथककोलाहलं कर्णयोर्ज्वरमिव नः समुत्पादयति।

१२७—नूनं पातित्याङ्कुराणि प्ररोहोन्मुखानि द्विजेषु।

१२८—सा देवी मम च प्राणा रावणेनोभयं हृतम्। ( रा० ३।६७।१५ )

१२९—अनृतं वदन्नपि यदयमृतं वदामीत्याभासयति स परः सीमा चातुर्यस्य।

१३०—इदं कौक्षेयकं[6] गृह्यतां निकृत्यन्तां च शिरांसि द्विषाम्।

१३१—सर्पणाणि त्वया पीतिम्ना दिङ्मुखानि पिञ्जरयन्ति।

१३२—वसूनि सुख हेतूनि भुञ्जते सर्वमानवाः।

१३३—यथा घुणो नाम कीटः क्वचिद् दारौ दैवादक्षराणि विलिखति, एवं निष्कर्मणोपि क्वचित्सम्बन्धोयोगो दृश्यते।

---

१ आवापः, जलाधारः। २ सुमनाः पुष्पम्। इदमेकत्वेपि प्रयुज्यते।
३ प्रत्यन्तभूमयः। ४ त्रुटेस्त्वौदादिकाल्लुङ्। कुटादित्वाद्गुणाभावः।
५ समूहाः। ६ खड्गः।

१३४—परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । कुणपं[1] कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥

१३५—युद्धभेर्या इवैषा ध्वनिर्मूर्च्छति[2] श्रवणयोः ।

१३६—प्रभातकल्पा सम्प्रति शर्वरी । नैकोऽपि तारको दृश्यते गगने ।

१३७—किं[3] जानास्यायुर्वेदं यन्मेदो मज्जयोर्विशेषं न वेत्थ ।

१३८—अत्युदारामुपाधिं दधतो महाजना जनवत् प्रवर्तन्ते बत[4] ।

१३९—अहो मनोज्ञमिद सुमनोगुच्छकम् ।

१४०—तानि धर्माणि प्रथमान्यासन् ।

---

## अथ व्यवहारतो विवेच्यानि पदवाक्यनि ।

१—काऽपि न काप्यर्थवती वाऽनर्थिका वा चेष्टाऽवश्यं क्रियते प्राणिभिः । एष निसर्गः[5] ।

२—मनुष्यो हि ब्रह्मणा सर्वमर्थंजातं तद्धितायैव सृष्टमिति मनुते । इयमस्याहोपुरुषिका ।

३—कोऽपि कियानेव दुष्टः स्याद् भगवन्तं त्रातारमुपस्थितश्चेत् तरति संसारार्णवम् ।

४—सावित्र्या तुल्यगुणाऽऽदर्शपत्नी भवतीति प्रायो वादः ।

५—कुल्लूतस्य कम्बला गुणाढ्याश्चिरतरमुपयोज्या भवन्ति ।

६—ह्यः सायं महती वर्षाऽभवत्, आप्लाव्यं[6] च किमप्यभवन्नद्याः ।

७—तस्मा अहमेकादशां त्रिंशतं रूप्यकानदाम् ।

८—षड् वर्षाणि पूर्वमहं भवन्तं काश्मीरेष्वपश्यम् ।

९—मध्यदिनार्कसन्तप्तः स प्रच्छाय शीतलं तरुतलमाश्रितः ।

१०—देवश्चेद् वृष्टः, सम्पत्स्यन्ते शालयः ।

---

१ शवः । २ वर्धते । ३ अल्पं जानासि । ४ बतेति खेदे । ५ स्वभावः ।

६ आप्लाव एवाप्लाव्यम् ।

(१४१) इयं नौरियं चार्धनावी ~~[illegible]~~ यां नौ...

(१४२) न च नरकाण्येव न सन्ति। (उदयनः

(१४३) स्नातेनैव च कालिम्ना दर्पणं मलिन
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति
लासे विश्वरूपाचार्यः)॥

(१४४) सा तिथिस्तदहोरात्रं स योगः स
लग्नं तदेव विख्यातं यत्र संन्य

(१४५) अट्टशूला जनपदाः शिवशूलाश्चतु
भा० वन० १८८।४२)।

(१४६) गजै र्गजा इवैरश्वाः पादाताश्च पद
रथै रथा विविधाश्च योधा युयुधि

(१४७) चिरं कथयन्तिमन्यं स्वपार्श्वमिव द

(१४८) आश्रमाणि च चत्वारि धर्मद्वाराणि
१४)।

(१४९) गुडकण्ठेयं द्राक्षा ऽतितर्पयति सज्ज

(१५०) विषामृतधाराकरी जिह्वा।

(१५१) चक्षुर्हि शरीरिणां नेता।

(१५२) अप्रकार्यप्रवृत्ते: शास्त्राङ्कुशं

(१५३) अनिष्टकर्मफलहेतूनि हि प्रायश्चि

(१५४) जाताः स्थलानि सरितः सरितो म
रो चांसि संकुचन्त्यपि रघाणि
रामचरिते २५।१९)।

(१५५) कथमास्ते तमो भानौ कथमास्ते हि
४।१।२१)।

(१५६) द्विविधो भवति प्रष्टा तत्त्वज्ञोऽज्ञोऽ

१३४—परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ। कुणपं[1] कामिनी भक्ष्य-मिति तिस्रो विकल्पनाः॥

१३५—युद्धभेर्या इवैषा ध्वनिर्मूर्च्छति[2] श्रवणयोः।

१३६—प्रभातकल्पा सम्प्रति शर्वरी। नैकोऽपि तारको दृश्यते गगने।

१३७—किं[3] जानास्यायुर्वेदं यन्मेदो मज्जयोर्विशेषं न वेत्थ।

१३८—अत्युदारामुपाधिं दधतो महाजना जनवत् प्रवर्तन्ते दत[4]।

१३९—अहो मनोज्ञमिद सुमनोगुच्छकम्।

१४०—तानि धर्माणि प्रथमान्यासन्।

---

## अथ व्यवहारतो विवेच्यानि पदवाक्यनि।

१—काऽपि न काप्यर्थवती वाऽनर्थिका वा चेष्टाऽवश्यं क्रियते प्राणिभिः। एष निसर्गः[5]।

२—मनुष्यो हि ब्रह्मणा सर्वमर्थंजातं तद्धितायैव सृष्टमिति मनुते। इयमस्याहोपुरुषिका।

३—कोऽपि कियानेव दुष्टः स्याद् भगवन्तं त्रातारमुपस्थितश्चेत् तरति संसारार्णवम्।

४—सावित्र्या तुल्यगुणाऽऽदर्शपत्नी भवतीति प्रायो वादः।

५—कुल्लूतस्य कम्बला गुणाढ्याश्चिरतरमुपयोज्या भवन्ति।

६—ह्यः सायं महती वर्षाऽभवत्, आप्लाव्यं[6] च किमप्यभवन्नद्याः।

७—तस्मा अहमेकादशां त्रिंशतं रूप्यकानदाम्।

८—षड् वर्षाणि पूर्वमहं भवन्तं काश्मीरेष्वपश्यम्।

९—मध्यदिनार्कसन्तप्तः स प्रच्छाय शीतलं तरुतलमाश्रितः।

१०—देवश्चेद् वृष्टः, सम्पत्स्यन्ते शालयः।

---

१ शवः। २ वर्धते। ३ अल्पं जानासि। ४ वर्तते खेदे। ५ स्वभावः। ६ आप्लाव एवाप्लाव्यम्।

(१४१) इयं नौरियं चार्धनावी यां नौकेति व्यवहरन्ति।

(१४२) न च नरकार्णवेन न सन्ति (उदयनः)।

(१४३) स्वगतेनैव कालिम्ना दर्पणं मलिनं यथा।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः (मानसो-ल्लासे विश्वरूपाचार्यः)॥

(१४४) सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः।
लग्नं तदेव विख्यातं यत्र संस्मर्यते हरिः॥

(१४५) अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः (हरि० ३।३।१२, भा० वन० १८८।४२)।

(१४६) गजैर्गजा हयैरश्वाः पादाताश्च पदातिभिः।
रथै रथा विनिघ्नाश्च योधा युयुधिरे नृप (हरि० २।२६।५)॥

(१४७) चिरं कथयन्तिकायं स्वपार्श्वमिव दहतितराम् (चम्पूचन्द्रे)।

(१४८) आलम्भनानि च चत्वारि कर्मद्वाराणि मानद (कू० पु० ८८। १४)।

(१४९) गुडूच्येयं डाकाऽतितर्पयति स्तनान्।

(१५०) विषामृतधाराकरी जिह्वा।

(१५१) चक्षुर्हि शारीरिकं नेता।

(१५२) अकार्यप्रवृत्तेः शास्त्राङ्कुशं वारयति।

(१५३) अनिष्टकर्मशमहेतूनि हि प्रायश्चित्तानि भवन्ति।

(१५४) जाताः स्थलानि सरितः सरितो मरूणि
रोधांसि सन्ततवनानि रथ्याति वेणुः (अभिनन्दकृते रामचरिते २५।१९)।

(१५५) कथमास्ते तमो भानौ कथमास्ते हिमोऽनले (यो० वा० ४।१।२१)।

(१५६) द्विविधो भवति द्रष्टा तत्त्वज्ञोऽज्ञोऽपि च।

अज्ञस्याज्ञतया देहो ज्ञस्य तु ज्ञतयोत्तरः (यो० वा० ६ (उ०) २९।२२)।

—पञ्चत्रिंशतिः शतानि वत्सराणामतीतानि यदा गौतमवंशे सिद्धार्थो जज्ञे ।

—मन्त्रिभिरसकृत्संमन्त्र्य विग्रहीतुमनीशा वसुमतीशा निदानतः[1] सन्धिपत्त्रं लिखन्ति ।

—विवक्षितमर्थमुपनिबध्नता च्छात्त्रेण स्वशब्दानामर्थो न कार्यः ।

—सिद्धहस्तोऽयमोषधिनिर्माणेऽगदङ्कारः[2] ।

—आत्मतृप्तस्य मानवस्य बाह्यानामर्थानां कलयाऽप्यावश्यकता नास्ति ।

—निर्धनस्य निधनस्य च का विशेषतेति वेत्थ चेत्कामं निर्ब्रूहि ।

—नवोढोऽयं युवाऽतिमात्त्रमनुरज्यते वध्वाम् ।

—श्री रामस्य जीवने बह्व्यः शिक्षा मिलन्ति ।

—पूर्णिमाया एषा रजनी । अहो अभिव्यक्ता चन्द्रिका तरुच्छिद्र-प्रोता किमपि रमयति मनः ।

—सहस्रदिव्ययुगानामेकं ब्राह्मं दिनं भवति ।

—आचरित एष पन्था नूनं भव्याय भविष्यति भावुकानाम्[3] ।

—यो हि सीता रामं परिणिनायेत्याह न स परिणयशब्दार्थ-मञ्जसा वेद ।

—राजवृत्तं बुभुत्सुना प्रजापालनादिरूपकर्तव्यकलापो निखिलेन[4] वेद्यः ।

—तुच्छान्यपि तृणानि गुणत्वमापन्नानि मत्तदन्तिनोऽपि बन्धहेतु-र्भवन्ति ।

—सर्वे तेषां मनोरथास्तमसि दृष्टिरिव नश्यन्ति ।

कामलोभमदमात्सर्यादयो ह्यन्तः शत्रवो विग्रहिणाम्[5] ।

—चेत्कृष्णं नंस्यसि स्वर्गं यास्यसि ।

—जन्मजन्मान्तरकृतान्येनांसि न फलविधुराणि भवन्ति ।

— न यूनां गोचर[6] मन्तरेण सुखं नाम ।

---

१ अन्त इत्यभिप्रेत । २ वैद्यः । ३ सहृदयानामित्यर्थं विवक्षति । [४] कार्त्स्न्येन । ५ देहिनामित्यर्थे प्रयुक्तम् । ६ इन्द्रियार्थम् ।

३०—पतिपानननिर्भरा स्त्रीहामुत्र च नश्यति।

३१—पदार्थविद्यां चेद् व्यज्ञास्यो नैवं तद्यंज्ञवदवक्ष्यः।

३२—विरहदारुणवेदनाविदारितहृदयाः कामिनो न सहन्ते सर्वजनमनोभिरामामपि चन्द्रिकाम्।

३३—स एष पुरुषः कतिकृत्वः प्राणिति चापानिति चाहोरात्राभ्याम्।

३४—छात्रत्रयेभ्यो विभज्यन्तामेतानि फलानि।

३५—सर्वेषु जीवितेषु पुरुषेष्वात्मार्थे मा न भूम भूयास्मेत्याशीरवस्थिता। तामिमामभिनिवेशमाचक्षते शास्त्रकाराः।

३६—महात्मभिरपि सममनर्थकं द्विषन्ति मलीमसधियः।

३७—केचिन्मन्दा[1] स्त्वरिततरमध्ययनात्परिग्लाना गुरुकुलात् समावर्तन्ते।

३८—किं न पश्यन्ति तत्र भवन्तो भवन्तोऽक्षोदक्षमो[2]यमर्थइति।

३९—अहो नवमल्लिकासंसर्गी शोभनगन्धी प्रातस्तनः समीरो विनोदयति[3] नः परिखेदम्।

४०—सोऽवनिपो मर्यादा व्यतिक्रम्य नित्यं कोशानव्ययीत् तेनासंमतोऽभूत्प्रजानाम्।

४१—स्वसांसारिकाणि सुखानि तृणवत् त्यक्त्वा स महाभागो जनताया उपक्रियायामरमत।

४२—समयोऽद्य जलागमस्येति सर्वं स्थगित[4] मम्बुदैरम्बरम्।

४३—देवदत्तोऽवरतो द्वादश वत्सरान् विप्र वसत्।

४४—वत्स कथय किं तवायुः। अङ्ग[5] नाहं ज्यौतिषिकः।

४५—तत्प्रेमरसपूरेण पूरितो मम हृद्ह्रदः। काव्यकल्पनकुल्यानां स्यन्दते कैतवादिव॥

४६—द्वाभ्यामर्धाभ्यां[6] रूप्यकं भवति।

---

१ मूढाः। २ परीक्षानिकषं न सहते। ३ दूरी करोति। ४ छन्नम्। ५ इत्यव्ययं सम्बोधने। ६ अर्धशब्दो रूपकार्धस्य रूढिरिति पूरणाद्वाठन् (५।१।४८) इत्यत्र काशिका।

४७—सर्वस्वमाहुतिमाददिरे राष्ट्रायैवापरायणाः ।

४८—महात्मनिर्दिष्टेन मार्गेण देशस्य भूमानं[1] चिन्तयिष्यति चेन्नेतारः फलिष्यन्ति नो मनोरथाः ।

४९—स्वाराज्यं जन्मसिद्धो मेऽधिकार इति श्रीतिलकः प्रत्यज्ञानीत ।

५०—श्रीराजेन्द्रश्च राष्ट्रपतिः स्थितधीः स्थिरमनाश्चेत्यभ्युपगमो लोकस्य ।

५१—शरणं तेऽहमुपागत इति त्रायस्व मां विभो ।

५२—दीर्घनिद्रायां प्रसुप्तोऽयं देशः कदा नु जागरिता ।

५३—अहो सुन्दरी प्रवृत्तिः । सुवासिनी वधूरिव प्रियङ्करैषा ।

५४—य इमे मनागपि परकृतमपकृतं न सहन्ते तेऽहिंसाव्रतिन इति कथं युज्यते ।

५५—क्षमा विक्रमस्यालङ्कारः परमोत्तम इति भण्यते ।

५६—इदं नृशंसं कर्म यत्कदर्थनं कृशानाम् ।

५७—प्रतिशोध[2]भावनासम्पर्केणैव दुष्यत्यहिंसा ।

५८—न हि हिंसयैव जातु कश्चिज्ज्यायसो हिंसकात् सिद्धिमवाप्नोति ।

५९—नैराश्यं परमं सुखमित्यद्यापि निष्क्रियं[3] वचनं मुनीनाम् ।

६०—न द्विष्याद्भूतमात्रेण महाजनेन जनेन वा ।

६१—प्रजाया अपत्यनिर्विशेषं शासनमनुशासति शास्त्रकाराः ।

६२—परार्थे प्राणान् सिसृक्षवो[4] लोके नृतमा मताः ।

६३—परमार्थप्रियोऽसौ कस्य न प्रियः ।

६४—इतः प्राग्घोरे सन्तमसे निलीनाः कठोरेषु बन्धनेषु बद्धा आर्याश्चिरं-मर्सोदस्त्रातारं चाक्रन्दन् ।

६५—न वयं परकृतानां सुकृतैनसां प्रतिभुवः ।

६६—यथा द्विरेफोऽन्तरारामेषु भ्राम्यन्पुष्पाणां मध्ववचिनोति तथा सत्यं मार्गिता[5] जनः सम्प्रदायानां सत्यमादत्त ।

---

१ भूतिं विवक्षति । २ वैरशोधनमभिप्रैति । ३ अननुष्ठितमिति विवक्षति । ४ मुमुक्षव इत्यर्थे प्रयोगः । ५ अत्र ताच्छील्ये तृन् ।

६७—न वाचां विषयो धर्मः, क्रियात्मक एव तु स भवति।
६८—अयं पन्थाः समाजस्य व्यक्तेश्च समं हिताय भवति।
६९—उपोषणे रत ईश्वरसन्निध उपासीनः शक्तिमनल्पां लभते।
७०—ये नाम जगति दुर्विधा दुर्गता दरिद्रा निःस्वाश्च सन्ति तेषां दयेव।
७१—यो हि प्रतीक्ष्यान्प्रतीक्षते[1] स सुखमनुत्तमं लभते।
७२—अन्धं तमः प्रविष्टः पुमान्परेशं प्रकाशाय याचेत।
७३—इमाः प्रान्तभाषा राष्ट्रभाषया नेष्यन्ते स्वपदात्प्रच्यावयितुम्।
७४—ब्रह्मचर्यमुपस्थेन्द्रियनियाम[2] एव न भवति सर्वेन्द्रियविजयः स उच्यते।
७५—दम्पती परिणीतायां दशायां यदि संयमेन तिष्ठतस्तदा ब्रह्मचारिणावेव भवत इति शास्त्रम्।
७६—आतुर्यमायतिरसंयतेरिति वैद्याः।
७७—स सर्वं जीवनं दरिद्रेभ्योऽन्नमदात्।
७८—व्रातीनानां[3] दारिद्र्यपरितापः प्राचीनः श्रूयमाणः सनातनश्च दृश्यमानः।
७९—अद्यापि सामयोऽसाविति निशम्य चिन्तितं मे चेतः।
८०—इयं हृदयसंकीर्णता[4] नाम। नेयं संभाव्यते त्वयि।
८१—एकसत्तात्मके राज्ये प्रजाः स्युरुपपीडिताः।
८२—प्रीत्यां च सहयोगे च राष्ट्रस्य संश्रयो भवति।
८३—यत्र प्रजायाः प्रजया प्रजायै च शासनं भवति तद्रामराज्यमिति तद्विदः।
८४—न तत्र समाजभयं न शासितृभयमिति सुखैकवसतिस्तद्धाम भवति।
८५—सततं सह संवर्धिताः सहोषिताः सतीर्थ्याश्च वयमिति भवत्स्वस्मासु च को विशेषः?

---

१ पूजयतीत्यस्मिन्नर्थे प्रयुक्तम्। २ नियमः। ३ शरीरायासजीविनः।
४ हृदयक्षुद्रतामभिप्रेति।

८६—तदपि कदन्नं भवत्यग्राह्यं च यत्रान्यायार्जितं किमपि संगतं भवति।

८७—सार्धैकशतवर्षाणि दासत्वे भयदे स्थिताः। नतरां निर्वृतिं प्रापन्नार्या भारतभूमिजाः॥

८८—यदि पुरुषो दिवं गतायां पत्न्यामपरां वोढुमर्हः किमिति स्त्री नापरं पुरुषं वोढुमर्हेत्।

८९—पारस्परिकः कलहः कुटुम्बिनां नाशायैव भवतीति किमु वाच्यम्।

९०—सा नाम राष्ट्रवाग् भवितुमर्हति या सर्वेषां कृते समभुपयुक्ता स्यात्।

९१—मातरि संस्कृते वाचि विद्यमानायां कथं नाम हिन्द्याद्यास्तद्दुहितरस्तत्पदमभिषेक्तुमर्हेयुः।

९२—यथा प्राचि काले इह देश आचारप्राधान्यमासीत्तथेदानीमपि।

९३—यदि नाम तत्तद्ग्रन्थाध्यापनं संस्कृत एव भवेत्तदा च्छात्रा बहूपकृताः स्युः।

९४—यदि वयमन्यत्र न प्रणिदध्याम[1] विकारं च परमार्थतो न विद्याम तदा कोऽन्योऽत्रावधास्यति।

९५—गुरुणा कुशलप्रश्ने कृते सति तमित्थमुत्तरयति दिलीपः।

९६—एतच्छ्रुत्वा मुखं विकृत्य नासां संकोच्य स सहदर्पमुदतरत्।

९७—दिलीपस्य सुदक्षिणाया रघुर्नाम पुत्ररत्नमजनि।

९८—कल्याणे बत नक्षत्रे मया जातोसि पुत्रक! (श्रीरामायणे)

९९—प्रायः पञ्चसहस्री शरदां व्यतीयाय यदा कुरुपाण्डवानां भारतोपनिबद्धः संगरो बभूव।

१००—विदितमेतद् विदुषां संस्कृतरत्नाकरोऽयं सप्तत्रिंशद्वर्षेभ्य आरभ्य साहित्यजुषः प्रीणयन्वर्तते।

१०१—भवद्विधानां साहाय्ये नि[2]र्भरमादधतो[2] वयमिह कर्मणि प्रवर्तामहे।

१०२—सर्वमिदमालोच्यार्जुनो निर्णिनाय यत्स शस्त्राणि संन्यसिष्यति प्रहरत्स्वपि द्विषत्सु न प्रहरिष्यतीति।

---

१ मनो दध्याम। २—२ लम्बमाना इत्यर्थो विवक्षितः।

१०३—अस्थिमज्जामांसमेदसां संनिपात एव मनुष्यो न, ततः परम्परोऽवाह्य आत्मैव वस्तुतस्तद्व्यपदेशभाक्।

१०४—मनुष्यता नाम संसर्गे निर्भरा, यादृशैः संसृज्यते मनुष्यस्तादृशः स भवति।

१०५—यद्यत्र श्लोके किञ्चित्काठिन्यमनुभवसि, तदा विस्रब्धं ब्रूहि। भूयोपि ते निर्वक्ष्यामि;

१०६—सकृच्छ्रद्धितेऽप्रतारयत्सु भूयोपि विश्वस्यते लोकेन।

१०७—भगवन्तमादिगुरुं सर्वविद्याप्रदातारं प्रार्थयामहे यद् विश्वनाथः स्वकृपया नः सन्मार्गे प्रेरयतु।

१०८—युवयोरप्युपरि पतति मङ्गलवचनप्रभाव इति लक्ष्यते।

१०९—सर्वमिद जगद् ब्रह्मणोन्तर्निविष्टमित्यविसंवादी वादः।

११०—नेदमुश्मो व्याकरणाधीत्यामेव शश्वद्रतः स्याः, विषयान्तराण्यपि ते यथाकालं समादरणीयानि।

१११—बलाहकनत्येव करिघटया तमसाऽऽच्छादितं इव काननम्।

११२—कस्य धन्यस्यानर्घमौक्तिकमयीयं रत्नमालेति न विद्मः।

११३—अपस्किरते[2] वृषो भूमिं हृष्टः।

११४—परार्थं यततो निघ्नन् स्वार्थतोऽपि हीयते मूढः।

११५—सोऽस्मत्तश्चिरजाततरः। विंशत्या वर्षैर्हि पूर्वः।

११६—सुभगे प्रातस्तने काले सर्व एव विहारमासेवतेऽन्यत्राधन्यात्।

११७—स्वयं भीष्ममुखाद् व्यासः प्रशास्त्येवं युधिष्ठिरम्।

११८—नं जातु कृतानि पापानि कदापि कर्तुर्मूलानि न कर्त्स्यन्ति।

११९—शतानां कुरूणां पञ्चानां च पाण्डवानां च सन्धौ महान्तं यत्नमातिष्ठद् जनार्दनः।

१२०—प्रथीय[3]सीयमाख्यायिका राजस्थाने।

---

१ कृतविश्वासेष्वित्ति चिकथयिषति। २ विलिखति, उत्किरति।

३ प्रथिततरा, प्रसृततरेत्यर्थो विवक्षितः।

१२१—कर्माणि प्रविभज्यन्ते स्वभावप्रभवैर्गुणैः।

१२२—बहवोऽस्य परिजना अमिताश्च परिच्छदा इत्यराजाऽपि राजमात्रो[1]ऽसौ।

१२३—अकिञ्चनः समलोष्टाश्मकाञ्चनो यतिः प्रशस्यते।

१२४—ते च मे च साधारणोऽत्रार्थेऽभिलाषः, तथापि विरोधो न युक्तः।

१२५—ये स्वयं सत्पथेन यान्ति परांश्च सत्पथे निनीषन्ति ते धन्याः।

१२६—अद्यत्वे प्रबलो जातिभेदः। अद्यत्वे हिन्दवो न मिथो विवहन्ति न च समश्नन्ति।

१२७—अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् (मनु०)।

१२८—सूर्यवंशिन एवैके ह्यपरे सोमवंशिनः।

१२९—संभूयते यत्प्राक् तेषां कश्चित्कलिरभूत्।

१३०—ये मतमिदं मदीयं नानुमन्यते ते स्वार्थाद् हास्यन्ते।

१३१—द्वाभ्यां त्रिभिर्वाऽपत्यानां तुष्येतां दम्पती नाधिकानि कामयेयाताम्।

१३२—गुरुर्हि कुमारं यज्ञसूत्रेणोपवाय ब्रह्मणः समीपं नयतीति केचिदुपनयनार्थं वर्णयन्ति। तदसाम्प्रदायिकम्।

१३३—यदि सर्वे सम्भूय दारिद्र्यदलनाय समुद्युज्येरंस्तदाऽयं नो देशोऽचिरेण कामपि समृद्धिमियात्।

१३४—केचिदेव कुर्वते शास्त्राण्याविः, बहवस्तु संवृण्वत एवार्थं शास्त्रोक्तं विवरीतारः।

१३५—स्कन्धेन भारं वहतीति भवति न तु स्कन्धे भारं वहतीति पूज्या गुरुचरणाः।

१३६—सुग्रीवस्याज्ञां शिरोधार्यां विधाय हनुमदादयो वानराः सीतामन्वेष्टुं निर्ययुः।

१३७—शामण्यानां वाङ्मये बहूपादेयमस्तीति तत्रत्यानां केषांचिदुपाख्यानानां संस्कृतेन परिवर्तनाय तत्परोऽभूवम्।

---

१ राज्ञो मात्रा परिच्छद इति राजमात्रा। राजमात्रेव मात्राऽस्येति राजमात्रः।

१३८—पटुपटुरपि समुद्युक्तोपि काठिन्यैः कैरपि व्याहतो नेष्टेऽसौ-विद्याव्रते[1] कालेन परिसमापयितुम् ।

१३९—भवद्वचनाङ्गीकारे दोषा अपि केचन परापतन्ति ।

१४०—अप्यस्ति ते लवणस्तोकः ? अस्ति मे लवणस्य प्रयोजनम् ।

१४१—अयं शब्दो धातुद्वयाभ्यां शक्यो व्युत्पादयितुम् ।

१४२—इदानीं तद्वंशीयान् नामादेशं[2] संख्याति ग्रन्थकारः ।

१४३—समैरेयाणि[3] पञ्च काचपात्राणि, विंशतिः कुक्कुटोना, पञ्चाजी[4], मिष्टान्नं वाससी च समानीयन्ताम् ।

१४४—कः खल्वीष्टे भगवतो विधेरुपरि ?

१४५—केचिद् बहिष्ट उग्रदर्शना अन्तश्च करुणामसृणाः ।

१४६—काश्चित्कला विकला वा प्राणं बलेन प्रसह्य बहिरेव निरुन्ध्यात् ।

१४७—द्वावपीमान् यमनियमाननुतिष्ठेन्न केवलान्नियमान् ।

१४८—सौम्य ! कालोऽयं ते गृहाश्रममुपसंक्रमितुम् । तेनात्मानं परिणीय मातरि पितरि च साधु वर्तमानश्चिरं सुखं जीव ।

१४९—निघण्टुनिरुक्ते सार्थके अध्येये ।

१५०—युष्मानहं पृच्छामि, आचष्टां भवान् मदुक्ते क्व विरोधोऽस्तीति ।

१५१—गृह्यप्रोक्तानां कर्मणां यथायथ[5]मनुष्ठानं तदैव संभवति यदा यजमानोऽपि कालाक्षरिको[6] भवति ।

१५२—एवं खेलाभिर्विविधाभिर्व्यत्येति शिशूनां शैशवम् ।

१५३—यदोद्वाहकालः संनिकृष्यतेऽर्थाद् ब्रह्मचर्यस्य समाप्तौ वर्षमवशिष्यते मासषट्कं वा तदा भविष्यतोर्वधूवरयोः कुमारयोश्चरितपरीक्षां प्रक्रमेत गुरुजनः ।

१५५—सर्वे लोकाः स्वे स्वे लौकिके कर्मणि पुरुषार्थिनो भवेयुः पारलौकिके च यतेरन् ।

---

१ विद्या च व्रतं चेति । २ नामग्राहम् । नाम्न्यादिशिग्रहोरिति णमुल् । ३ समद्यानि । ४ पञ्चानामजानां समाहारः । ५ यथाविधीत्यर्थं विवक्षति । ६ साक्षरः, विद्वान् ।

१५५—संन्यस्तो हि यदृच्छालाभसन्तुष्टः स्यान्न प्रतिग्रहं कामयेत न वा संग्रहं रोचयेत ।

१५६—द्विजानां चाधीनाः शूद्रा विसृष्टा अपि दास्यान्न मुच्यन्त इति मनुः ।

१५७—न्यूनतो न्यूनं दशविद्वत्पुरुषाणां सभा धर्मादिकं व्यवस्थापयेत् ।

१५८—परेषामधीनतायां वर्तमाना वयं किं शक्ता आत्मश्रेयः सम्पादयितुम् ?

१५९—अयं पत्त्रहरोऽत्रभवतां विपश्चितां सेवायां प्रेष्यते प्रार्थ्यते च यथाशक्यमनुगृह्यतामेष इति ।

१६०—प्रभो ! तव शरणं गतोहम् । पाहि माम् । गत्यन्तरं मे नास्ति ।

१६१—यदि च्छात्राणां भोजनाच्छादनप्रबन्धः प्रकल्प्येत तदा ते वीतचिन्ता एकायनगता[1] अध्ययनं वर्तयेयुः ।

१६२—अनिर्वर्णनीयं[2] परकलत्रमित्याहुः, विषयाभिकाङ्क्षया च चक्षुषा नेक्षेत परस्त्रिय इति च ।

१६३—सर्वो लोकः स्वस्य कर्मकलापस्य फलमश्नात्यद्य वाऽब्दशतान्ते वा ।

१६४—ब्रह्मचारिणः संदिदं कारयेदाचार्यः—नाहं मधुमांसे अशिष्यामीति ।

१६५—इदं तथाल्पीयो मृष्टमन्नं यथा निषद्यास्थेभ्यः सर्वेभ्यो विभक्तं सत् सर्षपमात्रमपि न समेष्यत्येकस्य भागे ।

१६६—तथा वर्तस्व यथा ते जीवनमादर्शः स्याल्लोकस्य ।

१६७—न हि कारणं विना कार्योत्पत्तिः संभवा ।

१६८—अस्मदादयोऽधीत्यैव गुरुभ्यो विद्वांसो भवामो नानधीत्य ।

१६९—किमित्येषां पुराणवचनानामनर्थं कुरुषे ? नैतत्त्वय्युपपद्यते ।

१७०—आगतेषु दुर्दिनेषु मित्राण्यप्यमित्रायन्ते ।

१७१—ननु जगतः समुत्पत्तौ कियन्ति वर्षाणि गतानि ?

१७२—सागरस्य पुरतः पानीयपृषताः[3] कियन्तः ?

---

१ एकाग्रमनसः । २ अनिभालनीयम् । ३ पृषतो बिन्दुः । पृषन्ति-बिन्दुपृषता इत्यमरः ।

१७३—यदि नाम सूर्यः परिक्रामेत्तदाऽहोरात्रः सहस्राणां वर्षाणां जायेत ।
१७४—फलासङ्गं परिहाय प्रवृत्तो न कर्मसु लिप्यते नरः ।
१७५—यतो मोक्षादावृत्तिर्नास्ति तस्मिंश्च कारावासे च को विशेष इति चोदयति कश्चित् ।
१७६—नाहं व्याकरणमधिकरोमि, किञ्चिदेवास्य वेद ।
१७७—एवं कपूयाचरणा[1] अप्यात्मनो धर्मभ्रष्टान्न मन्यन्ते ।
१७८—एवं पुण्यपापे समाचरञ्जन्ममरणेषु गतागतं कुरुते जनः ।
१७९—अतिशोभेते खल्वस्योपानहौ चरणयोः परिहिते ।
१८०—इह भारते पञ्चसहस्रवर्षेभ्यः प्राक् किमपि मतं नासीदन्यत्र वैदिकात् ।
१८१—कदापि कदापि स्वप्नेऽभूतपूर्वानर्थान् सम्पश्यति जनः ।
१८२—भवतोऽधिकपण्डितैः श्री शङ्करप्रभृतिभिर्जगन्मिथ्येति प्रतिपद्यते, तद्भवांस्तत्र किं विप्रतिपद्यते ?
१८३—या विक्षेपावरणशक्तिद्वययुता माया सा किं न मन्यते युष्माभिः ?
१८४—सामान्या हि शैवाः शाक्तैः । उभावपि भस्म रुद्राक्षांश्च धारयतः ।
१८५—नाधर्मे मनः कुर्यान्मृत्युरपि कथं नोपासीदेत् ।
१८६—भोजराजात् पञ्चाशदुत्तरैकशतसंवत्सरानन्तरं वैष्णवं मतं प्रावर्ततेति सत्यार्थप्रकाशकारः । तद्विचारासहम् ।
१८७—वासु[2] ! अन्यत्रास्तु ते भावबन्धः, नाहं परिवृढस्त्वामुद्वोढुम् ।
१८८—धृष्टोऽसौ प्रैष्यः, ममादेश मस्तके न निदधाति ।
१८९—विवेकं विना वैराग्यं वैराग्यमन्तरेण विज्ञानं विज्ञानादृते च शान्तिः सुदुर्लभा ।
१९०—दानं दीयतां पुण्यं च क्रियतामिति शास्त्राणि प्रचोदयन्ति ।
१९१—अस्या वार्ताया मिथ्याभवने कः सन्देहः ।

---

१ कुत्सितचरिताः । २ कन्ये !

१९२—अपि कीदृशमपि गुरुचरणाः पापमाचरेयुस्तथाऽपि नावमन्तव्या इति वल्लभमतानुगाः।

१९३—एताः कथाः कल्पनया कल्पिताः, क एनाः प्रतीयान्[1]।

१९४—आकस्मिकं मातृनिधनं श्रुतवतस्तस्य शोकस्य पारावारो नासीत्।

१९५—तत्र पत्रे प्रथमे दश श्लोका विनष्टाः, तेनैकादशेनेहोद्धरामः।

१९६—कस्मिंश्चिदेकस्मिन्नगरे परं मैत्रकं गतौ द्वौ वाणिजौ निवसतः।

१९७—जिज्ञासाभराक्रान्तः स कियतामेव विपश्चितां सकाशमयासीत्।

१९८—केनाकारिता यूयमिहागता इत्यनुयुक्तास्ते तूष्णीकाः संवृत्ताः।

१९९—एकशतमध्वर्युशाखा न तु शतम्। यो हि शतमित्यर्थे एकशतमिति प्रयुङ्क्ते स न वेद समासार्थम्।

२००—भक्ता भक्तिग्रह्वाः सन्तो गोस्वामिनश्चरणं स्पृशन्ति।

२०१—परं कुत आगच्छेदियती बुद्धिरेषां सकाशम्।

२०२—संनिहिते मृगाधिपे मृगव्य[2] कुशलास्ते भयभीता दिशो भेजुः।

२०३—यदोत्कृष्टवर्णा कुमारी निकृष्टवर्णेन पाणिग्रहणं करोति स प्रतिलोमविवाहो भवति, गर्ह्यते च शास्त्रकारैः।

२०४—कामं कियत्यपि महत्यधिकारपदे नियुक्तः स्यात्, अवश्यं मानाद् हीयते यदि कौसृतिको भवति।

२०५—जनानां मण्डलीनां मण्डली तमुपतिष्ठति प्रष्टव्यं च पृच्छति।

२०६—मुक्तात्मानो ज्ञानवन्तो भवन्ति न वा, भवन्तीति चेदङ्गीकुरुषे तेषांक्रियावत्वं स्वयमेवाभ्युपगतं भवति, नाङ्गीकुरुषे चेत् तेषां जडाभिन्नत्वमापतति।

२०७—अहो परिजनस्य कियान्महान् प्रमादः, देवीं देवताद्वितीयां[3] विजने परित्यजति।

२०८—शाम्यतु तावत्सोयमनर्थकः प्रलापः।

---

१ श्रद्दध्यात्। २ मृगया। ३ एकाकिनीम्। देवता परमेश्वर एव द्वितीया यस्यास्ताम्। आत्मना द्वितीयाम्, छायाद्वितीयामिति चापरं प्रकारद्वयम्।

२०९—महादुष्करो मोक्षः, स्मृतिश्चैतमर्थमभिवदति—अनेकजन्मसंसिद्धस्ततो याति परां गतिम् इति ।

२१०—तस्मान्मुखपिधातृभ्य आर्हतेभ्यस्तथाऽक्रुर्वाणाः श्रेयांसः ।

२११—वाताहता दीपर्चिर्निर्वाणमेष्यति, तेन दा[1]यन्तां द्वाराणि[1] ।

२१२—दूरादावसथात्पादावसेचन[2]मिति लघुशङ्कार्थं दूरं गच्छेदित्यर्थादापद्यते ।

२१३—यच्चर्म हस्तयोः संवस्त्रयन्ति[3] मृगयवः स हस्तावापोऽभिधीयते ।

२१४—सुमन्त्रेण ग्राहितसन्देशो रामः स्वपितुर्भवनं जगाम ।

२१५—एकदैवं संयोगः समजनि यच्चिरस्य मार्गितश्चिरन्तनो मे सखा मया समापत्त्या[4] पथि दृष्टः ।

२१६—अयि पाठकाः ! तांस्तान् विषयान्निशदयन्ती चिरं चकासतीयं पत्त्रिका भवद्भ्यो रोचते न वेति व्यक्तमुद्यताम्[5] ।

२१७—इदं नाम भवद्दृष्ट्यावपेक्ष्यं स्यान्मम तु सर्वथापेद्यम् ।

२१८—कृश्चीना यीशुं प्रभुं पाप्मनां क्षन्तारं पावकं[6] च मन्यन्ते ।

२१९—यजमानायाशीर्वादं कृत्वा प्रातिष्ठन्त यथास्वं गृहाणि याज्ञिकाः ।

२२०—ह्यः पाठशाले किमिति नोपातिष्ठथा इति पृष्टोऽसौ मौनमभवत् ।

२२१—इदं ते वचनं स्वापोत्स्वप्नोपमम् । व्याहृतवान् ।

२२२—तत्र महति जन्येऽश्वारोहाणां संख्या त्रिंशतिकोटिरासीत् ।

२२३—युष्माभिस्तेषामेकतमस्मिन्वञ्चकेनेव व्यवहृतम् ।

२२४—घृण्यमिदं कर्म त्वया कथमकारीति न बुद्धिमुपारोहति ।

२२५—परमात्मनः शपथेनाचक्षे न जात्वू इदमकरवम् ।

२२६—आगतस्य गुरोश्चरणौ धृत्वा भक्त्या मौलिमवनमयति शिष्यः ।

२२७—शासनमतिक्रामतोपि तस्य न किमपि कर्तुं शशाक ।

२२८—यः कर्मफलासङ्गं परित्यज्य प्रवर्तते विमुच्यते सौ सुकृतदुरिताभ्याम् ।

---

१—१ पिधीयन्ताम् इत्यर्थः । २ पादप्रक्षालनम् । ३ आच्छादयन्ति ।
४ सङ्गमनेन । ५ उच्यताम् । ६ पावयितारमित्यर्थो विवक्षितः ।

२२९—लोकस्य विदितोऽसौ पारिपन्थिकः पञ्चदश संवत्सरान्यावत् कारायां संयतोऽभूत् ।

२३०—विधानमर्मज्ञोऽयं न्यायाधीशो नैकत्र पक्षपाती । तेन सर्वो लोक एनं महयति[1] ।

२३१—ऋषयो दीर्घसन्ध्यत्वात्सहस्रवर्षाणामायुर्लेभिरे किल ।

२३२—यत्सत्यं हिन्दुभ्योपि महत्तराः प्रतिमाचका मौहम्मदाः ।

२३३—ते हि द्वेषप्रयुक्ता अचौरमपि तं चौर इत्यभियुयुजिरे[2] ।

२३४—या भाषा सर्वेषामुत्तममध्यमानामधिकारिणां कृत उपयुक्ता स्यात् सा परिग्राह्या ।

२३५—कस्येह सततं सुखमिति पृष्टः शास्त्रविच्छिष्यः साटोपमदतरत् ।

२३६—अयं साम्प्रतं गम्भीरनिद्रायां सुखं शेत इति मैनं बूबुधः ।

२३७—पाकिस्तानस्था दिवा वा रात्रौ वा भारतस्य विरुद्धं विषमुद्वमन्ति ।

२३८—गङ्गाधरेणाहल्याया आवेदितं यत्तया राज्यहिताय कश्चिद्बालो दत्तक इति स्वीकार्यः ।

२३९—संस्कृतस्यानिवार्यता-सम्पादनोपलक्ष्ये शिक्षामन्त्रिणो विद्वत्समाजेन सभाजनीयाः ।

२४०—संस्कृतपण्डितान्विहाय नान्येऽस्योपरि विचारयन्तीति खेदः ।

२४१—स्थाने तथाकथितायामस्यां सभ्यतायां सत्यामेवं कृष्णकर्माणो मनुष्याः ।

२४२—परीक्षामुत्तीर्णानां छात्राणां प्रत्येकं पुरस्कारेण संभावयिष्यते ।

२४३—विसंस्थुले[3] मन्त्रिमण्डले भवति नाम प्रजासु द्रोहस्योद्ग्रीविकावसरः ।

२४४—चक्रवत्परिवर्तन्ते दुःखानि च सुखानि चेति सुखस्य ध्रुवो नास्ति ।

२४५—किमित्यनधीतव्याकरण इवान्यथोच्चरसि शब्दान् ।

२४६—पितृपादेषु स्वर्यातेषु देवदत्तो गार्हस्थ्यधुरां वोढुं बाध्योऽभवत् ।

---

१ पूजयति । २ चौरत्वं तत्रारोपयामासुरित्यर्थः । ३ अस्थिरे ।

२४७—विद्यालये किं पृच्छयते, तत्र उर्दूभाषायाः प्राधान्यं नापूर्वं किञ्चिदस्ति।

२४८—अत्रत्यो जनोऽपरिणीतां स्वसन्ततेः शैशवापक्रान्तिं द्रष्टुमपि नालम्।

२४९—सिन्धुसन्निधे बिन्दुमात्राणि संस्कृतज्ञानां राजसेवास्थानानीति ह्रसति प्रतिवत्सरं संस्कृतच्छात्राणां संख्या।

२५०—अहो अभिरूपोऽयं सुमनगुच्छकः।

२५१(क)—यावत्पर्यन्तं नायमात्मानं वेद तावत्पर्यन्तं नाऽस्यार्थः शास्त्रज्ञानेन।

२५१(ख)—[1]दरनिमीलितनयनमुकुलाभ्यामीक्षते मूषकं विडालः।

२५२—पुनर्दुर्दुरूढास्ते यत्नशतेनापि न शक्येरन्ननुनेतुम्।

२५३—शुक्लं कर्म नियमेनोदर्ककल्याणाय कल्पते।

२५४—सुकृतिना सावकेन[2] स्रवदश्रुसम्पाताः किं समुत्सार्यन्ते शिशवः।

२५५—विनयिनि गुणाः, गुणाच्छ्रीः, श्रीमत्याज्ञा, ततो राज्यम्।

२५६—विद्यागृहीते लगनोत्साहादयः साधनानि।

२५७—नायमर्थो जनसाधारणस्य गोचरः। विशेषज्ञा अप्यत्र मुह्यन्ति।

२५८—धन्याः खलु शिष्यशिक्षासक्षणा विचक्षणा गुरवः।

२५९—संस्कृत-संख्यावन्तो हि प्रकृत्यैव स्निग्धया दयितयेवाऽकिञ्चनतया सोत्कण्ठं कण्ठे गृहीता भवन्ति।

२६०—अध्ययनमधीयानानां युञ्जानानां च न बह्वन्तरमस्ति। उभये हि कार्यतात्पर्येण दुष्करं कुर्वन्ति।

२६१—अस्मिन्वस्तुनि गुणा एते, एते च दोषा एतस्मिन्निति विमृश्य हेयोपादेये अवधारयेत्।

२६२—इदानीमाविष्काराणां समाप्तिप्रायमभूदिति स्पष्टो ह्रासिमा विज्ञानस्य।

२६३—यया शिक्षाभासया शिक्षितम्मन्यो जनो दिनस्य द्विर्भोक्तुमपि न लभते सा नार्हति समादरम्।

---

१ दरमीचक। २ जनकेन।

२६४—यत्सत्यं गुरुकृपाकटाक्षप्रसादभूतं तस्य परीक्षोत्तरणम्, अन्यथा न तेन तत्र प्रभूयेत।

२६५—एवं वृद्धिमुपेयुषि कर्मकर[1] विरोधे यत्किञ्चिद् वेतने वैशिष्ट्यं कर्तुमापत्स्येन।

२६६—एवं विषयेष्वनेकेष्वभिविनीयमाना नैकत्रापि पूर्णरूपेण साकल्यमुपसीदन्ति।

२६७—यस्माद् हिन्दवो दुराचारान्निष्क्रियान् भिक्षाकान्[2] महीयन्ते[3] तस्मादहरहर्हीयन्ते।

२६८—विदुषां द्वाराऽस्य निर्णयः कार्यः, ते हि प्रमाणमेवञ्जातीयकेष्वर्थेषु।

२६९—विद्वांसो हि त्रिविधाभिर्विधाभिः सम्मानमर्हन्ति।

२७०—तत्र प्रदेशे सर्वत्र क्षारं जलं सुलभमभूत्, नैकोपि बिन्दुरासीद्यो लवणसान्न स्यात्।

२७१—नेदं तिरोहितं जनस्य मन्दाक्षस्यापि।

२७२—मनुष्यो हि तेषु तेष्वर्थेषु लुब्धस्तृषितो मृगो मरीचिमिव पश्यन्सहसा प्रधावति।

२७३—न हि कश्चित्सहजं स्वभावमतिक्रमितुमलम्।

२७४—संस्कृतं नाम जननी, हिन्दी च तदात्मजेति कथं सत्यां जनन्यां तदात्मजा राष्ट्रसिंहासनमधिकरोतु[4]।

२७५—पठिताया अङ्गनाया विषये न बहु वक्तव्यमस्ति। सा हि किमपि गृहकृत्यं न रोचयते।

२७६—पुरुषार्थचतुष्टयस्य यथायथं सम्पत्तिरजनीति कृतार्थं नो जीवितम्।

२७७—अपेक्ष्यते नाम विपश्चितामपि सद्भावः, येन क्रियात्मकं किमपि कार्यं सम्पद्येत।

२७८—इहदेशजानामायुः प्रायेण विंशतिवर्षत्रिंशद्वर्षपरिमितं भवति।

---

१ भृतिभुजः। २ भिक्षाशीकान्। षाकन् प्रत्ययः। ३ पूजयन्तीत्यर्थं विवक्षति। ४ अधितिष्ठत्वित्यभिप्रेति।

२७९—अत्र पाठशाले[1] रूपकाणां विंशतिर्दक्षिणा प्रतिमासं मिलति प्रत्येके छात्राय व्ययाय ।

२८०—चारित्रवताऽऽदर्शज्ञानिना गुरुणा भाव्यम् ।

२८१—इदं चाध्यापकैरध्यायिभिश्च समं स्मरणीयमुभयालङ्कारो बोधोपजन[2] इति ।

२८२—तस्य जनसेवाकार्यकलापैः सह विद्यायामपि सविशेषाऽभिरुचिरभूत् ।

२८३—अत्रत्यं सर्वं चिकित्सादिकार्यमेकस्य महावैद्यस्य संरक्षणे भवति ।

२८४—पुत्त्रा हि पितरौ जीवद्दशायां प्रीणयेयुः, उपरतयोस्तयोर्भक्त्या श्रद्धया वा न कश्चिदर्थः ।

२८५—हंसकारण्डवादिपदाभिधेयाः के नाम पक्षिण इति केचिद् भाग्यवन्त एव परिचिताः स्युः ।

२८६—नेदानीं सन्त्युपयुक्ता ग्रन्था इति न सारवद्वचः ।

२८७—बद्धनामप्यपराद्धानां सर्वा आवश्यकताः पूरणीया भवन्ति राजभिः ।

२८८—कौटलीयार्थशास्त्रप्रभृतीन् ग्रन्थान् विलोक्य परं विस्मयन्ते युरोपीया राजनैतिकाः ।

२८९—सकृल्लुप्तप्रचारा भाषा कोषव्याकरणबलेन भूयः प्रवर्तयितुमशक्यम् ।

२९०—आसीदयोध्यायां शतक्रतोरवमानं नेच्छुर्दिलीपसूनू राघववंशप्रवर्तको राजा रघुर्नाम ।

२९१—यत्सत्यं महाराजो दिलीपो नृपाणां ककुदिति व्यपदेशमर्हति ।

२९२—तत्राभिज्ञये प्राध्यापकाः सूत्रधारस्य पात्रं वहन्ति ।

२९३—प्रायेण पुत्त्रा पितरावतिवर्तन्ते, स्वच्छन्दश्चैवानुवर्तन्ते ।

२९४—गोपशिशुभिः सह संगतः खेलति नन्दकिशोरः ।

२९५—पूर्वाः कश्चिकृत्तीराधार्य[3] किमपि प्रणेतुं प्रयतिष्ये ।

---

१ अत्र वैकल्पिकी तत्पुरुषस्य नपुंसकता । २ ज्ञानवृद्धिः । ३ आधारीकृत्येति विवक्षति ।

२९६—धर्म्मः प्रभवत्यर्थकामयोरुपरीति शास्त्रम् ।
२९७—मातरि शूरो देवदत्तो नूनमपारीणः[1] प्रधनभुवि शत्रुभिर्योद्धुम् ।
२९८—दयालो ! रक्ष रक्ष कृच्छ्रिणो नः । नित्यं हि त्वशरणान् रक्षसि ।
२९९—ऐषमः श्रीजवाहरलालः काङ्ग्रेससदसो मनोनीतः[2] सभापतिः, प्राप्ताधिकारोऽसौ कां नीतिमनुसरिष्यतीति विविदिषति लोकः ।
३००—ये चक्षुष्मन्तोऽप्यचक्षुष इव पथो भ्रंशिष्यन्ते ते संकटेषु घटिष्यन्ते[3] ।
३०१—एवमाचरतो मे लोमाऽपि न वक्रीभूतम् ।
३०२—यदा प्रभृति वैदेशिकराजसत्तयाऽस्मिन्देशेऽधिकृतं तदा प्रभृत्येव विजृम्भितं दारिद्र्येण ।
३०३—सत्यायुःशेषे यदि नरं सर्पोऽपि दशति चेन्न तस्य प्राणा उत्क्रामन्ति ।
३०४—इदमत्र नो हार्दम्[4] । न प्रयत्नाद्विरन्तव्यम्, अनिर्वेदः श्रियो मूलमिति च स्मर्तव्यमिति ।
३०५—एतेनास्माकं पुस्तकानां पूज्यतासमयस्य ध्यानमायाति ।
३०६—शतक्रोशमितविप्रकृष्टेभ्यः प्रदेशेभ्यो वेदपारगं तं विपश्चितमुपासीदन् विद्यार्थिनः ।
३०७—स एकाकी कार्यमिदं सम्भालयितुं[5] नाशकन् ।
३०८—भुव्याकृष्टिशक्तेरुपज्ञायाः श्रेयः[6] श्री न्यूटनस्येति नार्य्याः सहन्ते ।
३०९—दशवर्षावस्थायामेव श्री शङ्करः शास्त्रौघमवेदीत् ।
३१०—तेन महाजनेन धनराशिरपि पुष्कलोऽर्जितः, यत्परिणामस्वरूपोऽयं विद्यालयः ।
३११—शास्त्रेषु परं प्रावीण्यं गतः स आचार्यचरणाद् विद्यावाचस्पतिरिति पदं लेभे ।
३१२—ज्योतिष्मत्याः पत्रिकायाः स्वातन्त्र्याङ्कस्थगने[7] शासितॄणां कोऽभिप्राय इति न सुज्ञानम् ।

---

१ अशक्त इत्यर्थेऽत्र प्रयुक्तम् । २ नाम्ना निर्दिष्टोऽनधिष्ठितकार्यासन इति विवक्षति । ३ निपतिष्यन्तीत्यभिप्रेतम् । ४ अभिप्राय इत्यभिप्रैति । ५ वोढुमिति विवक्षति । ६ प्रशस्तिरित्यर्थे प्रयुक्तम् । ७ निरोधेऽर्थे प्रयुक्तम् ।

३१३—इतः पेरेसनामकं नगरं गतः स श्रेष्ठी रत्नानां व्यापारमकरोत् किल ।

३१४—आनुषङ्गिकं[1] पथि स्खलितः स भग्नपादोऽजनि ।

३१५—क्व पातिव्रती[2] ते क्व च लीलाऽपरासाम् ।

३१६—अधिमरणविष्टरं शयानः पिताः पुत्रानेवमनुशशास ।

३१७—अयमहं महतः कालस्य कृते मौनमालम्बे ।

३१८—यावान् सिद्धान्तस्य सम्बन्धः स वादिप्रतिवादिभ्यां स्वयं विनिश्चेयः नास्माकं पक्षपरिग्रहो युक्तः ।

३१९—पदव्यो[3] वृण्वन्ति[4] प्रथितयशसं त्वामुपनताः ।

३२०—गभीरार्थप्लुतेयं भाष्यटीका, क एनां कुर्यादन्यत्र हरेः ।

३२१—इदानीमिङ्गालहीरकयोर्मूलत ऐक्यं विज्ञाय मानवो हर्षगद्गदो[5] भवति ।

३२२—सोऽधिकारिपदमधिकृत्य स्वानवाधीरयद् गौरवं च स्वस्यालघयत् ।

३२३—रघुः किल सर्वस्वदक्षिणं विश्वजितं यज्ञं चकार ।

३२४—पश्यतामेव नो गोब्राह्मणस्य रक्षकास्तद्घातका अभूवन् ।

३२५—सर्वा च शिक्षाप्रणाली परीक्षासु[6] निर्भरतामापद्यते[6] ।

३२६—प्रतिपक्षिणो दुरुत्तरेऽप्यभ्युपगमवादेन तदङ्गीकृत्य प्रकारान्तरेण व्यवस्थापने दुर्जनतोषन्यायः प्रवर्तते ।

३२७—लोकाः खलु लोभस्य संमुखे धर्मस्य बलिं ददति प्रायेण ।

३२८—गतो वनं श्वो भवितेति रामः शोकेन देहे जनताऽतिमात्रम् । ( भट्टौ )

३२९—अहो बतानर्थ सङ्घोऽस्मानुपनतः, कथमतो निर्मोक्षः स्यात् ।

३३०—क्रूरं तस्य समाचारमाकर्णितवतो मे चक्षुषः शोणितमवतरति ।

---

१ यदृच्छयेत्यर्थं विवक्षति । २ पातिव्रत्यम् । ३ उपाधयः । ४ वरयन्ति । ५ हर्षपरवश इत्यर्थं इत्यभिमन्यते । ६—६ परीक्षैकसमाश्रया भवतीति विवक्षति ।

३३१—धूमबहुलास्तमस्विन्यो घटा गगनं स्थगयन्ति ।

३३२—स समयः कथं कथमपि निष्क्रान्तः, वयं च प्रासराम ।

३३३—जीविकासमस्या दैनन्दिनं[1] जटिलायमानेव दृश्यते ।

३३४—पारक्या[2] इमां नो वल्लभां धरां स्ववशे कृत्वा चिरं रेभिरे ।

३३५—सेयं हृदयसंकीर्णता[3] नाम निरनुक्रोशा पिशाची । इयं निसूदनीया ।

३३६—अयं चालसानां स्वभावो यत्त उपस्थितस्यावसरस्य लाभं न गृह्णन्ति ।

३३७—कृपापीयूषलेशार्थं पदाब्जे ते निलीनोऽहम् ।

३३८—सूक्ष्मोऽयमर्थः सर्वस्य प्रेक्षणं नेयात् ।

३३९—नात्र भोजनादिविषये कापि सुविधा समस्ति । तेन नचिरात् स्थानमिदं त्यक्ष्यामः ।

३४०—कथनस्येदं तात्पर्यं सर्वस्यार्थिनः समर्थस्याध्ययनेऽधिकारो न त्वध्यापने ।

३४१—आङ्ग्लाः खलु महाकवेः शेक्सपीयरस्य कृते समस्तं साम्राज्यमपि वारयितुं[4] पारयन्ते ।

३४२—सुखसंवादमिमं श्रुत्वा सर्वे ते प्राहृष्यन् धन्यं चात्मानमकलयन् ।

३४३—शिशिरर्तुस्तत्रापि रात्रेः समयः ।

३४४—व्याधस्तदानीं किञ्चिदग्रेऽवर्धत[5] गुल्मकतिरस्कृतं चापश्यत् कण्ठीरवम् ।

३४५—साहित्यं खल्वस्माकमव्यक्तभावान्व्यक्तीकृत्य प्रभावयत्यस्मान् ।

३४६—चरणचपेटाभिस्तस्य चपलतां चूर्णयामास ।

३४७—वत्स ! मा भैर्षीरिति मुहुर्मुहुरुच्चैरुच्चचार तातः ।

३४८—नित्यं तिग्मानि तपांसि तपन्नयं यतिरिदानीं त्वगस्थिभूतः ।

---

१ अनुदिनमित्यर्थं विवक्षति । २ परे इत्यर्थं इत्यभिमन्यते । ३ हृदयसंकोच इत्यर्थे प्रयोगः । ४ उपदेस्यर्पयितुमित्यर्थमर्पिपयिषति । ५ प्रासरत् इत्यर्थं विवक्षति ।

३४९—यत्सत्यमियं भारतसंहिता वेदैः समितो[1] ज्ञाननिधिरस्ति।
३५०—ईश्वराणां रोगितायामत्यशनमेव परं निदानम्[2]।
३५१—कदाचिद्वर्षास्वपि[3] न वर्षति वारिवाहः, सोऽवग्रहो भवति।
३५२—एवं प्रसरत्यपि परितः प्रत्यूहपरिसरे[4] स धीरो निश्चयं नाहारयत्।
३५३—इयं विंशतिशती क्रियमाणैर्महाहवसंभारैः सन्त्रासयति लोकम्।
३५४—यवनानीदेवनागर्यन्यतरलिपिभ्यां व्यवहारोऽस्त्विति कामचारमिच्छन्ति केचित्।
३५५—अनुकूलमवसरं लब्धुं वासरान् कांश्चिदक्षिपत्सः।
३५६—दुर्गतानां विरलभोज्यानां गेहकेषु क्षीरैकपायिनः शिशवो मोघमेव याचन्ते दुग्धम्।
३५७—न कुर्यात्परमेश्वरो यत्कस्यचिद्भाग्ये परीक्षा संपतेत्।
३५८—वयमन्येषां परीक्षां परिगृह्णीमः स्वं तु न परीक्षामहे।
३५९—परमेश्वरो नः प्रत्येककार्याणि परीक्षते।
३६०—अपि युक्तं नाम कालिदासतोऽश्वघोषस्य पराचीनत्वं कल्पयितुम्?
३६१—पादुके परिधेहि, गन्तुं च सज्जो भव।
३६२—कष्टं च कार्यं किशोरं च वयः। किं मे वत्सः करोतु।
३६३—सोऽयं द्रव्यलालसोऽपि परकाष्ठाया आसीत्।
३६४—कालिदासस्य सूक्तिष्वेकद्वे एवात्र संगृह्येते निदर्शनाय।
३६५—एतत्प्रसङ्गेन मथुरागतानां च नो यमुनास्नानं द्वारकाधीशदर्शनं च सहजं जातम्।
३६६—एतेनाप्लावेन बहवो ग्रामा ग्रामटिकाश्चावहन्।
३६७—तदाऽहं द्विविधायां पतिता न चेन्नाभिकुलं यामि रुग्णा ममाम्बा मामभिशपेत्, यामि चेत्पतिदेवो रुष्येत्।
३६८—ह्यो मे मित्रस्य वसुमित्रस्य तीव्रसंवेगः शीतको ज्वरः समायात्।

---

१ तुल्य इत्यर्थ इह प्रयोगः। २ कारणमात्रेऽर्थेऽप्रयोगः। ३ प्रावृषि। ४ विघ्नव्रजे इत्यर्थमभिमन्यते।

३६९—ततः कस्यचित्कालस्य तस्याभिप्रायो मे हृदयङ्गमोऽभूत्।

३७०—नाट्यप्रेक्षणेन मनोविनोदमन्तरा न कश्चिदर्थ इति केचित्। तदापातरमणीयम्।

३७१—सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन। धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः[1] प्रयुज्यते॥

३७२—दायस्य दशांशान कृत्वा दशभ्यः पुत्रेभ्यः समं विभजेत्।

३७३—न हि मुनित्रयीणां समान आविर्भावकालः शक्य आस्थातुम्।

३७४—न हि सर्वस्य समानः सन्मानो युज्यते।

३७५—नासीराधिकारस्य प्रश्नो नूनं जीवनमरणयोः प्रश्न आसीत्।

३७६—भृशमहमाभारी[2] तेषामिति सकार्तज्ञ्यं निवेदयामि।

३७७—तत्र काले प्रजाभ्यः कीदृशाः कियन्तश्च दण्डा अदीयन्तेति गोतमधर्मसूत्रादिभ्यः शक्यं विज्ञातुम्।

३७८—सर्वास्तास्ता भाषाः संस्कृतवाच एवोपजीव्याः।

३७९—नहि सर्वेऽर्थाश्चाटुकारानुवर्तनाभ्यामेव सुसाधा भवन्ति।

३८०—तस्यापमानोपर्यपमानो भवति तथाऽपि नासौ स्वमाचारं समाधत्ते।

३८१—परं त्वया तु मद्वार्ताऽमननस्य शपथ एव कदाचिद् धृतः।

३८२—सा कोपनप्रकृतिरासीदिति मतविसंवादं मनागपि नासहिष्ट।

३८३—प्रायः परीक्षामनुत्तीर्णस्योत्साहः स्वाहा भवति।

३८४—सा पुत्रीभिः समं तथा मृदु व्यवाहरद् यथा ताः स्वशिरसि समारोपयत्।

३८५—सर्वमन्यं विहाय त्वामेव स्वस्य रक्षितारमचैषम्, तत्कुतो नाभ्युपपद्यसे ?

३८६—इदानीं स मौक्तिकीं स्रजमजहात् पौष्पीं चाधात्।

३८७—गाण्डीवमुक्तः स शरः सद्य एव द्विषतः कार्मुकस्य प्रत्यञ्चा[3]मुदकृन्तत्।

---

१ दम्यवत्सतरौ समौ। २ उपकृत इत्यर्थो विवक्षितः। ३ शिञ्जनीत्यर्थे प्रयोगः।

३८८—इदानीमग्रिमकर्तव्याय संनह्यताम् ।

३८९—तदानीं संस्कृतं गद्यं सर्वसाधारणे व्यवह्रियमाणमासीत् ।

३९०—मुख्यार्थे वान्तादीन् ग्राम्याञ्शब्दाञ्शिष्टा लेखका नाद्रियन्ते ।

३९१—समयाल्पता मां संक्षेपायानुरुन्धे[1], बहु च विवक्षे ।

३९२—इदं प्रधनं नगरम्, इदं च निर्धनम् ।

३९३—ग्राम्यत्वादयो दोषा इमां दैवीं वाचं स्प्रष्टुमपि न समर्थयन्ते ।

३९४—धनकामुका भगवन्तं कमलिनं[2] न तथाऽऽराधयन्ति यथा कमलाम् ।

३९५—राजसूयं यियुक्षु र्युधिष्ठिर इन्द्रप्रस्थे महतः संभारांश्चकार ।

३९६—जितकाशिनो[3] रामस्य लङ्कातोऽयोध्याप्रस्थाने ननन्दुर्वानर-सैन्यानि ।

३९७—अम्ब ! इयमद्य भिक्षा प्राप्तेति बहिर्द्वारमर्जुनेनोक्ता कुन्ती समं विभज्य भुज्यतामिति सहसोक्तवती । ततः सा भिक्षा वधूर्द्रौपदी-त्युपलभ्य महत्यसमञ्जसे[4] पतिता ।

३९८—वन्ध्यः स पुरुषो यस्य सुतो न जातः ।

३९९—इमानि दिवसानि मनो मे किमप्युच्चाटितमिवास्ति ।

४००—आदर्शविनीता इमे परिचारकाः ।

४०१—अनूबन्धं निपुण निरूप्य पादोत्थानं विधेयं सुधीभिः ।

४०२—अथ केन मूल्येनेमे ग्रन्थाः परिक्रीताः ?

४०३—विदेशेष्वेकस्मिन्नेव दिवसे केषांचन वार्तापत्राणामनेकधा[5] प्रकाशनं भवति ।

४०४—मया गीर्वाणवाण्येव निजपाठ्या[6] स्वीकृता, अर्थलाभस्तु न मनसि कृतः ।

---

१ विवक्षी करोतीत्यर्थे प्रयोगः । २ विष्णुमित्यर्थमभिप्रेति । ३ जिताहवस्य । ४ अनौचित्यसंकटे इत्यर्थे इत्यभिमन्यते । ५ असकृत् इत्यर्थे प्रयोगः । ६ आत्मना पठनीयेत्यर्थं गमयितुमिच्छति ।

४०५—महतां प्रभावस्तु सद्य एव दृष्टिपथं[1] गोचरयति[1], न तु चिराय निहु तस्तिष्ठति ।
४०६—शिक्षाशुल्कक्षमापर्णेनानुग्रहीष्यन्ति मामाचार्यचरणाः ।
४०७—अत्रावसरेऽध्यापका अपि भाषणानि ददुरध्यायका[2] अपि ।
४०८—यत्सनिर्बन्धं[3] समर्प्यमाणं वसुन्धराधिपत्यं रामेण पद्भ्यां निहतं सा परा सीमा धैर्यस्य ।
४०९—रघुः किल विश्वजिन्नामकं यज्ञं व्यधात्ख्यातिं च विस्तृतामगात् ।
४१०—केचिज्जीवा प्राणशक्तिं रक्षन्त्येव न, परे तु प्रवृद्धां तां दधति ।
४११—तथाकथितानामस्पृश्यानामुद्धारे सम्प्रति साभियोगा[4] राजमन्त्रिणः ।
४१२—केचित्कतिपयसूत्रार्थग्रहणमात्रेण स्वान् गुरुदेशीयान्[5] समर्थयन्ते ।
४१३—वातेरितैरुल्लोलैः कल्लोलैराकुलो भवति कासारः ।
४१४—लुण्टाकेन धनिकस्य कण्ठो घोटितः सर्वस्वं चापहृतम् ।
४१५—लुण्ठितसर्वस्वः श्रेष्ठी शुचा परिदुर्बलः कैरपि दिवसैः प्राणैरमुच्यत ।
४१६—काप्यभिख्या तदानीमभूत्पूर्णशशाङ्कस्य शारद्याश्चन्द्रिकायाः ।
४१७—नागरिकैग साम्प्रदायिकः पक्षपातो यत्नेन वारणीयः ।
४१८—निहन्ता वैरकाराणां सतां बहुकरः सदा । ( भट्टौ २।७८ )
४१९—पूर्वं प्राणात्यये निपुणं परित्रातास्तैरिति तदीयमाभारमद्यापि शिरोभिर्वहामः ।
४२०—नहि विद्यार्थिनां चरितशोधनं केवलमध्यापकेषु लम्बतेऽभिभावकेष्वपि[6] ।
४२१—एतेनेद निःसरति यद्दैवपुरुषकारावुभावपि कार्यसिद्धौ कारणतां यातः ।
४२२—तस्मात्प्रजारञ्जने युक्तः स्याः, वः परमं धनं यश एवेति यतः ।
४२३—ते च मे च साधारणमिदं कृत्यम् ।

---

१—१ दृष्टिपथस्य विषयो भवतीत्यर्थे प्रयोगः । २ अध्येतारः । ३ साग्रहम् । ४ सोद्योगाः । ५ गुरुकल्पान् । ६ संरक्षकेष्वपि विवक्षितम् ।

४२४—तिमिरगहनो जायते सर्वतोऽन्तः ।

४२५—आदत्स्व मित्र ! सुमते तव वैदिके माम् ।

४२६—विपत्सहनं नाम वीरस्य सहजः स्वभावोऽस्ति ।

४२७—इतो वनान्ताद् धूम्र उद्गच्छतीति वसतिस्त्र संभाव्यते ।

४२८—शैत्येन हर्षादिना च रोमाञ्चपुलका जायन्ते ।

४२९—केचित्परमतनिन्दया स्वमतप्रशंसया च प्रजासु विरोधवह्निं दहन्ति ।

४३०—गतः स्वर्गं सम्राडिति कुटिललोकैर्मुखरितम् ।

४३१—कृतेष्वप्यतिमात्रायां युद्धसंभारेषु देशो देशान्तरात् त्रस्यत्यस्य भूयो बलं स्यादिति ।

४३२—अज्ञा अपि स्त्रेषां दुष्कृतानां फलं नेच्छन्ति भोक्तुम् ।

४३३—प्राणिमात्राणि सुखमात्मन इच्छन्ति न दुःखमिति भूतनिसर्गः ।

४३४—मया मौखिकमुत्तरितः प्रश्नः । तेन प्रासदन्प्राश्निकाः ।

४३५—तदानीमयं नो देशः सुवर्णमयोऽर्थात्सम्पत्तिशाली बभूव ।

४३६—इमे श्लोकाः प्रक्षिप्ता इति यदात्थ तत्कथं जानासीति पृष्टोऽसौ जोषमभजत् ।

४३७—श्रीविष्णुदिगम्बराणां रागपरिवाहिणा गायनेन समं सभाकार्यमारब्धम् ।

४३८—एष हि मनुष्यस्वभावः परेषां हास्यास्पदतासाधने त्रुटिं न स्थापयन्ति ।

४३९—ऋषिमुनीनां शक्त्या सह स्वशक्तिर्न जातु तोलनीया ।

४४०—वृद्धो नाम मन्ददृष्टिरपि कर्णाभ्यां पश्यति, क्षीणश्रवणशक्तिरपि नेत्राभ्यां शृणोति । अर्थात् प्रकृतिरस्य क्षीणामेकेन्द्रियशक्तिमपरस्मिन्निन्द्रियेंऽशतोऽर्पयति ।

४४१—न चैवंविधं रूपकं कुहचिदन्यत्र दृष्टमिति पूर्वमेवोपरिष्टान्निगदितम् ।

४४२—शुचि मृदुलधवलसूक्ष्मवसनमास्तीर्य जलार्द्रा[1]मपत्रनैरात्मानं निर्वापय[2] ।

---

१ जलयुक्तव्यजनस्य जलार्द्रेति संज्ञा । २ शीतलय ।

४४३—संसारे चिरं संसरन्सुगतो महात्मा दुःखान्तं गवेषमाणो दयादाक्षिण्यादि धर्ममनुतिष्ठन्नन्तेऽपवृज्यते[1]।

४४४—असन्तुष्टा इवास्मान्महतोऽपि प्रयत्नात्ते महीयांसं यत्नमातिष्ठन्सिद्धये।

४४५—को हि मतिमानतितरलतरङ्गभङ्गसमाकुलमध्युषितविकरालनक्रचक्रवालं व्याप्तवाडवानलं पारावारमुत्सहेत बाहुक[2] उत्तरीतुम्।

४४६—को नु समुत्तितीर्षुरसहायः पारं गन्तुं पारयति ?

४४७—व्यसनेष्वतिप्रसङ्गात्स दीनाद् दीनतरामवस्थां प्रतिपद्यते।

४४८—वङ्गेषु नवद्वीपमण्डलान्तर्गते प्रथिते कृष्णनगरे वर्षमेकमतीतं प्रमथनाथो नाम कश्चिद् ब्राह्मणः प्रतिवसति स्म।

४४९—धन्यः स देवदत्तो यः प्राणपणैरपि नित्यमापन्नार्तिप्रशमनं चक्रे।

४५०—नहि तेन तस्य सुभाषितस्यार्थः प्रत्यक्षीकृतः स्वनुभवेन।

४५१—महाभागो राजराजो नलो दुरो[3]दरवशंगतो राज्याद्विच्युतोभूत्।

४५२—तदवनतेः साम्प्रतं साक्षात्त्वात्तत्रानुमानमनवकाशम्।

४५३—गताः सम्प्रति विक्रमादिनृपतयो देववाण्याः परिपोषकाः। इदानीमन्यासां प्रष्टारः सन्ति न त्वस्याः।

४५४—महानेष गभीरो विषयो विशेषतो मादृशां विषये।

४५५—तनय एव पितुः स्नेहसर्वस्वमधिकरोति[4]।

४५६—नहि विषणधिषणो[5]ऽप्येतावताऽल्पीयसाऽनेहसा शक्तो दुरूहाणीमानि शास्त्ररहस्यानि यथायथमाकलयितुम्।

४५७—वल्गां संनियम्य मन्दीकुरु रथवेगम्।

४५८—स्वयं च संस्कृतस्य राष्ट्रभाषा-रागमालपसि, सुतांश्च पारसीकादिभाषा अध्यापयसीत्यहो वचःकर्मणोर्विभेदः।

---

१ अपवर्गं लभते। २ बाहुभ्यां तरतीति। ३ दुरोदरं द्यूतम्। ४ ईष्ट इत्यर्थं इत्यभिमानः। ५ बृहस्पतिः।

४५९—हन्त कुत्र मतान्धः श्रद्धाजड आर्यविद्वेषी क्षुद्रहृदयोऽवरङ्गजीवः कुत्र चोदारधीर्न्यायप्रियः सर्वत्र समः शिवराजो महाराजः।

४६०—समराङ्गणे पुरुराजेनैकैकशतहस्तव्यवधाने द्विद्विशतं दन्तिनः स्थापिताः।

४६१—एकतो निसर्गात्तामसी भाद्ररजनी, तदुपरि द्विगुणं त्रिगुणं वा संघटितेन नीलघटासंस्तरेण निबिडमाच्छाद्यत वियदङ्गनम्।

४६२—मन्त्रिभवनं सुपरिष्कृत्य समरज्यत सुदर्शनेन वर्णेन।

४६३—मन्दमारुतान्दोलिता काषायरागिणी महाराष्ट्रपताका कामप्यभिख्यामपुष्यत्।

४६४—जीविकार्थमाहिण्डमानानां[1] संस्कृतज्ञानां न कोपि वार्तां पृच्छति।

४६५—वयमेतान् दिष्ट्यावादेन भूयो भूयः सवर्धयामहे।

४६६—अस्य देशस्य नाम स्वतन्त्रदेशानां सूचीतो व्यवाच्छिद्यत चिराय।

४६७—विद्याकेन्द्रं वाराणस्येव परिगृह्यतां तावत्। कति वा तत्र राजप्रवर्तिताः सन्ति संस्कृतविद्याशाला यत्रेतिहासगणितादीनां सामान्यात्सामान्यमपि ज्ञानं कार्यते।

४६८—सहैव मुशलधारावर्षमवर्षी[2]न्मघवा।

४६९—स हि नित्यं सतर्क[3] स्तिष्ठति, न क्षणमपि प्रमाद्यति। सोस्य महान्गुणः।

४७०—न तादृशं शौर्यमौदार्यं वा सम्प्रति समस्ति। सर्वं तत् कथावशिष्टं वर्तते।

४७१—साधारणसभ्यानामेव किम्, वन्यानामपि वर्तमानकाले सभ्यशिरोमणिमन्यानामपि जातीनामयमेव देशः शिक्षागुरुः।

४७२—कैवल्यप्राप्तिरीश्वरेच्छायतना[4], न पुरुषयत्नतन्त्रेति भक्ताः।

४७३—शकटीवाहनादिकमभ्यासितस्तुरगः शिक्षित इत्युच्यते।

---

१ पर्यटताम्। २ वृषु सेचने इत्यस्माल्लुङि रूपम्। ३ जागरूक इति विवक्षति। ४ ईश्वरायत्ता।

४७४–इदानीमनेन वीरेण तथा पराक्रान्तं यथा न समग्रेऽपि निजस्यायुषि।

४७५—पुत्रस्य युद्धात्पलायनं निशम्य मनस्विन्या जनन्या हृदये शल्यमिव प्राविध्यत।

४७६—शर्वर्यां निबिडेऽन्धकारे न ददर्श हस्तो हस्तम्।

४७७–वत्सेऽलं लज्जया। उद्घाटयावगुण्ठनम्। प्रत्यभिजानातु त्वां भर्ता।

४७८—खलोल्लापान् बहून्श्रावं श्रावं स उत्तमं[1] खेदमापेदे, तदुत्तरे चैवमूचे।

४७९—पूर्वे केऽपि राजापसदाः[2] प्रजानामुपरि भयानकमत्याचरन्।

४८०—सेयं कौरवी चमूर्भीष्माध्यक्षतायां परं पराक्रंस्यते किल।

४८१—पुत्रजन्मनि पितुर्हर्षातिशयः शरीरेऽपि न मीयते।

४८२—भगवता सृष्टेष्वतिविस्मयास्पदीभूतेषु वस्तुषु सुतरां प्रभाववद् इदमुदरं नाम।

४८३—पवनः परागवाही रथ्यासु वहन्रजस्वलो भवति।

४८४—अयमर्थः सर्वजनीन[3] इत्येतदर्थे जिज्ञासा नोदेति।

४८५—तेषां परिवारे[4] निजाभ्यस्तास्ता भाषाः प्रचरन्ति।

४८६–सुकृतिनस्ते पूर्णमायुरुपभुज्य पुत्रपौत्रादीनां सत्तायां सुखं नाकमारुरुहुः।

४८७—अनेनैव सर्वं स्थालीपुलाकं परीक्षितं स्यात्। नार्थो विस्तरेण।

४८८—लोके शास्त्रे च सूर्यस्याब्जिनीपतिः सहस्रकिरण इत्यादीनि नामधेयान्यधिविन्दामः। तान्युपपादनामर्हन्ति।

४८९—स्पष्टविनिवेदनाय क्षमां चेद् दास्यन्ति सन्तः स्वमभिप्रायममायं वक्ष्यामि।

४९०—नानाविष्कारगर्विष्ठानां राष्ट्राणां संमुखे कतमद्वा वर्तमानमिदं भारतवराकम्।

---

१ वृद्धं, भृशम्। २ क्षुल्लका राजानः। ३ सर्वेषां विदितः, सार्वलौकिक इत्यर्थः। ४ कुटुम्ब इति विवक्षितिः।

४९१—सेयमनपायिनी स्मृतिमुद्रेतिहासप्रेमिणां हृदयान्नोपमृष्टा भवेत् ।

४९२—यावदेव संभाजिनश्चित्रवयस्य संवादः पुण्यपत्तनमाससाद तावदेव प्रचण्डः क्रोधानलः प्रजज्वाल प्रजासु ।

४९३—धर्मेन्द्रदेरुपरि लोमहर्षणं किमपि काण्डमभ्यनीयतेति पप्रथे प्रवादः ।

४९४—महान्खलु राज्ञि प्रजानां विश्रम्भो[1]ऽभूत् ।

४९५—यच्छक्तगा सकला जीविन इमे जीवा विभान्ति, भूम्यादयश्च विधृतास्तिष्ठन्ति तं विभुं परमेश्वरमुपास्स्व ।

४९६—स्वामिप्राणपरित्राणाय तुरुष्कवीरैर्निजशरीराणां राशयः कृताः ।

४९७—पदानि नाम संस्कृत्य संस्कृत्योत्सृज्यन्ते । तानि शक्यन्ते यथाकामं पौर्वापर्येणान्वेतुम् ।

४९८—इदमिदानीं भूयस्तरां विचारणीयम् ।

४९९—परैराक्रान्ता भयभीतास्ते मातरि[2]पुरुषाः[2] कान्दिशीका[3]बभूवः ।

५००—माङ्गलिकोजन इष्टदेवतामभिध्याय कृत्य प्रक्रमते ।

५०१—अत्र विद्यालये शिक्षकाणां संख्या त्रयोविंशतिरस्ति ।

इति पदवाक्यव्यवहारे विवेच्यसंग्रहः ।

---

## अथ प्रकीर्णकम् ।

१—त्वमसि करुणागाधपयः पयोनिधिः । अभ्युपपद्यस्व[4] नः ।

२—मूषकाः स्वतीक्ष्णैर्दन्तैः कपोतानां पाशानच्छिन्दन् ।

३—मान्यास्ते मातापित्रध्यापकाः ।

४—वङ्गस्य श्रीचित्तरञ्जनं को न वेद वदान्यम् ?

---

१ विश्वास इत्यर्थे इति विश्वसिति । २–२ मातरि शूराः, गेहे नर्दिनः, कातरा इत्यर्थः । ३ भयाद्रणाद् द्रुताः । ४ अनुगृहाण । परित्रायस्वेत्यर्थः ।

५—तस्य नेतृत्वे समागता भूयांसो जनाः कर्मठाः[1] कर्माश्चर्याणि चक्रिरे।

६—इह लोकेऽहिंसया कथं शान्तिः संभवा स्यादिति चोदयन्ति लौकिका अदृष्टसतत्त्वाः[2]।

७—द्वित्राणि स्वनिबन्धानां मे प्रेर्याणीति विज्ञप्तिः।

८—न हि पथभ्रष्टः कश्चिद् गन्तव्यं स्थानं गतः।

९—हितं सम्पादयेन्नृणां मनोवचनकर्मणा।

१०—चक्षुषां गोचरो नाऽयं बुद्धेश्च विषयो न च।

११—विनाशः परिवर्तनमिति सर्गनिसर्गः।

१२—अहोऽस्मि परमप्रीतो यस्य मे तादृशः सुतः।

१३—अविनश्वराऽऽकल्पान्तस्थायिनी कीर्तिरस्य महात्मनो भविष्यति।

१४—अत्रार्थे किमप्युपष्टम्भकं प्रमाणं नोपलभामहे।

१५—निर्गुणे निरञ्जने परब्रह्मणि गुणान् विशेषांश्च कल्पन्ते मन्दाः।

१६—यदस्य जीवितध्येयं तन्नायं विस्मरेत्।

१७—किमित्यज्ञवदनुकुरुषे परेषाम्। सदसती विविच्य प्रवर्तस्व।

१८—यत्त्वं प्रास्तौर्षीस्तन्नाहमनुमोदे।

१९—यज्ञदत्तः षोडशवर्षां गुणग्रामात्मसदृशीं कन्यामुपायत।

२०—स पापो यः परकीयमर्थं गृध्यति।

२१—अस्मभ्यं तु न किमपि प्रतिभाति ब्रह्मणो विनेति रूढिसाधवः[3]।

२२—दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते।

२३—त्रिपाद् गायत्री भवति न तु चतुष्पात्।

२४—तातं क्षमां प्रार्थयित्वा लघयति स्वमागः[4] कुमारः।

२५—अनुक्तमप्यूहति पण्डितो जनः।

२६—अद्यतनीयाः पण्डितमानिनः केचन शिष्टजुष्टां वाग्वर्तनीं व्यतिक्रामन्ति न च तत्र दोषं पश्यन्ति।

---

१ कर्मशूराः। २ अदृष्टवस्तुस्वरूपाः। तत्त्वसतत्त्वशब्दौ समानार्थकौ। ३ येषां साधव इति प्रसिद्धिः। ४ आगो ऽपराधः। सकारान्तं प्रातिपदिकं क्लीबम्।

२७—युधिष्टिरः श्रेष्ठतमः कुरूणाम् ।

२८—वापीकूपतटाकादिभिरलंकृता सुपथीयं नगरी किमपि रामणीयकं धत्ते ।

२९—अहिंसयैव वार्या आक्रान्तारः शत्रव इति श्रीगान्धी स्माह ।

३०—एषः पुत्रि ! चिरायुषी भूयाः, सुखं च जीव्याः ।

३१—व्यापारेण विदेशेषु यथेष्टं वित्तमुपार्ज्य पात्रेषु प्रतिपादयेत्[1] ।

३२—आत्मनिर्भरा लोकाः प्रसीदन्ति सीदन्ति चेतरे ।

३३—प्रेम्णः पयः पायं पायं रमन्ते चिराय प्रजाः ।

३४—अपाङ्गानामशक्तानामेव गवां रक्षणं गोरक्षा न भवति ।

३५—परनिन्दयैव रिक्तं कालं यापयन्ति केचिदधन्याः ।

३६—साङ्ख्ये मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृति विकृतिः पुरुषः ।। इत्येवं पञ्चविंशतिः पदार्थव्यूहः ।

३७—स वै शत्रुरात्मजाया य इमां शिक्षया रहयति ।

३८—यदाऽयं गाढनिद्रायां शेते तदा न किमपि बाह्यं स्मरति ।

३९—मया मौखिकमुत्तरितः प्रश्नः, तेन प्रासदन्प्राश्निकाः ।

४०—लोकमान्यस्य गाङ्गाधरेः श्रीबालस्यादर्शचरितं कस्य नानुकरणीयम् ।

४१—केचिदनात्मज्ञाः पाकिस्तानस्था भारतं युद्धभयं दर्शयन्ति ।

४२—अनपत्यो नृपतिः शुचा परीतो राज्ञीमाह—यत्तया राज्यहिताय कश्चिद्बालो दत्तक इति स्वीकार्यः ।

४३—काश्मीरो नाम जनपदो भूशेखरायमाणो विधातुरुत्तमः सर्गः ।

४४—अतीतान्मासत्रयात्प्रवृत्तस्य मिश्राङ्गलदेशयोः कलहस्य नाद्याप्युपशमः ।

४५—ये नाम विरला हिन्दवः पाकिस्तानेऽवशिष्टास्तेपि यत्नेन विष्ठाप्यन्ते[2] तत्रत्यैरधिकारिभिः ।

४६—देवदत्ताया द्वे सुते, सुकन्या च सुरुचिश्च । तयोः सुरुचिर्विदुषीतरा ।

---

१ वितरेत् । २ प्रस्थाप्यन्ते, बहिष्क्रियन्ते निर्वास्यन्त इत्यर्थं विवक्षति ।

४७—अस्या गमने मुहूर्तमन्तरायो भवन्त्या त्वया ममेष्टमाचरितम् ।

४८—विश्वजनीनाः का अपि मर्यादाः पुरातन्य इत्येव तासां ध्वंसाय मा स्म पराक्रामत ।

४९—वसिष्ठद्वेषिणी चैषा ऋक्, अहं च वसिष्ठगोत्रीयस्तस्मान्नैनां व्याख्यास्ये ।

५०—कियन्तो बन्दिनोऽस्यां कारायाम् ?

५१—अहं हि तं धर्ममुत्सृजेयं योऽस्पृश्यतां शूद्राणां शिष्यात् ।

५२—अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः ।

५३—त्रयोपि सखायः सहोदराणामिव प्रीतिमन्त ऐक्यमैकार्थ्यं च गताः सुखं संवसन्ति ।

५४—गभीरसपीदं जलाशयं प्रसादादुत्तानमिव भाति ।

५५—सम्यगेप्युद्योगे फलं विपरीयते । तत्कुतः ।

५६—यः सुनोत्युत्पादयति सकलं जगत्स सविता ।

५७—न हि धीरान् विपदः पराभवन्ति ।

५८—परितः पतन्ति दुष्कृतां विपदः ।

५९—ग्लास्नु[1] हि प्रायेण परिग्लायति मधुरादभ्यवहारान् ।

६०—क्षीरस्नुतिविरतये प्रसूतायाः कुचाग्रयोरौषधविशेषं लिम्पेत् ।

६१—राजा च प्रजाश्च द्वावपि स्वस्वकर्मसु स्वतन्त्राः ।

६२—यदि भिषङ्नामौषधमेव जानाति निर्मातुं तदा भिषजाभिषजयोः को विशेषः ?

६३—तदानीमयं नो देशः सुवर्णमयोऽर्थात्सम्पत्तिशाली बभूव ।

६४—विद्याभ्यासेऽस्य प्रशस्यः पुरुषार्थो वर्णिनः[2] ।

६५—द्वाः स्थ[3] ! कमप्यागन्तुकमन्तरेतुं मा स्म दिक्षः ।

६६—चतुर्दशोत्तरैकोनविंशतिशतमिते वत्सरे विश्वं व्याप्नुवन्भीषणः सम्परायः प्रावर्तत ।

---

१ रुजा ग्लानः क्षीण उच्यते । २ ब्रह्मचारिणः । ३ दौवारिक ! ।

६७—भोः पुरोहित ! वैतरणीतरणार्थं दत्ता गौरद्यापि त्वदन्तिके तिष्ठति । न जाने जनको मे कति वारान् वैतरण्यां निमग्नोन्मग्नोऽभविष्यत् ।
६८—इमे श्लोकाः प्रक्षिप्ता इति यदात्थ तत्कथं जानासीति पृष्टोऽसौ जोषमभजत् ।
६९—तेषामियती विद्या नास्ति यया सत्यासत्ये विवेक्तुं प्राभविष्यन् ।
७०—बहिः सन्नर्थः प्रत्यक्षं भवति न त्वन्त इत्यभिमन्यते ।
७१—उत्तरेण मे निकेतनं काञ्चनी वासयष्टिरित्युपलक्षय ।
७२—न संमुखमुपागतं शरणवाञ्छया दूरये ।
७३—मौहम्मदा अकारणमेव हिन्दूनद्विषुः ।
७४—महार्घता पिशाची मुखं व्यादाय निगिलितुमिवोपधावति ।
७५—अवसितं नो नगरे कृत्यम्, सम्प्रति ग्रामं गन्तुमुपक्रम्यामहे[1] ।
७६—इदमभ्युपेयं भवति न खलु दैवानुग्रहादृते सिध्यन्ति कर्माणि यत्नारब्धान्यपीति ।
७७—अद्य ह्यो वा प्रातः शाकमभुञ्ज्महीति न राष्ठु स्मर्यते ।
७८—मन्ये मूर्तिमदस्य पापजातं समुदस्थीयत[2] ।
७९—अयं श्रुतपूर्वी भारतम्, तेनाऽस्य विदिता वृत्तान्ताः कुरुपाण्डवानाम् ।
८०—सेयं सेव्यतां सुधीभिः सुरसरिदिव पावना देववाणी ।
८१—ऋचया यदुक्तपूर्वं तदेव साम्नोच्यते ।
८२—न पठेद्यावनीं भाषां प्राणैः कण्ठगतैरपि ।
८३—अप्यन्तरायाण्यार्ये ?
८४—विराजादिशब्दानां सन्ति मुख्यार्थाः सन्ति च गौणाः ।
८५—यदमात्याः कर्तव्यं निर्दिशन्ति तन्नौमिति ब्रूमः ।
८६—दुर्लभां मानुषीं तनमवधार्य दुष्कृतं करोषि, हा हतोऽसि ।
८७—भीतो बालः क्व मेऽम्बेति पृच्छत्यन्तिकादतिक्रामन्तमागन्तुम् ।
८८—दृष्टिपूतं न्यसेत्पादम् ।

---

१ आरभामहे । २ उत्थितम्, उदितम् ।

८९—बहुव्रीहिरिवान्यपदार्थप्रधानैरर्थवादैर्नार्थः ।

९०—जीवानां व्यामोहयितरि परमेश्वरे 'शैताने' च को विशेषः ?

९१—अवकरस्यावस्करस्य च विशेषं चेद्वेत्थ, शब्दविदसि नूनम् ।

९२—विकर्तन[1]कुलालङ्काराणां प्रथितयशसां भुवनविजित्वराणां रामादीनां वंश्या वयम् ।

९३—न वयं परिस्थितेर्यथेष्टमीश्महे, तद्वशगा एव वयं बहुश इति वृद्धाः ।

९४—या तत्र नौ सम्भाषाऽभून्न तस्याः सम्प्रत्युपतिष्ठति विषयः स्मृतौ ।

९५—भाषा हि व्यवहारस्यैकतमं साधनम् ।

९६—संस्कृतस्याध्ययने लेखनेऽभ्यसने चानल्पं प्रयोजनमिति प्रायेण प्रतिपद्यते ।

९७—स्वार्थानुसन्धिपरो लोक आकाशपातालमेकीकरोति ।

९८—अवश्यम्भाविनमपायसाकल्यय तं शमयितुमुपायमातिष्ठेत्प्राज्ञः ।

९९—एष वास्तविको दार्शनिकः कालः शक्यो व्यपदेष्टुम् ।

१००—युज्यते यच्छात्राः सततं संस्कृतं शीलयेयुः, लौकिकमप्यर्थं संस्कृतेतरस्यां भारत्यां न जातु ब्रूयुः ।

१०१—अद्यतनीनमार्यसंस्कृते रूपं कियतः कालादारब्धमिति सहसा वक्तुं न पारयामः ।

१०२—सुलभा खलु ब्रह्मवर्चस्कामता भवति, दुर्लभा पुनस्तस्याः समृद्धिः ।

१०३—राजाश्रयं विना कीदृश्या अप्युपयोगिन्याः शिक्षायाः प्रसारो नार्हति भवितुम् ।

१०४—ओमिति ब्रवीषि चेत्तदाऽवसन्नस्ते पक्षः ।

१०५—वयं च ज्ञानालोकप्रवर्तकानामार्याणां वंश्या इति शक्यं साभिमानं शिर उन्नमयितुम् ।

१०६—लोकव्यवहृतिपरिचितिसम्पत्तये संस्कृतपाठशालासु प्रबन्धः कश्चिद्विधेयः ।

---

1 विकर्तनः सूर्यः ।

१०७—इतिहासप्रभृतयो विषयाः संस्कृतगिरा निबद्धव्याः ।

१०८—ख्रिष्टाब्दीतः सहस्रद्वयात्प्राग् वेदाः प्रणिन्यिर इति केचित् प्रलपन्ति ।

१०९—शास्त्रार्थायाऽभीतवदाह्वयन्तमष्टावक्रं बालचापलमेतदिति नाद्रियते वन्दी ।

११०—लोकरावणो रावणो विविधैराकारैः परुषाक्षरैश्चाभीषयत्सीताम् ।

१११—परं भर्तरि दृढमनुरक्ता सा न मनागप्यबिभ्यत्, न वा धर्माद् व्यचलत् ।

११२—यदि ते किञ्चित्परमार्थतो विज्ञातुं विचेष्टेरंस्तदा ध्रुवं सिद्धिं काममपि लभेरन् ।

११३—हर्तव्या विघ्नबाधा मङ्गल्येष्वारम्भेषु ।

११४—परुद्भूता सम्मेलनस्य सुषमा नैषमे संभाव्यते ।

११५—अमी गोस्वामिनो वल्लभाचार्यकुलालङ्करणा इति विदितं नः ।

११६—श्रीविष्णुदिगम्बराणां गायनेन समं सभाकार्यमारब्धम् ।

११७—ये ग्रन्थमिममुपयोक्ष्यन्ति ते शब्दार्थान् साधु वेदिष्यन्ति ।

११८—स्वीकृतमनेन साहसिकं कर्म, तेनाऽस्य करुणा लुतः ।

११९—तस्य तत्र स्थितस्य विंशति वा पञ्चविंशति वा वर्षाणि गतानि ।

१२०—ज्ञानलवदुर्विदग्धाः[1] शिष्या ज्ञाननिधीन् गुरूनप्यनाद्रियन्त इति कलेर्विलसितम् ।

१२१—महान्नाम दोषः प्रसज्येत यदि पैतृकी मर्यादा व्युत्क्राम्येत ।

१२२—अयं द्वात्रिंशतां निबन्धानां सङ्ग्रहो हिततमश्छात्रेभ्य इति मतं नः ।

१२३—कठिनमिदं कार्यं यत्नान्तरमपेक्षते ।

१२४—अविप्लुतब्रह्मचर्यो दृढसर्वगात्रो वर्चस्वी स युवा त्रिंशद्वर्षायुषि दारानकुरुत ।

१२५—अत्र संस्कृतज्ञेतराणां प्रवेशो निषिद्धः ।

१२६—ब्रह्मवर्चस्विन इमे वर्णिनः प्रदीप्ताग्नय इव भासन्ते ।

---

१ विद्याकणसम्प्राप्त्याऽवलिप्ताः ।

१२७—हन्त देवदत्तो वराकः कियद्भिश्चिद्वर्षैः पक्षाघातेन पीडितोऽस्ति।

१२८—प्रस्तावतरङ्गिणी नाम निबन्धावलिभूयसे भविष्यति भव्याय भावुकानाम्[1]।

१२९—अपि वेत्थ कस्य यानस्य बाष्पयानमिति समाख्या ?

१३०—मदुक्तं शृणुष्व मनसाऽवहितेन।

१३१—उच्चावचा नाना ह्यधिकारिणो भवन्ति।

१३२—इह प्रबन्धे विचाय विचायमपि विशेषं दोषं न पश्यामः।

१३३—कैश्चन मासैर्भ्रातुः श्रोत्रेणाशङ्करस्य वृत्तान्तो नाधिगत इति चिन्ता मामाचामतीव।

१३४—न गर्दभा वाजिधुरं वहन्ति।

१३५—संस्कृतज्ञंमानिनाऽस्य ब्राह्मणब्रुवस्याखर्वो गर्वः कथं युज्यते ?

१३६—मनुष्यः खलु कियानपि बुद्धिप्रमाणको वैज्ञानिकः स्यान्नास्यात्मज्ञानमुदेति यावन्न श्रोत्रियं ब्रह्मनिष्ठमुपास्ते।

१३७—दिनाद्दिनं कणजमूल्य वृद्धिं यतीति किं कुर्मः।

१३८—चारुचरितस्यास्य दर्शनेन समुत्सुको लोकः।

१३९—चकास्ति संस्था त्वत्सङ्गात्ते शोभा नास्ति संस्थया।

१४०—विमानना सुभ्रु! कुतः पितुर्गृहे।

१४१—जनयति कुमुदभ्रान्तिं धूर्तबका बालमत्स्यानाम्।

१४२—नाहमात्मनश्छायामपि व्यश्वसनित्यासन्नमरणोऽवरङ्गजीवः शब्दतः प्रतिपेदे।

१४३—विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।

१४४—नाथसे किमु पतिं न भूभृताम्। (किरात)

१४५—ईदृंशि तपांसि कोऽर्हश्चरितुमृते विश्वामित्रात्।

१४६—प्रायेण समानरूपाण्यपि वस्तूनि विषमशीलानि भवन्ति।

१४७—दीर्घिकासु कुमुदानि विकासं लम्भयन्ति शिशिराः शशिभासः।

---

[1] सहृदयानामित्यर्थं विवक्षति।

१४८—शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः। (श्रीरामायणे)।
१४९—भ्रमरोत्करकल्माषा[1] कुसुमानां समृद्धयः।
१५०—प्रतिमासमाद्ये ह्नि ग्राहकाणां सेवायामुपसर्पति पत्त्रिकाकारो व्यथां च स्वां वेदयति।
१५१—रक्ता नाम श्रियमनुसरन्ति विरक्ताश्चानुसर्यन्ते श्रियेति विपरीतो विधातुः क्रमः।
१५२—ये नाम स्त्रैग[2]मुपजीवन्ति ते यदि जीविताः, के मृताः ?
१५३—वार्तमानिकः प्रजास्वनुपशमः क्षुन्निमित्तक इति निश्चितिः।
१५४—समाजसंगठनं साम्प्रतमपेद्यतेतमाम्, सवतो विरोधिभिः परिक्षिप्ता[3] वयम्।
१५५—वह्वहं तस्य बुद्धिप्राखर्यमस्तुवम्।
१५६—सर्वैश्वर्यकामयेनून् देवान्सम्प्रार्थयामहे वितरत नो भद्रं भूयसे मङ्गलायेति।
१५७—स्वे स्वे धर्मणि निरताः प्रजाः सुखं निर्विशन्ति[4]।
१५८—तानि धर्माणि प्रथमान्यासन्।
१५९—कौमार्यं यौवनं स्थाविर्यमिति तिस्रोऽवस्थाः शरीरस्य।
१६०—शूद्रातापस्यफलस्वरूपे क्वचिद्रामायणेऽकालमृत्युर्वक्तव्य आसीत्स च नोक्त इति शबरी शूद्रा नेति कश्चित्।
१६१—अत्र देवमन्दिरे कारुकार्यमपि यवनशिल्पशैलीमनुहरते।
१६२—रात्रिन्दिवे तत्प्रतीक्षायामगमयं कालम्।
१६३—चिरविश्लिष्टयोस्तयोरुपश्लेषे प्रावृतत्प्रेमाश्रुवर्षा विलोचनाभ्याम्।
१६४—यदहं रावणस्य गात्रसंस्पर्शं बलाद् गता तत्रानीशाऽहं किम-करिष्यम्।
१६५—गच्छत्सु कतिचिद्दिनेषु स गदान्निर्गतः किंचिद्बलमुपाचिनोत्।
१६६—इदं पुरोवर्तिवनाभिरामतां क्षणं नयनपान्थीकृत्य चरितार्थ्यतामात्मा।

---

१ षट्चरणचक्रचित्राः। २ स्त्रीणां समूहम्, स्त्रीरित्यर्थः।

१६७—सतीत्वं कालेन स्वप्नायितं भावीति केचिदाशङ्कन्ते।

१६८—सेयमुपविंशानां वर्षाणां घटना। नैनां विस्मृतो लोकः।

१६९—भूकम्पस्य दिनत्रयात्पूर्वमेव कोयटात उदडयन्त शकुनय इति वार्ता।

१७०—तेजोदीप्राया अमुष्या बालिकाया नावश्यकता दीक्षायाः।

१७१—तेषामेव दृष्टावहममूल्यः, परे तु मामकिञ्चित्करं गणयन्ति।

१७२—अवाप्सीर्महिषीं भाज्यां रणे निर्जित्य रुक्मिणीम्।

१७३—अहो पङ्कजपरिचयसुरभिः प्रातस्तनः समीरश्चतुर्दिग् विचरन् सन्तर्पयतीन्द्रियाणि।

१७४—संस्कृतपत्रिकेयं मद्दिशूरराज्येनोपजीव्यते।

१७५—शक्तिमनतिक्रम्यात्मश्रेयसि यत्नं महान्तमातिष्ठेत।

१७६—व्यतिक्रमस्य कृते तर्जितः सुतः स्वरूक्षैर्वचोभिः पितरं भृशमतौत्सीन्।

१७७—न हि वस्तुस्थितिपरिवृत्तिमात्रेण सन्तुष्टिर्नो भवित्री।

१७८—धनधान्यस्य च स्फीतिः सदा मे वर्ततां गृहे।

१७९—हे रोहिणि! त्वमस्य शीतकरस्य भार्या, एनं निवारय पतिं सखि! दुर्विनीतम्।

१८०—तेनेदं काञ्चनमयं निर्मितं पुरमुत्तमम्।

१८१—उत्तिष्ठते वासुकिनापि दष्टः।

१८२—गुरुभिः शिष्या आत्मनिर्भरतामनुशिष्याः।

१८३—वह्वपानि तडागानि सारसाः समुपासते।

१८४—ततः समा मासो दिवा रात्रिरिति कालभेदोऽध्यजायत।

१८५—गरलभरयाऽनया नीत्या मिथो भेदिताः प्रजा नात्मश्रेयोऽविदुः।

१८६—क्षीरौदनं गन्धयुतं विधाय स आदयत् किञ्चन तन् तनूजम्।

१८७—अनादेः कालान्मनुष्यस्येयमिच्छाऽभूद्यत्स पक्षिगण इवाकाश उड्डीयेत।

१८८—अद्यत्वे शङ्काक्रान्तं जगत्। सबलानि दुर्बलानि वा राष्ट्राणि स्वानि निरायतिकानि[1] मन्यन्ते।

१८९—दीपार्चिः शीघ्रं संचरमाणा सूक्ष्मकालक्षणिकया घटपटादीन् प्रकाशयति।

१९०—इयमुत्कटा मेऽभिलाषा काश्मीरान्गच्छेयं तत्र च निदाघं नयेयम्।

१९१—त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्। (मनौ)

१९२—एकद्वे वासरे मयि वस्तुमर्हसि, ततो गमिष्यसि।

१९३—अतिमात्रं स्निह्यत्यम्बा शिशुकम्।

१९४—देवदत्तायेक्षते दैवं गर्गः।

१९५—भयङ्करीयं मूर्तिर्दृष्टमात्रा लोमानि मे हर्षयति।

१९६—कौसल्यया रामो जातः सुमित्रया च लक्ष्मणः, तथाविधं च तयोः सौभ्रात्रमिति चिर्त्रीयते लोकः।

१९७—त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत्।

१९८—सुन्दरयाऽनया शैल्या शिक्षिताश्छात्राः संस्कारं कमपि लप्स्यन्ते नूनम्।

१९९—यतितं मया चिराय व्याकरणमवगन्तुं न च पारितम्।

२००—जागृतोऽहमात्मनि ब्रह्मणि, नहीदानीं विडम्बयितुमर्हति मां माया वराकी।

गतं प्रकीर्णकेन।

गतं च पूर्वार्द्धेन॥

---

[1] आयतिरुत्तरकालः, निष्क्रान्तोत्तरकालानि। अस्थायीनीत्यर्थः।

(२०१) सा तं जुगुप्सितं मत्वा महती व्रीडिता ततः।
ब्रह्मन्नौबे ... ... (भा०पु० ११.९.७)।

(२०२) अल्पश्रुतस्येदं शीलं स्वबुद्ध्याधिगतं मतमेवावलम्बितुमाग्रहाति परान्।

(२०३) एकाकी कादम्बरीहृदयाणां श्रीपतिमादाय तत्र गता।

(२०४) ईश्वराधिष्ठितायाः प्रकृतेः कर्तृत्वं जगतोऽनीश्वराधिष्ठिताया वेति विमृश्यते।

(२०५) मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे (भा० पु० २.८.२२)।

(२०६) नाहं विरिञ्चो न कुमारनारदौ
न ब्रह्मपुत्रा मुनयः सुरेशाः।
विदाम यस्येहितम्--- (भा०पु०८.१२.१३२)।

(२०७) उच्चैर्घुष्टं तु घोषणा (अमरः)

(२०८) मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम् (मेघ० )

(२०९) कथं भीतभीत इव शीलसमूहः (कि० )।

(२१०) सर्वे सङ्घाभिगो रोगा वर्जयित्वा प्रवाहिकाम्।

(२११) नोच्छिष्टं कस्यचिद् दद्यात् (मनु० २।५६)।

(२१२) वेदैः रागोवैः संवेद्यः कृष्णो नोऽवतु।

(२१३) करभाःस्युः शृङ्खलका दारवैः पादबन्धनैः (अमरः)।

(२१४) सर्वरत्नाकरा भूमिः (गरुडपु० २९७।८३)।

(२१५) न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।

(२१६) खगबाल्यादिनोर्वयः (अमरः)

(२१७) न यतिभ्योऽर्थानां किञ्चित्प्रयोजनमस्ति।

(२१८) ... ... प्रयत्नान्ते भूयोऽपि यत्नान्तरं चक्रुः।

(२१९) गुरुजनेऽपराद्धवानसौ को नु दण्डः भवेयः।



(२२०) किंचित्त च भवतेदं गेहमभ्यागतेन
मदुचरणसरोजं भूषितं सम्मतेन।

रघुः ( शिशु० )।

(२३९) पदङ्घ्रिश्चरणोऽस्त्रियाम् (अमरः)।

(२४०) यूयं सर्वे मनुष्याः (आरण्यके वेदेन नित्यं स्वाध्यायमिति।

(२४१) मन्त्रयुक्तिविहीनस्य गोष्पदं दुस्तरं भवेत् (यो० वा० ४।७४)

(२४२) इह ब्राह्मणानां नवदश वर्तन्ते उच्यते न विंशतिः।

(२४३) जनयति कुमुदश्रियं पूर्णचन्द्रो बालमनस्यानाम्।

(२४४) अकर्दममिदं तीर्थं भारद्वाज निशामय।(रा० १।२।५)

(२४५) सन्तोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने।

(२४६) वनान्तरं वसति, अन्तर्विषां वै सुस्वादा फलानि: शक्याऽऽस्वादितुम्

(२४७) रुचिं स्वधर्मे भुवनद्वयेऽपि भूपः प्रजूं यत्नभृते ददाति (श्री-केशवानन्ददि० सा० १८।५३)।

(२४८) तदानीं तर्कोऽयं देशश्चन्द्रगुप्तस्याधिकारेऽवर्तिष्ट।

(२४९) एतद्देशस्वातन्त्र्यप्राप्तिलब्धये श्रीसुभाषचन्द्रः प्राणानेव पणेऽदधात्।

(२५०) द्रव्याणां घृततैलानां काकश्वाद्युपहतानां ... ग्रन्थेष्व-प्रमाण कुशपञ्चद्वाभ्यामुत्प्लवनेन शुद्धिः (मनु० ५।११५ इत्यत्र कुल्लूकः)।

(२५१) अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः।
न शक्यन्ते तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः (बृ० स्मृतौ)॥

(२५२) स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् (मनु० ९।१६६)।

(२५३) तान्सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत् (मनु० १०।२०)।

(२५४) अतोऽतिधीरं बलवच्च ते मनश्चलेषु कामेषु सार-दर्शिनः (बुद्ध० च० ४।९७)।

(२५५) इते च लोके बहुभिः कुमार्गैः सन्मार्गमन्विच्छति यः श्रमेण।
स दैशिकः क्षोभयितुं न युक्तम् --- ।।(बुद्ध० च० १३।६२)

(२५६) [illegible] (रा० २।१२।१२)।

(२४७) प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥

(२४८) हसता ऽपनीय हृदयाद् घनान्धकारं निशायाः।
हसत प्रदीप्य दीपान् पदे पदे सूक्ष्मा छायाः ॥

(२४९) नाट्यशास्त्रे काव्यस्य निरूपणं नास्ति। काव्यप्रकाशेऽपि काव्यैकपरो दृश्यते। साहित्यदर्पणे तदुभयं प्रतिपादितं दृश्यते।

(२५०) चत्वारो धनदायादा धर्माग्निनृपतस्कराः।
तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः ॥

(२५१) एवं वयं च पर्यन्ते सर्वे चास्मत्पितामहाः।
पातिता वै भविष्यन्ति --- ॥ (भा० अनु० ८।२६)॥

(२५२) दूरोच्चका-नाकवधूनिकरसंराविणीं सघनराजि (घनीभ)
(अभिनन्दकृते रामचरिते १८।१९)।

(२५३) प्रणमज्जनिजगोष्ठे सेवको वृन्ददेवैः सा
दधिमथनजलक्लान्त्या सेविता ग्रामकन्या
(विष्णुभा० ६।४०)।

पूर्वार्द्धे संगृहीतानां शब्दार्थानां विवेचनम्।
क्रमप्राप्तमितीदानीं सप्रमाणं प्रवर्त्यते ॥

## अथ संहितायामच्सन्ध्यधिकारः प्रथमः।

१—शुद्धोदनस्यापत्यमित्यत्र वृद्धिरेचीति वृद्धिर्नाकारि, स दोषः। पृषोदरादित्वाद्वा साधुत्वं कल्प्यम्। संज्ञापूर्वको विधिरनित्य इति वा समाधेयम्। २—तत्रौमित्यत्र ओमाङोश्चेत्यनेन विहितं पररूपं नाश्रितम्, स दोषः। तत्रोमिति साधु। ३—अत्र एत्येधत्यूठ्सु इति वृद्ध्या उपैष्यामीति साधु। ४—ओत् इति प्रगृह्यसंज्ञायां प्रकृतिभावे अहो अस्मीति साधु। ५—आङ् इहि इत्यवस्थायाम् आद्गुण इति गुणेन एहीति साधु। ६—उभे अपीति साधु। ईदूदेद् द्विवचनमिति प्रगृह्यसंज्ञा। ७—सर्व आत्मानमित्येव साधु। रोर्यादेशे तस्य च शाकल्येन लोपे तस्य चासिद्धत्वादत्परत्वाभावाच्च उत्वं दुर्लभं पूर्वरूपैकादेशश्च दुर्लभतर इत्यलं समाधानयत्नेन। भारते चैष प्रयोगः। नियोगपर्यनुयोगानर्हा वाचि स्वतन्त्रा महर्षयः। ८—पुण्यपापे इत्येव साधु। ईदूदेद् द्विवचनं प्रगृह्यम्। ९—नाभिप्रेम इत्येव साधु, वृद्ध्यप्राप्तेः। १०—तेऽब्रुवन् इतीष्यते। एङः पदान्तादति इति पूर्वरूपम्। ११—महार्घेतेति स्यात्। अस्य शकन्ध्वादित्वे शिष्टव्यवहारो मृग्यः। १२—स्वायम्भुवमित्यत्र ओर्गुण इति गुणो न कृतः, संज्ञापूर्वको विधिरनित्य इत्यदोषः। १३—एकत्व आत्मेत्येव साधु। पूर्वरूपस्याप्राप्तेः। १४—विद्यार्थिनोऽकामत इति स्यात्। रोरुत्वे आद्गुणे एङः पदान्तादिति शास्त्रेण प्रवृत्यम्। १५—अतिशायने इत्येव वक्तव्यम्। बाधकान्येव निपातनानि भवन्तीति।

---

## हल्सन्ध्यधिकारो द्वितीयः ।

१—अन्तरङ्गाणि बहिरङ्गाणीति च भाव्यम् । कुमति चेति णत्वं दुर्वारम् । २—किंवदन्तीत्येव साधु । मोनुस्वार इत्यनुस्वारः । ३—गुणांस्तिरस्कुर्वन्तीति वाच्यम् । नश्छव्यप्रशान् इति नस्य रुः । ४—आचार्यानीति साधु । आचार्यादणत्वं चेति वक्तव्याण्णत्वनिषेधः । ५—भिषगादीनामिति चोः कुत्वे कृते साधु । ६—सिषाधयिषसीत्यभ्यासादुत्तरस्य सकारस्य मूर्धन्यादेशे साधु । स्तौतिण्योरेव षण्यभ्यासादिति नियमात् । साधेर्ण्यन्ताच्चात्र सन् । ७—अन्तरायाणीति लोडुत्तमैकवचने साधु । अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यमित्युपसर्गतायाम् आनि लोट् इति णत्वम् । ८—दुर्नय इत्येव साधु । दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य इति णत्वनिमित्तमेव नास्ति । ९—प्राङ्क इति पदमिति विभक्त्यलोपेन वक्तव्यम् । १०—विराडादिशब्दानामिति व्रश्चभ्रस्जेति सूत्रेण षत्वे ततो जश्त्वे च कृते साधु । ११—नमः कृत्वेति निरवद्यम् । साक्षात्प्रभृतीनि चेति विभाषा गतिसंज्ञा । गतिसंज्ञाऽभावे नमस्पुरसोर्गत्योरिति विसर्गस्य सत्वमपि न । पुरः कृत्येति दुष्टम् । पुरोऽव्ययमिति गतिसंज्ञा । तेन विसर्गस्य सत्वे पुरस्कृत्येत्येव साधु । १२—उपस्तम्भकमिति साधु । मूर्धन्यादेशे प्रमाणविरहात् । १३—नशेः शान्तस्येति णत्वे निषिद्धे प्रनष्ट इति साधु । १४—इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वे चतुष्पञ्चाशदिति साधु । १५—मोनुस्वारे प्रियंवद इति साधु । १६—मातृपितृभ्यां स्वसेति षत्वे मातृष्वसेति साधु । १७—अचो रहाभ्यां द्वे इति द्वित्वं विभाषितम् । तेन द्वित्वाभावपक्षे मूर्छन्तीति साधु । १८—भोजनाच्छादने इत्यत्र पदान्ताद्वेति तुग्विकल्पः । तेनादोषः । १९—स्वयंवर इति स्यात् । मोनुस्वार इत्यनुस्वारो दुर्निवारः । २०—अस्मिंश्चेतना इति वक्तव्यम् । नश्छव्यप्रशान् इति नस्य रुः । पूर्वत्रासिद्धमिति स्तोः श्चुना श्चुरित्यसिद्धवद्भवति । २१—परिनिविभ्यः सेवसितसयेत्यादिना सूत्रेण सयशब्दस्य सकारस्य मूर्धन्यो विधीयते न तु

तत्प्रकृतेः सिनोतेरपीति चिसिन्वन्तीत्येव साधु। २२—भुवनप्रथित-प्रख्यानामित्येव साधु। असिद्धे शस्य यवचनं विभाषेति भाष्ये स्थितम्। इदमुक्तं भवति—चक्षिङः ख्याञ् इति ख्शादिरयमादेशः। शस्य च यवचनमसिद्ध काण्डे द्रष्टव्यम्। तेन शकारेण व्यवधानात् प्रातिपदिकान्तेति शास्त्रेण वैकल्पिकं णत्वं न। २३—उपसर्गादसमासे पीति णत्वे प्रणश्यतीति साधु। २४—निस्नातोस्मीति साधु। निनदीभ्यां स्नातेः कौशले इतिं कौशले गम्यमाने णत्वं विहितम्। २५—परच्छन्दानुवर्तनमिति तुकि सति साधु। २६—उपसर्गात्सुनोतिसुवतीत्यादिना मूर्धन्ये परिष्ठितिरित्येव साधु। २७—हिंसायां प्रतेश्चेति सुटि प्रतिस्किरतीत्येव साधु। परिनिविभ्यः परस्य सुटो मूर्धन्यादेशविधानात्। २८—त्रिहायनेत्येव साधु। त्रिचतुर्भ्यां हायनस्येति णत्वं वयस्येव स्मर्यते। कालकृतशरीरावस्था यौवनादिर्वयः, तच्चेह नास्ति। २९—सुः पूजायामिति कर्मप्रवचनीयत्वे उपसर्गनिमित्तं षत्वं न। सुपिक्तमित्यत्र पूजार्थेऽसत्युपसर्गत्वं तदवस्थम्। तेन षत्वमित्युभयत्रादोषः। ३०—नरवाहन इत्येव समीचीनम्। नरो वाहनमस्येति विग्रहः। तस्मान्नरशब्दोऽनाहितवचनः। तेन वाहनमाहितात् इत्यस्यात्यन्तमप्राप्तिः। पूर्वपदात्संज्ञायामग इत्यनेनापि णत्वं नेष्यते। क्षुभ्नादित्वात्। एवं श्रीघनः शास्ता मुनिः, स्वर्भानुः, चित्रभानुः, इत्यादिषु णत्वाभावः। ३१—अहरहरधीते इत्येव साधु। रोऽसुपीति रेफः। ३२—अभिरभागे इति भागेर्थे उपसर्गत्वमप्रतिषिद्धम्। तेन उपसर्गप्रादुर्भ्यामस्तिर्यच्पर इत्यभिष्यादित्येव साधु। ३३—अपरिनिष्ठितस्येत्येव साधु। णत्व विधायक शास्त्रस्यानुपलम्भात्। ३४—ह्रस्वात्तादौ तद्धिते इति सकारस्य मूर्धन्यादेशे सर्पिष्टरमिति साधु। ३५—पयस्पाशमित्येव साधु। याप्ये पाशप् इति पाशप् प्रत्ययो निन्दायाम्। 'सोऽपदादौ' इति विसर्जनीयस्य सकारः। ३६—विसोढुमिति वक्तव्यम्। सोढ इति मूर्धन्यादेशनिषेधात्। ३७—तात्पर्याख्यानीति साधु। मूलगतस्यासाधुत्वे पूर्वत्र ( द्वात्रिंशे वाक्ये ) हेतुरुक्तः। ३८—नश्चापदान्तस्य झलीत्यनुस्वारे श्रेयांस इति स्यात्। ३९—पुमांस इत्येव साधु। पूर्ववच्छास्त्र-

कार्यम् । ४०—अन्तराददीतेति वक्तव्यम् । अन्तर् इति रकारान्तमव्ययम् । रोरेव यादेशो विहितो न तु रेफस्य । असति यादेशे शाकल्यप्राप्तिरेव न । ४१—परिनिविभ्यः सेवसितसयेत्यादिना मूर्धन्यादेशे परिषेवेतेत्येव साधु । ४२—सस्य रुत्वे अतो रोरप्लुतादित्युत्वे आद्गुणे एङः पदान्तात् इति पूर्वरूपे सोऽवश्यमिति साधु । ४३—पारस्करादित्वात्सुडागमः । सुट् कात्पूर्व इति परस्यादिर्भवति टित्त्वान्न तु पूर्वस्य । तेन सकारस्य पदान्तता नास्ति । तेन परस्कोटय इत्येव साधु । ४४—अवस्तब्ध इत्येव साधु । मूर्धन्यादेशे निमित्ताभावात् । ४५—विपूचिकेत्यत्र षत्वे शास्त्रं मृग्यम् । सुषामादित्वं वा कल्पनीयम् । ४६—प्रातःकल्पेत्येव साधु । सत्वविधौ अनव्ययस्येत्युक्तत्वात् । प्रातःशब्दश्चाव्ययम् । ४७—कुमति चेति नित्ये णत्वे पराकेणेति भवितव्यम् । ४८—तदहरिति तु न्याय्यम् । हेतुरधस्तादुक्तः । ४९—वाङ्मात्रेणेति वाच्यम् । मात्रचि प्रत्यये 'प्रत्यये भाषायां नित्यमिति' वचनान्नित्यमनुनासिकः । अवधारणवचने मात्रशब्दे च व्यवस्थितविभाषाविज्ञानात्सिद्धम् । ५०—अन्तर्यामिन इत्यदुष्टम् । प्रातिपदिकान्तेति सूत्रेण णत्वविकल्पविधानात् । ५१—इण्कोः, आदेशप्रत्यययोर् इति षत्वे हल्षु इत्येव साधु । ५२—एकाजुत्तरपदे ण इति नित्ये णत्वे प्रभूणामित्येव साधु । ५३—परस्लक्षेष्विति स्यात् । हेतुस्तु परःकोटय ( ४३ ) इत्यत्रोक्तः । ५४—सापराधक्षमापणमित्येव संस्कारवत् । णत्वस्य निर्बाधत्वात् । ५५—परिचायकाणीत्यत्र णत्वं दुर्लभम्, चकारेण व्यवधानात् । ५६—परांस्तारयेत् इत्येव साधु । नश्छव्यप्रशानिति हि नित्यो विधिः । ५७—अभिष्युरित्येव साधु । उपसर्गप्रादुर्भ्याम्—इति षत्वम् । ५८—मृन्मयानीत्येव संस्कृतम् । अनुनासिकस्यासिद्धत्वात् । ५९—'कृत्यचः' इति णत्वे परिहीणस्येत्येव साधु । ६०—इदुदुपधस्य चाप्रत्ययस्येति षत्वे निष्पक्षपातिनामिति भवितव्यम् । ६१—अभ्यषिचत् इत्येव प्रयोज्यम् । अडभ्यासव्यवायेऽपीति, उपसर्गात्सुनोतिसुवतीत्यादिना मूर्धन्यः । ६२—हन्तेरत्पूर्वस्येति पराहण्यते इति निर्दुष्टम् । ६३—हस्वात्तादौ तद्धिते इति बहिष्ट इति शब्दः,

वहिस्त इति चापशब्दः। ६४—परामर्शेनेति साधु। शकारेण व्यवधानाण्णत्वस्याप्राप्तेः। ६५—सूत्रवार्तिकानामित्येव साधु, तकारेण व्यवधानाण्णत्वस्याप्राप्तेः। ६६—आसिस्वादयिषयेति सर्वथाऽनवद्यम्। षत्वभूते सनि स्तौतिण्योरेवेति नियमेनाभ्यनुज्ञातं षत्वं सः स्विदिस्वदिसहीनां चेति सूत्रेण प्रतिषिध्यते। ६७—ङमो ह्रस्वादचि ङमुण्नित्यम् इत्यत्र नित्यशब्दोऽभीक्ष्णवचनः, यथा नित्यप्रहसितः, नित्यप्रजल्पित इत्यादिषु। तेनाभीक्ष्णं ङमुडागमो भवति, क्वचिन्नैव भवतीति सनाद्यन्ता इति सूत्रकारप्रयोगः साधुः। ६८—गगणमित्यपशब्द एवायम्, णत्वनिमित्ताभावात्। वस्तुतो वर्बरा एवं व्यवहरन्ति न त्वार्य्याः। गगने फाल्गुने फेने णत्वमिच्छन्ति बर्बरा इति वचनात्। ६९—प्राङ्गणे इति दुष्टः शब्दः। इजादेः सनुमः इति नियमात्। इजादेरेव सनुमो नान्यस्मादित्यर्थात्। ७०—ऋवर्णाच्चेति समानपद एव प्रवर्तत इति पदभेदे णत्वं दुर्लभम्। ७१—प्राक् सितादड्व्यवाये पीति सूर्धन्येऽध्यष्ठीयतेत्येव साधु। ७२—फाल्गुने इत्येव शब्दः, णत्वनिमित्ताभावात्। ७३—लोकानपीति साधु। ङमो ह्रस्वादित्यस्य प्राप्तिरेव न। नात्र नकारात्पूर्वो ह्रस्वः। ७४—प्रातरेवेति साधु। प्रातर् इति रकारान्तमव्ययम्। तेन रुत्वयत्वशाकल्यानामप्राप्तिः। ७५—पदव्यवायेऽपीति निषेधः पदव्यवायेऽतद्धिते इति वचनान्नेह प्रवर्तते। तेन प्रकृतेऽदोषः। ७६—दुः प्रयुक्तेति दुष्प्रयुक्तम्। इदुदुपधस्य चाप्रत्ययस्येति षकारविधानात्। ७७—अम्बाम्बगोभूमीत्यादिसूत्रेण मूर्धन्यादेशे भूमिष्ठ इत्येव साधु। ७८—'समासेऽङ्गुलेः सङ्गः' इति मूर्धन्यादेशेऽङ्गुलिषङ्ग इत्येव साधु। ७९—निस्पन्दमित्येव साधु। स्पदि ईषच्चलने इति धातुः। नात्र षत्वं शास्त्रदृष्टमित्युपेक्ष्यम्। ८०—सुः पूजायामिति कर्मप्रवचनीयत्वे सुस्थित इति साधु। पूजा चेह धात्वर्थस्तुतिरभिमता। साधु यथा स्यात्तथा स्थितः सुस्थित इत्युच्यते।

---

## विसर्गसन्ध्यधिकारस्तृतीयः।

१—परश्शतैरित्येव साधु। सुटः परस्थादिवद्भावात्सकारस्य पदान्तता नास्ति। तेन सकारस्य श्चुत्वेन शकारः। २—वहिष्प्रदेशे इत्येव साधु।

इदुदुपधस्य चाप्रत्ययस्येति त्रिसर्जनीयस्य षकारः । ३—निष्प्रमाथ इत्येव युक्तम् । पूर्वगत एव हेतुः । ४—नित्यं समासेऽनुत्तरपदस्थस्येति नित्ये षत्व आयुष्काम इत्येव न्याय्यम् । ५—मनःकार इत्यपपाठः । अतः कृकमिकंसेत्यादिना विसर्जनीयस्य सकारेण भवितव्यम् । ६—गव्य-सर्पिः पात्राणीति वाच्यम् । नित्यं समासे इति सूत्रेऽनुत्तरपदस्थस्येति पर्युदासात्षत्वं न । गव्यसर्पिरित्यत्र सर्पिरुत्तरपदम् । पात्त्राणीत्यत्र च द्वित्वं दुर्लभम् । दीर्घादाचार्याणामिति निषेधात् ७—सदसः पतय इत्येव निर्दुष्टं वचः । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु इति च्छन्दसि षष्ठीविसर्जनीयस्य सकारविधिर्न तु भाषायाम् । छन्दो वत्कवयः कुर्वन्तीति दुर्बलः समाधिः । ८—बहिष्कर्तुमित्येव युक्तम् । उपपत्तिस्तु बहुशः पूर्वत्र निर्दिष्टा । ९—कस्क इत्येव न्याय्यम् । कस्कादिषु चेति शास्त्रात् । १०—उभयतस्पाशेति साधु । अविहितलक्षण उपचारः कस्कादिषु द्रष्टव्य इति वृत्तिकारः । स्पश बाधनस्पर्शनयोरित्यस्माण्णे स्पाशेति बोत्तरपदम् । खर्परे शरि वा विशर्गलोप इति वा समाधानान्तरम् । ११—दुःखेनेत्यत्र इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वमभिषङ्क्न्ते । तत्र सुख दुःख तत्क्रियायामिति विसर्जनीयोपधो धातुः पठ्यते, तस्येदं रूपमित्येवं शरणदेवः समाधिं ब्रूते । १२—भोस्तातेति प्रयोगः । रोर्विसर्जनीये 'विसर्जनीयस्य सः' इति सकारः । १३—नमस्पुरसोर्गत्योरिति गतिसंज्ञस्य नमः शब्दस्य नित्यं विसर्जनीयस्य सः ।

---

## अथ सुप्सु नाम्नामधिकारः प्रथमः ।

१—प्रतिशब्दोऽव्ययम् । अव्ययादाप्सुप इति सुब्लुका भवितव्यम् । किं च प्रतिशब्दस्य नात्रार्थे शिष्टप्रयोगो दृष्टचर इति यत्नतस्तं परिहरेत् । तदेकं मे प्रहीयतामित्येव शोभनो न्यासः । २—एरनेकाचोऽसंयोगपूर्व-स्येति यणि सेनान्यमित्येव साधु । ३—सुहृद्वचनस्य मित्रशब्दस्य नित्य-नपुंसकत्वात्तद्विशेषणेन मायाविशब्देनापि नपुंसकेन भवितव्यम् । तेन स्वमोर्नपुंसकात् इत्यमो लुकि 'मायावि' इत्येव सुवचम् । ४—सुभ्र-

मित्यपशब्दः । अचिश्नुधातुभ्रुवामित्युवङि सुभ्रुवमित्येव शब्दः । ५—व्रश्चभ्रस्जेति सूत्रेण जकारस्य षत्वे जश्त्वे च विश्वसृडिति साधु । ६—प्राचि काले इत्येव साधु । अनिदितां हल इति नकारलोपः । उगिदचां सर्वनामस्थाने इति सर्वनामस्थान एव नुम्विधिः । ७—तत्पतेरिति वक्तव्यम् । पतिः समास एवेति घिसंज्ञा । ८—सुभ्रु इति संबुद्धौ भट्टिप्रयोगः । सुभ्रूरिति चेष्यते । अयमत्र समाधिर्जयमङ्गलायाम्—भ्रू शब्दात् अप्राणिजातेश्चारज्ज्वादीनामित्यूङ् । उवर्णान्तमात्रस्य विधानाद् बहुव्रीहिः, उपसर्जनत्वं च । पुनः स्त्रियामूङ् । अन्तादिवच्चेति पूर्वं प्रत्यन्तवत्त्वात् प्रातिपदिकत्वम् । अतः सम्बुद्धौ ह्रस्वत्वम् । ९—समासान्तो विधिरनित्य इति समासान्तो न कृतः । नित्यमपि च नुममकृत्वा अप्तृन्तृच्–इत्यादिनोपधाया दीर्घे पश्चान्नुमि रूपम् बह्वाम्पि तडागानीति केचिदिच्छन्तीति वृत्तिः । सति समासान्ते बह्वपानीति स्यात् । १०—न तिसृचतसृ इति दीर्घनिषेधे तिसृणामित्येव साधु । ११—सौ चेति नियमात्पूषणमित्येव साधु । १२—वेदशास्त्रमर्मणामित्येन न्याय्यम् । नोपधाया इति नामि दीर्घविधेः । १३—यवीयोभ्य इति तु युक्तम् । झल्येत् इत्यस्याप्राप्तेः । १४—ईदृशीत्येव साधु । नान्ताङ्गस्योपधाया दीर्घविधानात् । इह च शकारान्तमङ्गम् । १५—त्रिंशतेत्येकवचनं प्रयोक्तव्यम् । विंशतेः प्रभृत्या नवनवतेः संख्याशब्दाः स्वभावतः स्त्रियामेकत्वे वर्तन्ते । १६—अन्तादेशेऽनङि प्रथमैकवचने उशना इति निर्विसर्गकं रूपं भवति । १७—चतुष्पाद इति प्रथमाबहुवचने शुद्ध रूपम् । द्वितीयाबहुवचने भसंज्ञायां 'पादः पत्' इति पद्भावे चतुष्पद इति बाढं युज्यते । १८—लक्ष्मीशब्दे ईकार औणादिको न तु स्त्रीप्रत्ययः, तेन सुलोपासंभवः । लक्ष्मीरित्यभिधीयत इत्येवं वक्तव्यम् । १९—गुणवती इत्येव साधु । नुमोऽप्राप्तेः । २०—अनभ्युपेयुष इति तु द्वितीयायां युक्तम् । इष्यते चात्र प्रथमा । प्रथमाबहुवचने चानभ्युपेयिवांस इति भवति । २१—शक्यमिति सामान्योपक्रमे नपुंसकमेकवचनान्तं च साधु । तथा च काव्यालङ्कारवृत्तौ वामनसूत्रम्—शक्यमिति रूपं कर्माभिधायां विलिङ्गवचनस्यापि सामान्योपक्रमात् । तथा च श्रीरामायणे प्रयोगः—

शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः। कविभिश्चानेकत्र समादृतोऽयं व्यवहार इत्यस्य साधुत्वमनतिशङ्क्यम्। २२—चतुष्पदामित्येव साधु। उपपत्तिर्विस्पष्टा। २३—प्रत्यूषे इति वा प्रत्युषसि इति वा प्रयोज्यम्। २४—केवलस्य पतिशब्दस्य घिसंज्ञा नास्तीति सप्तम्यां पत्यावितीष्यते। नञ्समासो वाऽत्र द्रष्टव्यः। कुत्सितः पतिरपतिः। अप्राशस्त्ये नञ्। २५—सभासदामित्येव साधु। सभासद् इति दान्तं प्रातिपदिकम्। २६—प्रस्वमिति द्वितीयैकवचने साधु। ओः सुपीति यण्विधेः। २७—कैश्चनेत्येव युक्तम्। चनशब्दोऽव्ययम्, पृथक् पदं च। २८—'संख्याया विधार्थे धा' इति क्रियाप्रकारे धाप्रत्ययस्तद्धितः। तद्धितश्चासर्वविभक्तिरितीदमव्ययम्। तेन एकधेति साधु। अस्थाने चायं प्रयोग इति नादृत्यः। २९—विहाय इति सकारान्तं प्रातिपदिकं क्लीबपुंसोः। तेन विहायसीत्येव साधु। ३०—अङ्गाः कलिङ्गा इति चेष्यते। तस्य निवास इति चातुरर्थिकस्य जनपदे लुप् इति लुपि, लुपि युक्तवद् व्यक्तिवचने इति युक्तवद्भावात् प्रकृतिगते लिङ्गसंख्ये युज्येते। अङ्गानां निवासो जनपदोऽङ्गाः। ३१—पत्याविति तु युक्तम्। हेतुश्चोक्तपूर्वः। ३२—'अप्सराः' इति सकारान्तं साधु। अप्सर इति प्रातिपदिकं सकारान्तं न त्वाकारान्तम्। एकत्वे प्युत्तरत्रयमित्यमरवचनादेकवचनेप्यस्य प्रयोगः क्वाचित्कः। ३३—अल्पायुरित्येव साधु। समूहवचनो जातशब्दो नपुंसकम् इति तद्विशेषणेनापि नपुंसकेन भवितव्यम्। ३४—अधिगन्तु-मनस इत्येव साधु। बहुवचनं ह्यपेक्ष्यते। ३५—अर्वण इत्यपशब्दः। अर्वणस्त्रसावनञ इति त्रन्तादेशेन अर्वत इत्येव प्रयोज्यम्। ३६—बह्वत्र भ्रष्टम्। साधीयः पाठान्तरं च दृश्यते,—नदीनां शस्त्रपाणनां नखिनां शृङ्गिणां तथेति। तेनास्थाने प्रकृतसमाधानयत्नः। ३७—द्विपदान्, चतुष्पदान् इत्युभयमसाधु। असाधुत्वे हेतुरुक्तः पूर्वत्रेति नेहाम्रेड्यते। 'द्विपदः' 'चतुष्पदः' इति च प्रयोगार्हम्। ३८—निशिताभिः क्षुरधाराभिरिति वक्तव्यम्। धाराशब्दे ह्रस्वोऽवैधः। ३९—नपुंसके नभः स्पृशीति स्यात्। ४०—चातुरीभाग्भिरित्येव। ण्विप्रत्ययान्तो भाक् शब्दः। ४१—षड्भ्यो

लुक् इति जसो लुकि द्वादशेत्येव साधु। ४२—अरातिशब्द इकारान्तः, तेन षष्ठ्यामरातेरिति भवति। यतिशब्दश्च इकारान्त इन्नन्तश्च। तेन यतिन इत्यपि न दोषाय। ४३—नियतिः स्त्रीति तद्विशेषणेन निर्घृण-शब्देनापि स्त्रीलिङ्गेन भवितव्यम्। तेन संबुद्धौ निर्घृणे इति युज्यते रूपम्। ४४—तवैवास्मीति साधु। न चवाहाहैवयुक्ते इति एवयोगे युष्मदस्ते इत्यादेशो निषिध्यते। ४५—तन्त्रीरिति साधु। अत्र ईकार औणादिको न तु स्त्रीप्रत्ययः। तेन सुलोपाप्रसङ्गः ४६—ऊकारान्तस्तनूशब्दोऽप्यस्ति। अम्बार्थनद्योर्ह्रस्वः। ह्रस्वविधानसामर्थ्याद् गुणो न। समासान्तविधेरनित्यत्वाद् नद्यृतश्चेति कपि सुतनूक इति च न भवति। ४७—उशनसः संबुद्धावपि पक्षेऽनङ् इष्यते। न ङिसम्बुद्ध्योरिति नलोपप्रतिषेधोऽपि पक्ष इष्यते। तेन त्रैरूप्यं भवति। तथा चोक्तम्—सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् इति। ४८—हे क्रोष्टो इत्येव साधु। 'तृज्वत्क्रोष्टुः' इति सर्वनामस्थानेऽसम्बुद्धौ प्रवर्तते। ४९—गोप्त्रेति मित्रेणेत्येतद्विशिनष्टि। तेन गोप्तृणेति युज्यते। तृतीयादिषु भाषितपुंस्कं पुंवदित्यनेन पक्षे पुंवद्भावे गोप्त्रेत्यपि साधु।

---

## सर्वनाम्नामधिकारो द्वितीयः।

१—'एकतमस्मिन्' इति युक्तम्। सर्वादिगणे डतरडतमौ पठ्येते। २—एकतरात्प्रतिषेध इत्यद्डादेशनिषेधे एकतरमित्येव साधु। ३—अन्यान्यतरयोरेव सर्वादिगणे पाठात्सर्वनामसंज्ञा, न त्वन्यतमशब्दस्यापि, तेन अन्यतमायेत्येव वक्तव्यम्। ४—विश्वशब्दः सर्ववचनः सर्वनाम। जगत्यर्थे तूपचर्यते तात्पर्यतः। तेन विश्वस्मिन्निति वक्तव्यम्। ५—अन्वादेशाभावे एनामित्यस्य स्थाने एतामिति स्यात्। ६—आर्येतराणामिति द्वन्द्वो विवक्षितः, मिथः शब्दप्रयोगात्। द्वन्द्वे च सर्वनामसंज्ञानिषेध इति नाम्नि रूपं साधु। ७—अत्र आर्येतराणामिति पञ्चमी-

समासो विवक्ष्यते। तेन सर्वनामसंज्ञायां स्थितायाम् आर्येतरेषामिति साधु। ८—मन्त्रवर्णे किंशब्दः प्रश्नवचन इत्यव्याहता सर्वनामसंज्ञेति न कश्चिद्दोषः। ९—स्वमोरद्डादेशविधानाद् इतरदित्येव न्याय्यम्। १०—विश्वशब्दः सर्ववचन इत्युक्तमधस्तात्। तेन सर्वशब्दः सुपरिहरः। पर्यायवचनानां युगपदप्रयोगात्। ११—पश्चिमायामित्येव साधु। पश्चिमशब्दस्य सर्वादिगणे पाठाभावात्सर्वनामसंज्ञा नास्ति। १२—एताः को नामेत्यत्र एतच्छब्दोन्वादिष्टः। अन्वादेश एनादेशे सत्येना इति स्यात्। १३—एकस्मिन्नित्येव युक्तम्। १४—अपुरीति पर्युदासाद् अन्तरायामिति वक्तव्यम्। १५—प्रत्येकमित्यव्ययीभावे साधु। १६—जसि विभाषेत्युक्तम्। अप्राप्तविभाषा चेयम्। तेन षष्ठ्यां सर्वनामसंज्ञाया अभावाद् द्वयानामित्येव साधु। १७—उभयस्मादित्येव साधु। पूर्वादिषूभयशब्दो नान्तर्भवति। १८—अमुकमित्यव्युत्पन्नं प्रातिपदिकम्। १९—उत्तरस्या इति वक्तव्यम्। २०—अमरुशतकवचनमिदम्। भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वादिहान्वादेशो नास्ति। तेनादोषः। किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेश इत्युक्तत्वात्। २१—एनामिति तु न युक्तम्, अन्वादेशाभावात्। सकृदेवैतच्छब्द उपात्तः। २२—श्रीरामायण उत्तरकाण्डेऽयं प्रयोगः। वामित्यादेशं पाणिनीया न सहन्ते। युवामित्येव न्याय्यम्। २३—उभयशब्दस्यैकत्वे बहुत्वे च प्रयोगो नियत इत्येतस्या उभयजातेरिति वक्तव्यम्। २४—स्वात्ममान इति दुष्टम्। स्वात्मनोः पर्यायत्वाच्छक्यं नामैकतरं हातुम्। तथैव चोपन्यासः साधुर्भवति। २५—अज्ञातिधनाख्यायामिति पर्युदासाद्धनेर्थे सर्वनामसंज्ञा नेति नेह कश्चिद् दोषः। २६—सर्ववचनः समशब्दः सर्वनाम गणे पाठात्। तेन समे इति साधु। २७—मयकेति साधु। 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच्।

---

# अथ स्त्रीप्रत्ययेषु विवेचनम् ।

१—कृञो हेतुताच्छील्यानुलोम्येषु इति ट प्रत्यये टित्वान्ङीपि क्षोभकरीत्येव न्याय्यम् । २—केवलमामकभागधेयेत्यादिना संज्ञाछन्दसोर्ङीब्विधानाद् भाषायां प्रत्ययस्थात्कात्पूर्वस्य—इत्यत्र मामकनरकयोरुपसंख्यानमिति वचनाट्टापि इकारे च मामिकेति साधु । 'सविद्यो वाप्यविद्यो वा ब्राह्मणो मामकी तनुः' इत्यत्रापि सैव संस्कारच्युतिः । ३—जडाजडाश्रय इति षष्ठीसमासे पुंसि प्रयोग एवोचितः । आश्रयशब्दश्च एरच् इत्यजन्तः । घाजन्तश्चेति लिङ्गानुशासनेन पुंसि नियतः । ४—'मेघर्तिभयेषु कृञः' इति खचि प्रत्यये स्त्रियां टापि भयङ्करेति साधु । ५—स्थेशभासपिसकसो वरच् इति वरचि स्त्रियां टापि ईश्वरेति साधु । ६—शूर्पनखीति यौगिकः शब्दो न तु संज्ञा । शूर्प इव नखा यस्याः सा शूर्पनखी शूर्पनखा वा । स्वाङ्गाच्चोपसर्जनादसंयोगोपधाद् इति वा ङीष् । शूर्पणखेति तु संज्ञा । नखमुखात्संज्ञायामिति ङीषनिषेधः । पूर्वपदात्संज्ञायामग इति णत्वम् । ७—सहोदरीत्यत्र ङीष् दुर्लभः । न क्रोडादिबह्वच इत्यनेन प्रतिषिद्धो नासिकोदरौष्ठेत्यादिना प्रतिप्रसूतोपि सहनञ् विद्यमानपूर्वाच्चेति पुनः प्रतिषिध्यते । तेन टापि सहोदरेत्येव साधु । ८—अन्यतो ङीष् इत्यनेन ङीषि कल्माषीमिति साधु । ९—कञि प्रत्यये एतादृश्या इत्येव स्त्रियां ङीपि रूपम् । १०—ऋन्नेभ्यो ङीप् इति मन्त्रद्रष्ट्र्य इत्येव साधु । ११—विभाषा सपूर्वस्येति विकल्पेन नकारान्तादेशे ङीपि च गृहपतिः, गृहपत्नीति च रूपद्वयम् । १२—स्त्रीप्रत्ययविधौ तदन्तविधेरभ्यनुज्ञानात्कुमारशब्दवत्सुकुमारशब्दादपि वयसि प्रथमे इति ङीप् । सुकुमारशब्दश्च प्रादितत्पुरुषः, तेन कुमारशब्दोऽनुपसर्जनम् । वयोवचन एव सुकुमारशब्दः कोमलेर्थ उपचर्यत इति तत्त्वम् । १३—अन्तर्वत्पतिवतोर्नुक् इति जीवत्पत्यां पतिवत्नीतीष्यते । १४—वयसि चतुर्हायणीत्येव साधु । हायनो वयसि स्मृत इति दामहायनान्ताच्चेति वयस्येव ङीप् । त्रिचतुर्भ्यां हायनस्येति णत्वमपि वयस्येव । १५—पापेयं नापितीति साधु । केवलमामकभागधेय-

पापेत्यादिना संज्ञाछन्दसोरेव ङीविधानात्। १६—नित्यं सपत्न्यादिष्विति वीरपत्न्य इत्येव साधु। १७—टाबृचि इति त्रिपदेत्येव साधु। असाधुनी च त्रिपात् त्रिपदी चेति रूपे। १८—परभृता इति स्त्रियां बहुत्वे प्रयोगः। क्रियाशब्दविवक्षायां जातेरस्त्रीविषयादिति ङीष् न। १९—पादार्पितेक्षणा इति वह्वज्लक्षणे ङीष् प्रतिषेधे टापि सिद्धम्। २०—ऋन्नेभ्योङीप् इत्याम्नात्रीषु इत्येव साधु। पर्षच्छब्दो हि स्त्री। २१—शत्या इत्यत्र ङीप् दुर्घटः। शतकस्येति वक्तव्यम्, विशेषणलिङ्गविपरिणामश्च कार्यः। २२—ऋचेति साधु। आवन्ते व्यवहारो मृग्यः। २३—बहुव्रीहेश्चान्तोदात्तात्, पाणिगृहीत्यादीनामर्थविशेष इति शास्त्राभ्यां पाणिगृहीती इत्येव साधु। २४—विंशतिहायनेयमिति तु युक्तम्। हेतुरुक्तपूर्वः। २५—यूनीत्यपाणिनीयम्। 'यूनस्तिः' इति युवतिरित्येव भवति। २६—युवतीमित्यपशब्दः। तिरिति स्त्रीप्रत्ययः, तेन स्त्र्यर्थस्योक्तत्वादपरेण स्त्रीप्रत्ययेन नार्थः। विधायकं च नास्ति। २७—हरतेरनुद्यमनेऽच् इत्यचि स्त्रियां टापि धनहरेति भवितव्यम्। २८—श्रुतिगोचरीत्यशुद्धम्। श्रुतेर्गोचर इति श्रुतिगोचर इति षष्ठी समासः। गोचर शब्दश्च् गोचरसंचरेति सूत्रेण घप्रत्ययान्तः। घाजन्त इति लिङ्गानुशासनेन च घप्रत्ययान्तः पुंसि नियतः। २९—षिद्गौरादिभ्यश्चेति ङीषि सुन्दर्या इति साधु। ३०—पावनशब्दो ल्युडन्तः, तेन टित्त्वान्ङीपि पावनीति साधु। ३१—सरिते इति भागुरिमतेन आपि प्रत्यये समाधेयम्। ३२—चिरायुर्भूया इत्येव प्रयोगः। ङीप्ङीष्ङीनामप्राप्तेः। ३३—सम्पदादिभ्यः क्विप्, इति क्तिन्नपीष्यते इति च वार्तिकद्वयेन सम्पद्, विपद्, सम्पत्तिः, विपत्तिः, इति साधुरूपनिष्पत्तिः। अयं च क्विप् स्त्र्यधिकारोक्त इति भागुरिमतेनाप्यापोऽनवसरः। ३४—नैजशब्दोऽणन्तः। तेन नैजीमित्येव साधु। ३५—गुणवचनाद् गुरुशब्दाद् वोतोगुणवचनादिति ङीषि पश्चादर्थेन सह समासः। ३६—बह्वादिभ्यश्चेति विकल्पेन ङीपि पद्धतीति साधु। ३७—मदनदूतिमित्ययं प्रमादः। दूतशब्दाद् गौरादित्वान्ङीषि दूतीत्येव साधु। दूङ् परितापे इत्यस्मात् क्तिचि दूतिरिति केचित्। ३८—टप्रत्यये

समुत्सादकार्य इत्येव साधु टिल्लक्षणे ङीपि। ३९—चिरन्तन्यः, मृन्मय्य इत्येव साधू। पूर्वत्र ट्यु ल्प्रत्ययः, अपरत्र च मयट्। ४०—प्रकृतेरागता प्राकृती इति तु न्याय्यमणि तद्धिते स्त्रियां च ङीपि। ४१—श्रवणयुगली-त्यपशब्दः। युगलशब्दस्य गौरादिगणेऽपाठात्। श्रवणयुगलमित्येव तु शब्दः। ४२—सन्देहदोलाऽऽस्पदं यस्यास्तामिति बहुव्रीहिः। तस्य च विशेष्यनिघ्ने लिङ्गवचने इति स्त्रीलिङ्गता। ४३—शेमुषीमुषीमित्यत्र स्त्रीप्रत्ययो दुर्लभः। शेमुषीं मुष्णातीति शेमुषीमुट्। क्विप् चेति क्विप् प्रत्ययः। ४४—अशरण्यानां शरणमित्यर्थेऽशरण्यशरणमिति स्यात्। शरणशब्दस्याजहल्लिङ्गत्वात्। ४५—स्वभावादागत इत्यथ ठञि स्वाभा-विकमिति भवति। तेन स्त्रियां ङीपि स्वाभाविकीत्येव साध्वी शब्दाकृतिः। ४६—हृदयं धाम यस्या इति बहुव्रीहौ अन उपधालोपिनोऽन्यतरस्यामिति पक्षे ङीपि साधु। हृदयस्य धामेति षष्ठीसमासे तु हृदयधाम्ने इत्येव साधु। ४७—नवस्य नू त्नप्तनप्खाश्च प्रत्यया इति वार्तिकेन तन-प्रत्ययान्तो नूतनशब्दः। तेन स्त्रियां टापि नूतनास्विति भवितव्यम्। ४८—अभिलाषशब्दो घञन्तः। घञबन्त इति लिङ्गानुशासनेन पुंसि नियतः। तेन फलाभिलाष इत्येव न्याय्यम्। ४९—परिक्रमशब्दो घञन्तः। तेन पुंसि नियतः। अतः परिक्रमामिति हेयम्। ५०—कतिपयशब्दो ह्ययचि प्रत्यये पुगागमे च सिध्यतीत्याहुः। अयचि स्वतन्त्रे प्रत्यये स्त्रियां ङीब्दुर्लभ इति टापि कतिपयेति साधु। आधुनिका अभिधान-कृतस्तु स्त्रियां कतिपयीत्याहुः। तत्र प्रमाणं मृग्यम्। ५१—किंयत्तद्बहुष्वच् इत्यचि किङ्करा इति साधु। क्रियाशब्दोयम्। जातिवाचित्वे तु ङीषि किङ्कर्ये इति स्यादेव। ५२—दुःशासनः पुरःसरो यस्यास्तामिति विग्रहः। तेन पुरःसर शब्द उपसर्जनम्। टप्रत्ययान्तत्वे प्यनुपसर्जनादित्यधिकारादत्र टिल्लक्षणो ङीब्न। ५३—भीरुरित्यत्र ऊङ् उत इत्यूङ् मनुष्यजात्य-विवक्षायां न कृतः, तेनादोषः। ५४—संज्ञापूर्वको विधिरनित्य इति ह्रस्वस्य गुण इत्यस्याप्रवृत्तेः पीवरोरु इति संबुद्धौ साधु। ५५—भिक्षुणीति प्रमाद एवायम्। भिक्षु भिक्षुत्वं मयति प्राप्नोति इति मयतेः क्विपि, कृदिकाराद-

क्तिन इति ङीषि सिद्धमिति दुर्घटवृत्तिकारः । तद् वैयाकरणस्य व्यायाममात्रम् इति वयम् । ५६—सुधाया धर इति धरशब्दः पचाद्यजन्तः, तेन सुधाधराः, इत्येव साधु । ५७—ख्युलप्रत्यये इदानीन्तनीष्वित्येव साधु । ५८—डटि तमडागमे च स्त्रियां ङीपि विंशतितमीति साधु । ५९—चत्वारः पादा अस्या इति बहुव्रीहौ चतुष्पदी । पादो न्यतरस्यामिति ङीप् । पक्षे चतुष्पात् । ६०—उगितश्चेति ङीपि बहुश्रेयसीति साधु । ६१—त्रीणि सूत्राणि यस्या इति बहुव्रीहौ ङीब्दुर्लभः, त्रिसूत्रेति तु साधु । कथंचित् द्विगुसमाश्रये तु न दोषः । ६२—अणि तद्धिते स्त्रियां ङीपि आर्षीत्येव साधु । ६३—प्रमाणमित्यजहल्लिङ्गवचनम् । ६४—मात्रशब्दोऽवधारणे वर्तमानो नपुंसकम् । अत्रार्थे चेदं नित्यमेकत्वे व्यवह्रियते । तेन पुत्तलिकामात्रमित्येव साधु । ६५—इण्नशजिसर्तिभ्यः क्वरप् इति क्वरपि स्त्रियां ङीपि अविनश्वरीत्येव साधु । ६६—श्रुतिगोचर इत्येव साधु । श्रुतेर्गोचर इति विग्रहः । अस्य साधुत्वे हेतुः पूर्वमुक्तः । ६७—शततमीमपीत्येव साधु । डटि तमडागमे स्त्रियां ङीपि शततमीति रूपम् । ६८—शूद्रा चामहत्पूर्वा जातिरिति टापि शूद्रेत्येव साधु । पुंयोग एव शूद्रीति भवति । ६९—क्षीरपेत्येव साधु । टकोऽप्राप्तेः । आतोनुपसर्गे इति कः, ततष्टाप् । सुरापीति तु सुष्ठु । 'सुरासीध्वोः' इति वक्तव्याद् गापोष्टक् इति टक् । ततो ङीप् । ७०—पचादिषु चरट् इति निर्देशाट्टिल्लक्षणे ङीपि अनुचरीति साधु । एवं सहचरीत्यस्यापि साधुत्वं द्रष्टव्यम् । ७१—बाधेति भिदादेराकृतिगणत्वादङि टापि सिद्धम् । ७२—कोकिलेत्यजादिगणे पाठाट्टापि सिद्धम् ।

---

## अथ विभक्तिषु कारकविभक्त्यधिकारः प्रथमः ।

१—तेषामित्यसाधु । नलोकाव्ययेत्यादिना कृद्योगलक्षणायां षष्ठ्यां निषिद्धायामनुक्ते कर्तरि तृतीयया तैरित्येव वक्तव्यम् । २—अपवर्गे तृतीयेति तृतीयया परश्शतैरिति वाच्यम् । अपवर्गे तृतीया न कारकविभक्तिः ।

३—जगत इत्यस्थाने पञ्चमी। जगदिति द्वितीया तु युज्यते। जगदिति तरतेः कर्म। ४—तरतिः सकर्मकः पारगमने, प्लवने त्वकर्मकः। तेन परीक्षामुत्तीर्ण इत्येव साधु। ५—'अधीगर्थदयेषां कर्मणि' इति कर्मणः शेषत्व विवक्षायां षष्ठी विधीयते। तेन मयीत्यनुक्त्वा ममेति वक्तव्यम्। द्वितीया वा प्रयोक्तव्या। दयतिः सकर्मक इति सप्तम्या अनवकाशः। ६—कालाध्वनोरिति द्वितीयायां 'सर्वमायुः' इति साधु स्यात्। कालाध्वनोरिति विहिता द्वितीया न कारकविभक्तिः। सुकृतिभ्य इति च स्यात्। क्रुधद्रुहेर्ष्यासूयार्थानाम् इति सम्प्रदानतायां चतुर्थ्या भवितव्यम्। ७—मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमानेऽर्चितशब्दे क्तः। क्तस्य च वर्तमाने इति तद्योगे षष्ठ्या राज्ञामिति साधु। ८—त्रिचतुरैरिति वक्तव्यम्। अपवर्गे तृतीयाविधेः। ९—वाहानिति वक्तव्यम्। नीवह्योर्नेति निषेधो नियन्तृकर्तृकस्य न। तेन गत्यादि सूत्रेणाणौ कर्तुर्णौ कर्मत्वम्। १०—महात्मानं दर्शका इत्येवं वाच्यम्। 'अकेनोर्भविष्यदाधमर्ण्ययोः इति कृद्योगलक्षणायां षष्ठ्यां निषिद्धायामनुक्ते कर्मणि द्वितीया। ११—उपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रबलान्, दुष्टानिति च युक्तम्। प्रबलान् दुष्टाननुकूलयितुमित्यर्थविवक्षायां क्रियार्थोपपदस्य च कर्मणि स्थानिन इति वा चतुर्थी समाधेया। १२—अष्टाभिरध्यायैरित्येव साधु। हेतुरसकृदुक्तपूर्वः। १३—'प्रतिः प्रतिनिधिप्रतिदानयोः' इति प्रतिशब्दः कर्मप्रवचनीयः। प्रतिनिधिप्रतिदाने च यस्मात् इति कर्मप्रवचनीययुक्ते पञ्चमी। तेन चलाचलेभ्यः प्राणेभ्य इति स्यात्। चरिचलिपतिवदीनामित्यादिवार्तिकेनाचिप्रत्यये द्वित्वेऽभ्यासस्यागागमे चलाचल इति साधु। अत्राचलशब्द उत्तरपदमस्तीति मास्म शङ्किष्ठाः। १४—न ह्वयतिर्द्विकर्मकः, तेन सभां प्रतीति वक्तव्यम्। १५—भाव्य इति कृत्यप्रत्ययान्तम्। ओरावश्यके इति ण्यत्। भावे चायं प्रत्यय इत्यनुक्ते कर्तरि तृतीया, तेन नाशेनेति साधु। १६—क्तस्येन्विषयस्येति कर्मणि सप्तमीति व्याकरणे छन्दसीति चोभयं साधु। १७—एक करेणेति करणे तृतीया। तत्र सार्धमित्यनेन नार्थः। १८—न्यादिवाद्योर्नेत्यणौ कर्तुर्णौ कर्मत्वनिषेधात् शङ्करेणेति साधु।

१९—तेन भवितव्यमित्येव साधु। २०—चतुर्दश वर्षाणीत्यत्यन्तसंयोगे द्वितीयैव साध्वी। यद्यपि गमनक्रिया क्षणिका न चतुर्दश वर्षाण्यभिव्याप्नोति तथापि गमनक्रियात्र वासक्रियामन्तर्णयतीति प्रयोक्तुर्विवक्षा। तया च चतुर्दशवर्षव्याप्तिरस्त्येव। चतुर्दश वर्षाणि वत्स्यतीति वनं गच्छेदित्यभिप्रायः। एतज्जातीयकश्च प्रयोगो भारते—आत्मनो हि वयं दोषाद् विनष्टाः शाश्वतीः समाः (शा० प० ७।३२) इति। २१—पाठशालेति गमिक्रियान्तर्भूताया उद्दिशिक्रियायाः कर्मेति द्वितीयोपपन्ना। साक्षाद् गमिक्रियाकर्मत्वे तूक्ते कर्मणि प्रातिपदिकार्थमात्रे प्रथमा स्यात्। २२—मातेवेति प्रथमाऽनुपपन्ना। मातरमिवेति तु युक्तम्। २३—गत्यर्थानां धातूनां प्रयोगेऽधिकरणत्वमविवक्षित्वा करणत्वं विवक्षन्ति शिष्टाः। तेन पथा श्रेयसा प्रणीयेत्येवं वाग्व्यवहारोनुसृतो भवति। २४—घोरया निद्रयेति इत्थम्भूतलक्षणे इति तृतीया युक्ता। सप्तम्या नार्थः। आधारस्यासत्त्वात्। घोरं निद्राणाः शेरत इति प्रकारान्तरेण वा वक्तव्यम्। २५—श्रयतिः सकर्मकः। तेन परमात्मानं संश्रित इत्येव साधु। २६—कारकत्वस्यैवाविवक्षायां पुष्पाणामिति साधु। अपादानत्वस्याविवक्षायां कारकत्वस्य च विवक्षायाम् अकथितं चेतिकर्मसंज्ञायां तु द्वितीयैव युक्ता पुष्पाणीति। चिनुते इत्यवपूर्वः प्रयोक्तव्यः। २७—वैषयिकेधिकरणे द्विषत्सु, आगस्कृत्सु इति चेष्यते। २८—द्विष अप्रीतौ सकर्मकः, तेन कंचिदित्येव साधु। २९—तवेत्यस्य स्थानेऽनुक्ते कर्तरि तृतीयैव युक्ता। न लोकाव्ययनिष्ठेति कृद्योगलक्षणायाः षष्ठ्या निषेधात्। ३०—जगद्रूपेणेत्येव साधु। प्रकृत्यादिभ्य इति वा इत्थम्भूतलक्षणे इति वा तृतीयैव साध्वी। तथा च शिष्टप्रयोगः—पयो दधिभावेन परिणमते। ३१—नैनेन मुनिना भवितुं शक्यमित्येवं न्यासो युक्तः। शक्यमित्यपहाय शक्त इति वा प्रयोज्यमित्यृजुर्मार्गः। ३२—न लोकाव्ययनिष्ठेति सूत्रे इष्णुचोपि प्रयोगे निषेध इति वृत्तौ स्थितम्। तेनातपमिति द्वितीयान्तमेव साधु। ३३—उत्सवेन भवितुं शक्यमित्येवं साधू करणीयम्। ३४—पर्यादयो ग्लानाद्यर्थे चतुर्थ्योति समासविधानाल्लिङ्गाद् अध्ययनायेति वक्तव्यम्। ३५—सहोदरा इति

प्रथमान्तमेव न्याय्यम् । इवशब्दप्रयोग उपमानोपमेययोर्विभक्तिसाम्यमेवेष्टम् । उपमानं हि विशेषणान्नातिभिन्नम् । ३६—क्रुधद्रुहेति सूत्रेऽर्थग्रहणाद् दैवायेति सम्प्रदाने चतुर्थी साध्वी । ३७—द्विज इत्यधिकरणं विवक्षितम् । तेन सप्तम्यदुष्टा । सममब्राह्मणे दानमित्यत्र यथा । ३८—न लोकाव्ययनिष्ठेति सूत्रेण षष्ठीनिषेधाज्ज्ञनापवादान् उत्कोचानिति चोभयं साधु । ३९—क्रियार्थोपपदस्येत्यप्रयुज्यमानाया गमिक्रियायाः कर्मणि चतुर्थ्या सागरायेति साधु । सागरमुपगन्तुमित्यर्थः । ४०—अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीनिषेधेऽनुक्ते कर्मणि द्वितीयेति भगवन्तमिति साधु । ४१—कूपैः किं प्रयोजनमित्येवं न्यासो युक्तः । गम्यमानाऽपि क्रिया कारकविभक्तेः प्रयोजिकेति वामनवचनात् कूपैरिति करणतृतीयान्तं साधु । ४२—अधिकरणविवक्षायां चरणयोरिति साधु । ४३—देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति महीमिति साधु । ४४—प्रियशब्दः कप्रत्ययान्तः । कृद्योगलक्षणया षष्ठ्या एकस्य सर्वेषामिति च वक्तव्यम् । ४५—कादयो वर्णा विभागविषयः । स च विभागः पञ्चभिर्वर्गैरुपलक्षित इतीत्थम्भूतलक्षणे तृतीया युक्ता । ४६—निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिरिति वामनवचनाद् धर्म इत्येव साधु । ४७—अधिशीङ्—इत्यादिनाऽऽधारस्य कर्मसंज्ञायां सर्वप्रदेशान् इति साधु । ४८—गमनेन्तर्भवन्तीत्यधिकरणविवक्षैव नियता । ४९—अशिक्षिता इत्यजातशिक्षा इत्यर्थे इतचि तद्धिते तपः शब्दार्थे इति सप्तमी साध्वी । तपः शब्दार्थमशिक्षितवन्त इति वा वक्तव्यम् । ५०—अत्यन्तसंयोगे द्वितीया तु न्याय्या । तेन चिरकालायेत्यपशब्दः । ५१—भीत्रार्थानां भयहेतुरिति अनभिमतार्थोदयात् इति वक्तव्यम् । ५२—अधिकरणे शिवके सप्तमी युक्ता । ५३—यावान् इति ग्रन्थविशेषणत्वेनान्वेति, क्रियाविशेषणं चेष्यते । तेन यावदित्येव साधु । क्रियाविशेषणानां क्लीबत्वं कर्मत्वमेकत्वं चेष्यत इति द्वितीयैकवचनं साधु । ५४—संस्कृतेनेति तृतीयान्तमेव साधु । इत्थम्भूतलक्षणे प्रकृत्यादिभ्य इति वा तृतीया । ५५—त्रुटीरिति द्वितीयान्तमेव साधु । सूत्रमिह बोधनं उपचर्यते । तेन कर्मत्वमव्याहतम् ।

५६—रोचते दीप्यत इत्यर्थः। तेन रुच्यर्थानां प्रीयमाण इति सम्प्रदानता नेत्यस्येति षष्ठी साध्वी। ५७—क्तस्य च वर्तमाने इति लोकस्येति षष्ठ्यन्तं साधु। शक्यते इति शक विभाषितो मर्षणे इति दैवादिकस्योभयपदिनो लटि कर्तरि रूपम्। तेनाभ्युत्थानमिति प्रथमान्तं साधु। ५८—कर्मणि तव्यप्रत्यय इत्यभिहितत्वात्कर्मणि द्वितीया नोपपन्नेति चेत्। उच्यते—उद्दिश्येत्यध्याहार्यम्। तत्कर्मेदम्। पदसंस्कारे कर्मणोऽविवक्षायां भावे तव्यप्रत्ययः। उत्तरका कर्मसम्बन्धे द्वितीयेति कश्चित्। तन्न। षष्ठीप्रसङ्गात् इति दुर्घटवृत्तिकारः। ५९—अर्थान्प्रतीति वक्तव्यम्। कारकविभक्तेर्द्वितीयाया अप्रसङ्गात्। ६०—भावितात्मनः पुरुषस्येति वक्तव्यम्, प्रतिः कर्मप्रवचनीयो वा प्रयोक्तव्यः। भासतिह्यकर्मकः। ६१—अनुरज्यत इति कर्मकर्तरि लटि रूपम्। वैषयिकेधिकरणे स्वेष्विति वक्तव्यम्। ६२—आप्लृव्याप्तौ सकर्मकः। कर्माविवक्षायामर्थेष्वित्यधिकरणे सप्तमी सूपपन्ना। ६३—प्रतिपद्यते गच्छतीत्यर्थः। तेन जीवानित्यनभिहिते कर्मणि द्वितीयैव साध्वी। ६४—देशकालवस्तुभिरिति परिच्छेदक्रियाकरणे तृतीयैव युक्ता। ६५—विश्वरूपेणेति तृतीयान्तं साधु। उपपत्तिस्तु पूर्वमुदाहृता। ६६—'उपान्वध्याङ्वसः' इत्यधिपूर्वस्य वसेराधारस्य कर्मसंज्ञायां तदधिवासिनामित्युपपदसमासेन वक्तव्यम्। ६७—खलर्थप्रत्ययेन योगे षष्ठीनिषेधात्सर्वेषामिति न युक्तम्, सर्वैरिति तु युक्तम्। शैषिकी वा षष्ठी वेदितव्या। ६८—समस्तृतीयायुक्तात् (१।३।५४) इति लिङ्गात्तृतीयैव साध्वी। दुष्टेन वर्त्मनेति वक्तव्यम्। क्वचित्पथा संचरते घनानामिति कालिदासप्रयोगाच्च। ६९—औपनिषदैर्वचनैरिति कर्तर्यनुक्ते तृतीयया भवितव्यम्। उक्ते तु प्रथमा स्यात्—इदं ( कर्म ) औपनिषदानि वचनानि विरुन्धन्ति। ७०—अस्माकमिति शैषिकी षष्ठी। क्रियाग्रहणमपि कर्तव्यमित्यनेन तु सम्प्रदानताया नावकाश इत्यस्माकमित्येव साधु। ७१—हृक्रोरन्यतरस्यामित्यणौ कर्तुर्णौ कर्मत्वे संयतानिति साधु। वृतु वर्तनेऽकर्मकः, तत्प्रयोगेपि कर्मत्वं सुस्थम्। कुट्टेः पिषेश्च प्रयोगे तु कर्मत्वेऽसत्यनुक्ते कर्तरि तृतीयया भवितव्यम्। तेन संयतैरिति वक्तव्यम्।

तैरिति सर्वनाम्ना वा प्रत्यवमर्शः कार्यः। पुरोहितायेत्येव साधु। हेतुर्विस्पष्टः। ७३—शिष्टव्यवहारे दापिर्द्विकर्मको दृष्टः। प्रसिध्यन्ति च वितथेन ब्रुवन्दर्पाद् दाप्यः स्याद्द्विशतं दमम् (८।२७३॥) इत्यादयो मन्वादिप्रयोगाः। ७४—हाटकं रजतं वा मूर्तिनिर्माणे करणं न। तथापि प्रकृतिभूते तस्मिन्विकारं प्रति करणत्वेन विवक्षणात्तृतीया नाऽसंगता। अन्यत्रापि कर्मणि करणत्वविवक्षा दृश्यते। अश्वमेधेन यजत इत्यत्र यथा। ७५—करणतृतीयया चोरिकयेत्येव साधु। ७६—करणविवक्षायां कपटानृताभ्यामिति तृतीया निर्दुष्टा। ७७—अधीगर्थदयेशां कर्मणीत्यनेन शेषे षष्ठ्या समुत्कण्ठन्ते ममेति वक्तव्यम्। ७८—कृद्योगलक्षणया षष्ठ्या व्याकरणस्येति स्यात्। ७९—परिधापयतिप्रयोगेऽणौ कर्तुः कर्मत्वाभावे वध्वेत्यनुक्ते कर्तरि तृतीयैव साध्वी। संनिधाने अकर्मकोपि प्रयुज्यते इति ण्यन्ते कर्मत्वे वधूमिति साधु। तेन वध्वा नवे वाससी परिधाप्य तामित्यादिरुपन्यास आश्रेयः। ८०—आरुहिर्नित्यं सकर्मक इति स्कन्धमारोढुमित्येवं वक्तव्यम्। ८१—क्तेन योगे कृद्योगलक्षणायाः षष्ठ्या निषेधान्मूढधीभिरिति कर्तर्यनुक्ते तृतीयया भवितव्यम्। ८२—उत्तरतिः सकर्मक इति भवार्णवम् इत्येव साधु। ८३—'वारणार्थानामीप्सितः' इति तरुफलशातनादिति पञ्चम्येव न्याय्या। ८४—बालानां बालान्वेति साधु। हेतुस्तु पूर्वत्र विततं गदितः। ८५—अनुपूर्वः शीङ्स्वप्ने इति धातुः पश्चात्तापे वर्तमानः सकर्मकोऽकर्मकश्चापि दृष्टः। यथा दत्तमिष्टमपि नान्वशेत सः (माघे १४।४५)। पुरानुशेते तव चञ्चलं मन इति च किराते (८।८॥)। तेन नात्र कश्चिद् दोषः। ८६—न लोकाव्ययेति सूत्रेण रक्तमिति द्वितीयान्तं साधु। ८७—अणौ कुटुम्बिनो बालान् वियुञ्जते (त्यजन्तीत्यर्थः) इति वाक्यम्। णौ तु कुटुम्बिभिर्वियोजयन्तीत्यनुक्ते कर्तरि तृतीयैव साध्वी। अणौ वियुज्यन्ते इति चेत्कर्मकर्तरि प्रयोगः, न कश्चिद्दोषः। ८८—यं कामयते इत्येव साधु। स्पृहेरीप्सित इत्यत्रार्थग्रहणाभावात्। ८९—तस्मै वैरं निर्यातयतीति वक्तव्यम्। निर्यातनमिह प्रत्यर्पणे वर्तते। तथा च भारते प्रयोगः—निर्यात्य वैरं सफलं

सपुष्पं तस्मै नरेन्द्राधमपूरुषाय ( वन० १७६।१० )। ९०—असत्त्वरूपेण सत्त्वरूपेण चेति वक्तव्यम्। हेतुः पूर्वमसकृदुक्तः। ९१—क्रुधद्रुहोरुपसृष्टयोः कर्मेति तस्मा इत्यसाधु। तमिति प्रयुञ्जीत। ९२—प्राणिजातायेति सम्प्रदाने चतुर्थ्या भवितव्यम्। ९३—अधिकरणत्वेन विवक्षितत्वात्सिद्धमिति तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ( ५।१।४५ ) इति सूत्रे चतुर्थ्यर्थउपसंख्यानमिति वार्तिकं निराकुर्वता वृत्तिकृतोक्तम्। तेन प्राज्ञे जडे इति सप्तम्यौ साध्व्यौ। ९४—युष्मादृशेषु संभाव्यते इत्येव साधु। न हि युष्मादृशा अपादानम्। ९५—भीत्रार्थानां धातूनां प्रयोगे भयहेतोरपादानसंज्ञा विहिता। तेनात्र तदभावात्षष्ठ्यां न दोषः। पञ्चमी भयेनेति समासविधानाल्लिङ्गाच्च भयशब्दप्रयोगेऽप्यपादानता सूत्रकारस्येष्टेति ज्ञायते। तदत्र विद्वांसो निर्णयं ब्रुवन्तु। अपि नाम ज्ञापकसिद्धं न सर्वत्रेति समाधिर्युक्तः स्यात्। ९६—दापेर्द्विकर्मकत्वे बहुलाः शिष्टप्रयोगाः। पाणिनीये तु तन्नाभ्यनुज्ञातम्। पाणिनिमतेन तु विहत्र्रेति साधु स्यात्। ९७—प्रकुप्यसि मह्यमिति साधु। हेतुर्विस्पष्टः। ९८—स्त्रीणामिति द्वितीयार्थे षष्ठी सूत्रकारप्रयोगात्। ईर्ष्यामि सहे इत्यर्थाद् यं प्रति कोप इत्यस्य चाभावाद् भार्यामीर्ष्यतीति वद् द्वितीयैव साध्वी। ९९—न कंचिद्द्वेष्टि न स्निह्यति कस्मिंश्चिदिति शोभनो न्यासः। द्विषिः सकर्मकः स्निहिश्चाकर्मकः। कस्यचिदिति सम्बन्धषष्ठ्यामपि न दोषः। सप्तमी तु श्रेयसी। १००—प्रणिदधातिर्नित्यं सकर्मक इति मन इत्याद्यध्याहार्यम्। कामं प्रणिधानं केवलमपि मनःप्रणिधानमाह। १०१—दृशेश्चेति वार्तिकेनाणौ कर्तुः कर्मत्वे भारतमिति द्वितीयान्तं साधु। १०२—अत्यन्तसंयोगे द्वितीयैव साध्वीति मासत्रयमित्येव साधु। १०३—विद्वत्स्वनुरागीति सप्तम्येव साध्वी। १०४—भावकर्मणोरेव खलर्थाः प्रत्यया भवन्तीति कर्तर्यनुक्ते हिन्दुजात्या इत्येव साधु। १०५—महता परिमाणेनेति प्रकृत्यादित्वात्तृतीया युक्ता। १०६—क्तस्य च वर्तमाने इति पुराणकथानामित्येव साधु। १०७—परमेश्वरः सुमतिं प्रार्थनीय इत्येवं वक्तव्यम्। गौणे कर्मणि दुह्यादेरिति वचना-

त्प्रधानं कर्मानुक्तमिति सुमति शब्दे द्वितीया साध्वी। चतुर्थी तु नितान्तं दुरुपपादा। १०८—वाचयतिः शब्दकर्मा। स्वस्ति शब्दः कर्म। तेन ब्राह्मणानिति द्वितीयैव साध्वी। १०९—यवनेष्वित्यादि वक्तव्यम्। ११०—परमेश्वरं प्रतीत्यत्र प्रति शब्दस्त्याज्यः। परमेश्वरो हि प्रार्थयतेः कर्म। १११—चतुर्भिरङ्कै रित्यपवर्गे तृतीया तु न्याय्या। ११२—वेदादीन् ग्रन्थान् इति द्वितीया साध्वी। द्विषिः सकर्मकः। ११३—अनक्षरप्रायाणां भिक्षुकाणां विद्याया उपादित्सेति वक्तव्यम्। कर्मणि चेति कर्मणि षष्ठ्या समासनिषेधाद् विद्योपादित्सेति न युक्तम्। अकाकारयोः स्त्री-प्रत्यययोः प्रयोगे नेति उभयप्राप्तौ कर्मणीति नियमो न। तेन भिक्षुका-णामिति षष्ठी निरवद्या। गगन कुसुमेष्विति च वक्तव्यम्। ११४—भारत-वर्षीया बोधनीया भवन्तीत्ययमेव न्यासो निर्दुष्टः। भरतवर्षीया इति प्रयोज्यं कर्म। वाक्यार्थश्च प्राकृतं कर्म। ११५—सर्वनाशस्येति शेषे षष्ठी प्रयोज्या। सप्तम्या नार्थः ११६—भारत्यां प्रणयिन इति तु साधीयः। षष्ठ्यपि न वार्यते। ११७—लोकव्यवहारस्येति कृद्योगलक्षणा षष्ठीष्यते। ११८—क्तस्य च वर्तमाने इति लोकवृत्तान्तनामिति षष्ठ्येव साधुः। ११९—सा लक्ष्मीरुपकुरुते यया परेषामितिवदत्रापि कर्मणः शेषत्व-विवक्षायां भवन्ती पुराकालस्येत्यत्र षष्ठी न दोषाय। १२०—पिपठिषुभिरिति वक्तव्यम्। व्यक्तो हेतुः। १२१—नयतेः प्रयोगे लोका इति प्रधानं कर्म। सन्मार्गपथिकतेति च गौणम्। प्रधाने नीहृकृष्वहामिति नियमात्प्रधाने कर्मणि प्रत्ययः। तेन सन्मार्ग पथिकतां लोका नेतव्या इति निर्दुष्टं वचः। १२२—बाला इति कर्म। तच्च शक्यते इति प्रधानक्रियायाः कर्मवाचिन्याः कर्मेत्यङ्गीकारे शक्यन्ते पाठयितुं बाला इति वक्तव्यं स्यात्। अप्रधान-क्रिययानुक्तत्वेपि प्रधानक्रिययोक्तत्वात्। यथास्थितं भावे चेत्प्रत्ययः, न कश्चिद्दोषः। भावे तुमुन् इति तेनानुक्तत्वाद्‌बालानिति द्वितीया सूपपन्ना। १२३—छात्रान् शिक्षणीयेति साधु। १२४—परोपकारे नियुक्तचेतसामिति साधु। उपपत्तिर्विस्पष्टा। १२५—वानरा आहूय 'प्रेष्यन्तामिति न्यासो निर्दुष्टः। प्रेष्यन्तामिति प्रधानक्रियया कर्मण उक्तत्वाद् वानरा इति प्रथमान्तं

साधु। १२६—वाढं सखीजन आख्याताऽस्ति। उपयोगस्तु नास्ति। उपयोगो नियमपूर्वकं विद्याग्रहणमिति वृत्तावुक्तम्। तेनापादानत्वाभावे शेषे षष्ठ्येव साध्वी। १२७—सापराधाय अहिलाय शिष्यायेति वक्तव्यम्। १२८—अणौ मुखं भूमिं स्पृशतीति वाक्यम्। णौ स्पर्शस्य गतिविशेषत्वाद् गत्यादिसूत्रेण मुखमिति कर्मणि द्वितीया युक्ता। १२९—पूर्वजैरिति वक्तव्यम्। १३०—ज्ञानसामान्यार्थानामेव ( गत्यादि-सूत्रे ) ग्रहणं न तु तद्विशेषार्थानामिति दीक्षितमते तु स एव स्मारितोऽस्माभिरित्येवं न्यसनीयम्। उत्तरे रामचरितेऽयं प्रयोगः। १३१—अत्र जुगुप्सन्ते इति केवलायां निन्दायां प्रयुक्ति र्न तु निन्दापूर्विकायां निवृत्ता-वित्यपादानता नास्तीत्यवदातं वचः। १३२—होरा वह्वीरित्यत्यन्तसंयोगे द्वितीया प्रयोज्या। १३३—दिशं दिशं परीता (परिगता) इत्येवं वक्तव्यम्। गत्यर्थत्वात्कर्तरि क्तः। १३४—कल्पे कलितीत्येव साधु। क्तस्येन्विषयस्येति कर्मणि सप्तमी। १३५—पूर्वं श्रुतमनेनेति श्रुतपूर्वी। इनिस्तद्धितः। तं-नानुक्तत्वाद्भारतमिति कर्मणि द्वितीयान्तं साधु। १३६—अत्र वाक्ये सहानुभूतिरित्येकं पदम्। तेन कुटुम्बेन नास्य सहशब्दस्य योगः। तस्मात् क्रियाग्रहणमपि कर्तव्यमिति वार्तिकेन कुटुम्बायेति चतुर्थ्यन्तं साधु। १३७—उपपदविभक्तेः कारकविभक्तिर्बलीयसीति लोकायेति वक्तव्यम्। १३८—अन्वारोहणमित्येकं पदमिति कृद्योगलक्षणया षष्ठ्या पत्युरिति वक्तव्यम्। १३९—मूर्त्तिमता पापजातेनेति साधु। समुदस्थीयतेति भावे तप्रत्ययः। १४०—कर्मणोऽधिकरणत्वविवक्षायां चरणयोरिति सप्तमी साध्वी। १४१—अणौ गणकसुता चरणसेवां जहातीति वाक्यम्. णौ तु गणकसुतया चरणसेवां हापयति इति भवति। कर्मवाचिनि क्ते तु गणकसुतया चरणसेवा हापितेति साधु। १४२—वाचकेष्वति साधु। ईदृशे विषये चतुर्थ्या नाव-सरः। याच्ञा मोघा वरमधिगुणे इति मेघे कालिदासप्रयोगः। १४३—प्रजा-गरेणेति करणतृतीयान्तमेव साधु। काव्यशास्त्रविनोदेन कालो गच्छति धीमता-मित्यत्र यथा। १४४—संस्कृतभाषायां जनस्य (जनसामान्यस्य) कियाना-दर इत्येवं वक्तव्यम्। सर्वेषां साधारण इति सर्वसाधारणः। अनुक्तस्य

जन इत्यस्य विशेषणम्। सर्वसाधारण इति च नापेक्ष्यते। एवंलक्षणो हि जनो भवति। संस्कृतभाषा ह्यादरस्य विषय इति तत्र युक्ता सप्तमी। कस्यायमादर इत्याकाङ्क्षायां जनस्येत्युच्यते। १४६—दारिद्र्यदुःखदग्धेन देशेनेति हेतौ तृतीया प्रयोक्तव्या। १४७—धर्मं बलिमित्येव साधु। धर्मो बलित्वेन रूप्यते इति धर्मं बलिमिति व्यस्तरूपकेणाभिधाने रूप्यरूपकयोः सामानाधिकरण्यम्। १४८—अनुगत इति कर्तरि क्तः। भवतश्छायामिवानुगत इति वक्तव्यम्। भवत इति द्वितीयाबहुवचनान्तम्। १४९—तेनैव रागेण रक्ता इत्येवं वक्तव्यम्। तेन रक्तं रागात् (४।२।१) इति लिङ्गाद्रागस्य करणतेष्टा। रञ्जिता इत्यत्र व्यर्थो णिच् परिहार्यः। १५०—शक्येति भावे कृत्यः। तेन समृद्ध्या भवितुं शक्यम् इत्येवमुपन्यसनीयम्। १५१—शवादिभिः शवादिरूपेण वेति साधु। प्रकृत्यादित्वात्तृतीया। १५२—गाहू अवलोडने इति सकर्मको धातुः। तथा च कवीनां प्रयोगाः प्रथन्ते—सलिलमवगाढो मुनिजन इति स्वप्नवासवदत्तायाम्। पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्ड इति कुमारे। तेन सलिलमित्येव साधु। १५३—तरतेः सकर्मकत्वाद् अवतीर्णा निम्नगामित्येव साधु। १५४—यवनैर्ध्वति साधु। यवना हि संभावनाया आधारभूता विषयः। १५५—क्षीणतरेण स्वरेणेति प्रकृत्यादित्वाद् इत्थम्भूतलक्षणे वा तृतीया साध्वी विज्ञेया। १५६—त्वयेत्यनुक्ते कर्तरि तृतीयया भाव्यम्, क्तयोगे षष्ठीनिषेधात्। १५७—वर्तमानावस्थितिर्ह्यसन्तोषस्य विषय इति तत्र सप्तमी युक्ता। १५८—अपामिति षष्ठी व्यवहारानुगता। तथा च काशिकायां प्रयोगः—ओदनस्य पूर्णाश्छात्रा विकुर्वत इति। १५९—स्निह्यतिरकर्मकः, तत्प्रयोगे उपकारिणि इति सप्तमी युक्ता। प्रत्युपचिकीर्षति च तमिति वक्तव्यम्। १६०—वचः श्रद्दध्म इत्येव। वक्तरि तु पुरुषे द्वितीयाचतुर्थीसप्तम्यो दृश्यन्ते। श्रदस्मै धत्त स जनास इन्द्र इति चतुर्थ्या उदाहरणम् (ऋ० २।१२।५)। श्रत्ते दधामि प्रथमायेति च (ऋ० १०।१४७।१)। कारकत्वाविवक्षायां षष्ठ्यपि दृश्यते—यतो विवदमानयोराह्वाहमनुष्य्या चक्षुषाऽदर्शमिति तस्य श्रद्दधति.

(ऐ० ब्रा० २।४।३।) । १६१—विद्यायामिति वक्तव्यम् । १६२—मौहम्मद-शब्दात् सहार्थे तृतीया वा विषयसप्तमी वा प्रयोक्तव्या । १६३—अकेनोर्भ-विष्यदाधमर्ण्ययोरिति षष्ठीनिषेधे एधानाहारका इति वक्तव्यम् । एधाना-हरिष्याम इति प्रस्थिता इत्यर्थः । १६४—कृद्योगलक्षणा षष्ठी प्रयोक्तव्या । त्रयाणां वर्णानामिति । उपसर्गेऽप्युपपदे ताच्छील्ये णिनिर्भवतीति दीक्षितः । १६५—व्यवसायमाश्रितेति साधु । क्तयोगे षष्ठीनिषेधात् । १६६—केन वेति साधु । १६७—ईदृशेषु स्थलेषु प्रहरतेः प्रयोगे कर्मणोऽधिकरण-त्वविवक्षा लौकिकी प्रसिद्धेति सोमनाथमूर्ताविति वक्तव्यम् । अगृहीत-हेतिष्वशिक्षितो मे भुजः प्रहर्तुमिति हर्षचरिते । १६८—भारतवास्त-व्यानामिति शेषे षष्ठी साधुः । विषयसप्तमी वा प्रयोक्तव्या । १६९—भ्राता प्रश्नविषयो न । प्रतिशब्दप्रयोगे तु तथा ( विषय इति ) नियतं प्रतीयते । इष्यते च सामीपिकमधिकरणम् । तेन भ्रातरि प्रश्नानिति साधु । अस्ति भवत्सु मे प्रश्न इत्यस्य भवतः पृच्छामीत्यर्थः । १७०—इह प्रदानं परि-वर्तनोपलक्षितमिति तृतीयया भवितव्यम् । निमित्ते वा सप्तमी व्याख्येया । १७१—प्रह्रियेत प्रहृता भवेदिति कर्मकर्तरि प्रयोगे सहशब्दयोगे तृतीया साध्वी । शुद्धे कर्मणि तु सहशब्देन नार्थः । अनुक्ते कर्तरि तृतीययाऽ-भीष्टार्थावगतेः । १७२—हेतौ तृतीयापञ्चम्यौ साधू स्याताम् इति स्वार्थ-परतया स्वार्थपरतायां त्रे त्यादि वक्तव्यम् । प्रकृते तादर्थ्यं नास्तीति चतुर्थी दुर्लभा । १७३—अभ्यस्ता इत्यत्र कर्तरि क्तो दुर्लभः । शिष्टानुग्रहाभावात् । सकर्मकश्चाभिपूर्वोऽसिः । तेन पद्यगुम्फनमभ्यस्तवन्त इत्यादि वक्तव्यम् । १७४—त्वां शरणमित्येव । शरणं रक्षितारमाह न तु रक्षाम् । १७५—मास-मवकाशमित्येव । अत्यन्तसंयोगे द्वितीया । १७६—उपनिषत्स्वन्तर्निविष्ट इत्येव । एष व्यवहारः । १७७—उपयोगं नीयन्त इति नयते द्विकर्मक-त्वान्नियता वाक्सरणिः । १७८—वियुक्ता इत्यत्र कर्मकर्तरि क्ते चरितादिति पञ्चमी साध्वी । शुद्धे कर्मणि तु क्तेऽनुक्ते कर्तरि तृतीयया चरितेनेति स्यात् । १७९—कुमारकुलटासु बन्धनाधारभूतास्विति सप्तमी साधुः । १८०—पुस्तक-भारवहनेनेति हेतौ तृतीया प्रयोक्तव्या । हेतुविवक्षा चात्र व्यवस्थिता

शिष्टानामिति यत्र तत्र तत्प्रयोगाः प्रमाणम्। १८१—विरुद्ध इत्यत्र कर्तरि क्तो दुर्लभः। साम्प्रतिकैरेतैर्व्यवहारैः समं विरोधवानित्येवमुपन्यासः कार्यः। १८२—पदातयः ( सन्तः ) इति प्रथमाबहुवचनं प्रयोक्तव्यम्। स्वयं ह स्थेन याति, उपाध्यायं च पदातिं गमयतीति काशिकायां प्रयोगः। १८३—सूक्ष्मेक्षिकया सर्वज्ञकल्पतया चेति हेतुतृतीयया वक्तव्यम्। १८४—वारणार्थानमीप्सित इति परापवादसस्येभ्य इति पञ्चम्या निर्देशः साधुः। भवति च पाठान्तरम्—परापवादसस्येभ्यो गौश्चरन्ती निवार्यतामिति। १८५—देवदेवमित्यत्र द्वितीयाऽनुपपन्ना। नहि ग्राहिर्द्विकर्मकः। कालिदासोप्यन्यत्र रघुवंशे जायाप्रतिग्राहित गन्धमाल्यामित्यत्रास्य द्विकर्मकतां नेच्छति। तेन स्थितस्य गतिश्चिन्तनीयेति ग्राहयितुमुद्ग्राह्यत्वेन बोधयितुमित्यर्थस्य विवक्षणात् समाधिमाहुः। १८६—अत्र गत्युपसर्जना प्राप्तिर्लभेरर्थः। तेन गत्यादिसूत्रेणाणौ कर्तुर्णौ कर्मत्वं न। सितिमा सितं मुनेर्वपुर्लभत इत्यणौ वाक्यम्। १८७—क्रियाग्रहणमपि कर्तव्यमिति सम्प्रदानसंज्ञायां चतुर्थी न्याय्या। १८८—गत्यर्थत्वाभावात्तैरित्यत्र कर्मसंज्ञा नेति मल्लिनाथः। तन्न संगच्छते। क्रमेर्गत्यर्थत्वस्यापह्नवायोगात्। प्रकृते प्रवेशयामासेत्यर्थः। स च न गतिव्यतिरिक्तः। इदं च निरस्तसमस्तदोषं पाठान्तरं दृश्यते—स तानाक्रमयामास शुद्धान्तं शुद्धकर्मण इति। १८९—उत्तरभारत इत्येव साधु। अवधिभावात्। १९०—तान्पाययन्तीत्येव साधु, प्रत्यवसानार्थत्वात्पिबतेः। १९१—प्रतिभापरीक्षायै निकष इति साधु। तादर्थ्ये चतुर्थी। १९२—अन्येषां सम्राजामित्यत्र षष्ठी सुतरामनुपपन्ना। उपमानोपमेययोः सामानाधिकरण्यस्य नियमात्। वस्तुतस्त्वत्र क्रियातौल्ये वतिः प्रयोक्तव्यः। अन्यसम्राड्वदिति। विषयोपभोगेनेति च वक्तव्यम्। १९३—सर्वेषामिति साधु। इह सहार्थो नाम कश्चिन्नास्ति, येन तृतीया प्राप्नुयात्। १९४—कौसल्यायां सुमित्रायामिति च वक्तव्यम्। अधिकरणत्वाविवक्षैवात्र लौकिकी प्रसिद्धेति सप्तम्येव व्यवहारानुगता। १९५—विदितचरमित्यत्र भूतपूर्वे चरट्। तेन वर्तमानार्थता नास्ति। चरट् च तद्धित इति क्तेन कृत्प्रत्ययेन भवच्छब्दस्य साक्षाद्योगोपि नास्तीति

षष्ठ्यप्राप्तेरनुक्ते कर्तरि तृतीयैव साध्वी। १९६—अत्र भट्टिप्रयोगे फलशब्दे तद्विशेषणेषु च षष्ठी व्यवहारानुपातिनी स्यात्। पूरणगुणसुहितार्थेति सूत्रे सुहितार्थग्रहणाज्ज्ञिज्ञात्तद्योगे वाक्ये षष्ठ्येव साध्वीति वाग्योगविदः। १९७—विद्यादित्यस्य कर्मत्वे त्वङ्कितमिति साधु स्यात्। भवतीत्यध्याहार्यम्, एष इति विभक्तिविपरिणामश्च कार्यः। १९८—असाम्प्रतमिति निपातेनाभिहितत्वाद् विषवृक्षे कर्मणि कर्मविभक्तिर्न। १९९—मन्य इत्यस्य धातुर्विभाषित इति वाक्यार्थः कर्म। न तु धातुः। द्वितीया च ङ्याप्प्रातिपदिकाद्विधीयते इति तदप्राप्तिः स्फुटा। २००—भुज्यत इति प्रधानक्रिययोक्तत्वाद् ओदने द्वितीया न। २०१—कर्मणि द्वितीयेति सूत्रम्। तस्येदमनुकरणं वृत्तौ। अनुकार्यानुकरणयोरभेदविवक्षायामर्थवत्त्वाभावात्प्रातिपदिकत्वासत्त्वाद् द्वितीयाशब्दादनुक्ते कर्मणि द्वितीया न। २०२—कर्मणः शेषत्वविवक्षायां षष्ठी स्थाने। २०३—पुराविद इत्यस्मादनन्तरमिति शब्दो द्रष्टव्य इति दुर्घटवृत्तिः। २०४—भीमविक्रमाःकपयो रुजः कर्तार इति भाववचनत्वाभावाद्रावणस्येत्यत्र षष्ठी दुर्लभा। २०५—अनुकाभिकाभीकाः कमितेति कर्तरि कन्प्रत्ययान्ता निपात्यन्ते। कना कर्मणो नुक्तत्वात्तत्र द्वितीयैव साध्वी। तथा च पदमञ्जरीकार उदाहरति—अनुको भार्याम्। अभिको दासीमिति। २०६—शितिकण्ठायेत्यत्र क्रियाग्रहणमपि कर्तव्यमिति चतुर्थी सूपपन्ना। २०७—उपपदविभक्तेः कारकविभक्तिर्बलीयसीति कारकविभक्तिर्द्वितीयेति मुनित्रयमिति साधु। २०८—इत्थम्भूतलक्षणे तृतीयेति प्राणैरित्यादि साधु। प्राणैः कण्ठगतैरुपलक्षित इत्यर्थः। २०९—हिंसावृत्त्येति तृतीयैवानुक्ते कर्तरि साध्वी। त्यक्ता हीना इत्यर्थः। २१०—मुच्यत इति कर्मकर्तरि लट्। मुक्तो भवतीत्यर्थः। अवधिभावाकाङ्क्षायां सर्वपापेभ्य इति पञ्चमी। २११—अत्र मुच्यत इति शुद्धे कर्मणि लटि रूपम्। तेन पापैरित्यत्रानुक्ते कर्तरि तृतीया साधुः। २१२—अनोर्लक्षणेत्थम्भूतेति सूत्रेण कर्मप्रवचनीयत्वं तद्योगे प्रजेशानिति साधु। तेभ्यो द्रुह्यन्निति च वक्तव्यम्। २१३—यमीष्टे यस्य वेति वक्तव्यम्। ईशेः सकर्मकत्वात्। पक्षेऽधीगर्थदयेशां कर्मणीति

शेषत्वविवक्षायां षष्ठी। २१४—धात्रीवेषेणेति प्रकृत्यादित्वाद् इत्थम्भूत-लक्षणे वा तृतीयया भवितव्यम्। २१५—निद्राया इत्यत्र पञ्चमी दुरुपपादा। ल्यब्लोपे कर्मणीति चेन्न। अर्थासंगतेः। निद्रां परित्यज्य प्रबुद्धा इति नार्थवद्वचः। निद्रापरित्यागस्य प्रबोधस्य चाविशेषात्। तेन निद्रितप्रबुद्धाः सुप्तप्रबुद्धा इति वा भङ्ग्यन्तरेण वक्तव्यम्। २१६—बहुधनस्य व्ययं करोतीति वा बहुधनं व्यययतीति वा साधु। व्यय वित्तसमुत्सर्गे इति चुरादिषु पठ्यते। २१७—मयेत्यस्थाने करणतृतीया। विवक्षाविरोधात्। किं मां करिष्यतीत्येव शिष्टैरादृतः प्रकारः। तथा च भारते प्रयोगः—क्रुद्धः किं मां करिष्यति ( वन० २०६।२४ )। २१८—निद्रयेति तृतीया दुर्लभा। उन्निद्र ( विनिद्र ) इवाभूत्, अजागरीदिवेति वा वक्तव्यम्। २१९—कर्णाटानित्येव साधु। यस्मात् कर्णाटास्तस्य शरणम्। २२०—लघुवेतनेनैवेति वक्तव्यम्। २२१—यस्मिन्निति वैषयिकी सप्तमी युज्यते। २२२—आदिश्याद्योर्नेति निषेधात्तनूजेनेति वक्तव्यम्। २२३—पीत-वेषेणेति करणे तृतीया स्यात्, सिध्यतीति क्रियापदमत्र गम्यते। विभाषा गुणेऽस्त्रियामित्यत्र विभाषेति योगविभागाद्वा हेतौ पञ्चमी समाधेया। २२४—संस्कृतस्येति षष्ठी साध्वी, कृद्योगलक्षणा शैषिकी वा। २२५—अवन्त्या इति यदि षष्ठी तदा दोषः, न ह्यवटो नामावन्तेर्भिन्नः कश्चिदर्थोऽस्ति। यदि च पञ्चमी तदाऽदोषः। अवन्त्यवटयोः सामानाधिकरण्यं ह्यभीष्यते। २२६—रजकायेति भाष्यकारमतेन साधु। स हि भगवा-न्ददातिकर्मणाऽभिसम्बध्यमानमात्रस्य सम्प्रदानतामिच्छति। न तु स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनस्यैव। २२७—इदमनवद्यम्। उक्तो हेतुः २२८—जनिकर्तुः प्रकृतिरिति सूत्रे प्रकृतिशब्देन कारणमात्रस्य ग्रहणं न तूपादानकारणस्यैवेति न्यासकारमतम्। तन्मतेन पुत्रादिति पञ्चमी साध्वी। २२९—हृदयेष्विति सप्तम्येव साध्वी, अवधिभावानु-पपत्तेः। २३०—रूपान्तरेणेति साधु। उक्तो हेतुः। रूपान्तरं गत इति वा वक्तव्यम्। २३१—परीक्षोपयोगिनो लेखानिति साधु। उपेक्षतेः सकर्मकत्वात्। २३२—दैवतार्चामिति कर्मणि द्वितीया प्रयोज्या। हसतेः

सकर्मकत्वात्। तथा च मेघदूते कविकुलपतेः प्रयोगः—गौरीवक्त्र-भ्रुकुटिरचनां या विहस्येव फेनैः। २३३—मन्दिरप्रवेशात् इति वारणार्थानामिति पञ्चमी युक्ता। २३४—वरे (सविशेषणे) ऽधिकरणे सप्तम्येव युक्ता, तादर्थ्याभावाच्चतुर्थी तु न। २३५—अत्र गायतिः शब्दकर्मा न, शब्द-क्रियोस्तीति देवर्षिणेति तृतीया निर्दुष्टा। २३६—अत्र जयोदाहरणं जय-प्रख्यापकः प्रबन्धविशेष इति गायतिः शब्दकर्मक इति गत्यादिसूत्रेणाणौ कर्तुर्णौ कर्मत्वे किन्नरानिति द्वितीया सूपपन्ना। २३७—भोजनेनेति हेतौ तृतीया प्रयोक्तव्या। तथा च व्यवहारः[1]। २३८—विष्लृ व्याप्ताविति धातुः परिपूर्वो भोजनायां वर्तते स्वार्थपुरस्कारेण, न केवलः। भोजनेन कश्चिद्भोज्यः परिविष्यते न तु तस्य भोजनं परिविष्यते। प्रकृते प्रयोगो धात्वर्थाज्ञान-मूलकः। तेन ब्राह्मणान् भोजनेन परिवेविषातामिति वक्तव्यम्[2]। २३९—क्षेत्रं कृषति हलेनेति वक्तव्यम्। प्रचरद्भाषया हृतमना अन्यथा प्रयुङ्क्ते। २४०—भाष्यकारप्रयोगात् कर्मणो धिकरणत्वविवक्षया पितरीत्यादि साधु। २४१—अत्र प्रवेशोत्तरा स्थितिर्विवक्षितेत्याधारे सप्तमी युक्ता। २४२—आस्वादयितुमित्यस्य पाययितुमित्यर्थ इति प्रत्यवसानार्थत्वाद् गत्यादिसूत्रेण वाचकानिति द्वितीया साध्वी। २४३—शक्य इति भावे कृत्यः। तेन सन्देहेन भवितुं शक्यमिति वक्तव्यम्। भावश्च क्रिया, तेन नपुंसकत्वम्। २४४—त्राता हन्तेति च तृन्प्रत्ययान्ते पदे। तेन न लोकाव्ययेत्यादिना षष्ठीनिषेधाद् द्वितीया। २४५—एतस्यामिति निमित्ते सप्तमी साध्वी। २४६—ममेति कर्मणोऽविवक्षायां शेषे षष्ठी साध्वी। २४७—आखेटमुद्दिश्येति क्रियान्तराध्याहारेण समाधेयम्। २४८—आलाने वल्गासु चेत्युभयत्र सप्तमी व्यवहारानुगता। गृहीत इव केशेषु मृत्युना धर्ममाचरेदित्यत्र यथा। अनुगृह्णाति चात्राधिकरणविवक्षां भगवान्सूत्र-कारो यदाह तत्र तेनेदमिति सरूपे। २४९—पृष्ठे इत्यादिषु पूर्वोक्तानुसारेणैवाधिकरणविवक्षा। गृहीत्वेति च सर्वत्र शेषो बोध्यः। २५०—समवैति

---

१ विस्तरस्तु भूमिकायां द्रष्टव्यः। २ अत्रार्थे शिष्टप्रयोगा भूमिकायां द्रष्टव्याः।

आगत्य तदेकदेशी भवतीत्यर्थः। तेनाधिकरणविवक्षा युक्ता। अत्राह पदमञ्जरीकारः—गुणभूतसमागमापेक्षया समवायानिति द्वितीयानिर्देशः। लोके तु प्रायेण सप्तमी प्रयुज्यते द्रव्ये गुणाः समवयन्तीति। २५१—इदं साधु। उक्तो हेतुः।

## उपपदविभक्त्यधिकारो द्वितीयः।

१—अन्तरान्तरेण युक्ते इति ध्रुवाविति द्वितीया युक्ता। ध्रुवेरित्यपपाठः। २—बहिर्योगेऽपपरिबहिरञ्चवः पञ्चम्या इति सूत्रज्ञापिता पञ्चमी प्रायेण दृश्यते। ज्ञापकसिद्धं न सर्वत्रेति क्वचिन्नेति करस्येति षष्ठी समाधेया। ३—समुद्रादिति दिक्छब्दयोगलक्षणा पञ्चमी प्रयोक्तव्या। उत्तरं दक्षिणम् इत्यत्र नपुंसकत्वमपि दुःखाकरम्। एवं तर्हि पाठः परिवर्तनीयः—उत्तरो यः समुद्राच्च हिमाद्रेश्चैव दक्षिण इत्यादि। ४—अभितः परित इत्यादिवचनेन परितोयोगे द्वितीयैव साध्वीति दुष्कृत इति वाच्यम्। ५—प्रसादनमिति वक्तव्यम्। अन्तरेणेत्यस्य स्थानेऽन्यत्रेति वा प्रयोक्तव्यम्। ६—भातिरकर्मक इति ममेति वक्तव्यम्। ७—अत्र द्वितीयाऽपाणिनीया। कातन्त्रकारस्तु ऋतेयोगे द्वितीयेत्यसुसूत्रत् इति तन्मतेन साधु। ८—अभिरभागे इति भागेर्थेऽवस्थितोपसर्गसंज्ञा। तेन कर्मप्रवचनीयत्वाभावात्तन्निमित्ता द्वितीया नोपपद्यते। उपसर्गनिमित्तं षत्वं चोपपद्यते। तेन ममाभिष्यादिति वक्तव्यम्। ९—उभसर्वतसोः कार्येति वचनाद् धिग्योगे द्वितीया युक्तेति वीर्यमित्येव साधु। १०—प्रकाशादेरन्यद् इति पञ्चम्येवान्याराद् इति सूत्रविहिता युक्ता। ११—पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् इति पृथग्योगे पक्षे पञ्चमी साध्वी। १२—उपपदविभक्तेः कारकविभक्तिर्बलीयसीति सम्प्रदाने चतुर्थी प्रयोज्या, प्रतिशब्दश्च त्याज्यः। १३—अध इत्यस्तास्तेरर्थेऽसिप्रत्ययान्तः। तद्योगे षष्ठ्यतसर्थप्रत्ययेनेति षष्ठ्येव युक्ता न पञ्चमी। १४—उपरीति उपर्युपरिष्टात् (५।३।३१) इत्यस्तातेरर्थे निपातितम्। तेनात्रापि षष्ठ्येव

युक्ता । जान्वोः, जानुनोरिति वा वक्तव्यम् । १५—ततोन्यत्रापि दृश्यत इति दृशिग्रहणस्य प्रयोगानुसारित्वात्प्रतिभातियोगे द्वितीया । भातिना युक्त एव प्रतिः सर्वत्र दृश्यते न चायुक्तो व्यवहितो वेति नायं स्वतन्त्रोनुपसर्गो निपातो न वा कर्मप्रवचनीयः । यथा न साम्परायः प्रतिभाति बालम् इति कठोपनिषदि । त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभाविति च निरुक्ते । १६—विसंवादो भेदः । तेन अन्यारादिति सूत्रेण विम्बशब्दात्पञ्चमी युक्ता । १७—दन्तमूलस्येति साधु । उक्तो हेतुः । १८—ताम्प्रतीति वक्तव्यम् । १९—सदृशार्थैस्तुलोपमाभ्यां तृतीयाऽन्यतरस्यामित्यत्रोपमातुलाशब्दौ सदृशपर्यायौ पर्युदस्तौ । सादृश्यार्थे वर्तमानयोस्तयोर्योगे तृतीया स्यादेवेति सर्वमनवद्यम् । २०—पश्चादित्यस्तातेरर्थे निपातितम् । षष्ठ्यतसर्थप्रत्ययेनेति तद्योगे षष्ठ्येव न्याय्या । २१—लक्षणेत्थम्भूताख्यानेत्यादि सूत्रेणानोः कर्मप्रवचनीयता । कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीया । २२—अतसर्थप्रत्ययेन योगाद् विद्याशालस्येति वक्तव्यम् । २३—प्रभवतेरलमर्थत्वात्स्रष्टये इति साधु । २४—समासगतेनापि हितशब्देन देवदत्तस्य योगोऽस्तीति चतुर्थी नानुपपन्ना । २५—राजमार्गमुभयत इति वक्तव्यम् । तेष्वित्यत्र स्वामीश्वराधिपतिदायादेत्यादिना स्वामिशब्दयोगे सप्तमी साध्वी । २६—दन्तानिति द्वितीया साध्वी । उक्तो हेतुः । २७—पूर्वसदृशसमोनार्थेत्यादिना समाससूत्रेण ऊनार्थयोगे तृतीया ज्ञापिता, तेन शिरोरेखयेति वक्तव्यम् । २८—प्रस्थानादुत्तरमित्येव साधु । दिक्छब्दयोगलक्षणया पञ्चम्या भाव्यम् । २९—न हि धापयतिर्द्विकर्मकः । गत्यादिसूत्रस्याप्रवृत्तेः । तेन विदेशात् प्रत्यागतेन सुतेन मुक्ताहारं धापयत्यम्बेति युक्तो न्यासः । इदं वाक्यं कारकविभक्त्यधिकारे निवेशमर्हतीति स्थानात्प्रच्युतं ज्ञेयम् । ३०—प्रणाममनु इति वक्तव्यम् । अनोः कर्मप्रवचनीयत्वं लक्षणेत्थम्भूतेत्यादिसूत्रेण । ३१—अत्रोत्तरार्द्धे साहचर्यस्यानभिप्रेतत्वाच्छात्रेण सहेत्ययुक्तो न्यासः । नैकस्मिंश्छात्रे इति विषयसप्तमी प्रयोक्तव्या । ३२—सुताभिरित्यत्र सहार्थे तृतीया शक्योपपादयितुम् । सप्तमी

वाऽऽश्रेया। ३३—सिंहासनस्याध इति वक्तव्यम्। अस्तातेरर्थेऽसि प्रत्ययान्तोऽधः शब्दः। ३४—हायोगेष्वपि दृश्यत इति कष्टमित्यत्र द्वितीया। ३५—हाशब्दोऽयं शोकवचनः। तेन कान्तारे पित्रादिः सम्बोध्यते। तत्र सम्बोधनप्रथमायां प्राप्तायां हायोगेष्वपीत्यस्यारम्भेऽपिशब्दस्य व्यभिचारार्थत्वात्सम्बोधने प्रथमापि भवतीति दुर्घटवृत्तिः। ३६—द्वितीयाऽऽम्रेडितान्तेष्विति बुद्धीरिति युक्तम्। उपर्यध्यधसः सामीप्ये (८।१।७) इत्यनेनात्राम्रेडनं न, किं तर्हि वीप्सायामिति षष्ठी समाहिता भवति। ३७—तौल्येऽत्र तुलाशब्दः। तुल्यार्थैरिति सूत्रे तु तुल्यार्थस्य तस्य पर्युदासात्तृतीया नानुपपन्ना। ३८—दिक्शब्दयोगेऽन्यारादिति पञ्चमी विहिता। तस्य परमाम्रेडितम् (८।१।१२) इति निर्देशादवयववाचिना दिक्शब्देन योगे पञ्चम्यभाव इति रक्षित इति दुर्घटवृत्तिः। ३९—उत्तरमस्माद्धारतात् त्रिविष्टपमित्येवं न्यसनीयम्। ४०—कार्येणाभिन्नदेशमित्यत्र सहार्थे तृतीया वेद्या। ४१—पर्वतशिखरस्याध इति साधु। साधुत्वे हेतुः पूर्वमसकृदुक्तः। ४२—तां च परित इत्येव साधु। ४३—कार्तिक्याः प्रभृतीति भाष्यकारवचनप्रामाण्यात्प्रभृतियोगे पञ्चमी भवति। अद्यशब्दस्त्वधिकरणशक्तिः। इह च पञ्चम्यर्थं लक्षयतीति नात्र किमपि वाच्यमस्ति। ४४—आरभ्यशब्दवद् आदायशब्दोऽपि प्रभृतिपर्याय इति तद्योगे पञ्चमी साध्वी।

---

## केवलविभक्त्यधिकारस्तृतीयः।

१—स्वतन्त्रस्य (सतः) भारतस्य वर्षस्येति शेषे षष्ठी साध्वी। कर्मणोऽभावात्कर्मणि द्वितीयाया अत्यन्तमप्राप्तेः। २—यस्य च भावेनेति तस्मिन्नुपस्थिते इत्येवं न्यसनीयम्। उपस्थानमुपस्थितिरिति भावक्तान्ते तु तस्येति शैषिकी षष्ठी साम्प्रतम्। ३—परमम् इति क्रियाविशेषणमिष्यते। ४—(अद्य) वर्षद्वयमिति वक्तव्यम्। अत्यन्तसंयोगे द्वितीयायाः प्रसङ्गो, न पञ्चम्याः। ५—त्रिभिर्ज्ञातिसहस्रैरिति वक्तव्यम्। प्रकृत्यादित्वात्तृतीया ज्ञेया।

६—कत्थ श्लाघायामित्यकर्मको दृष्टः। तेन य आत्मना व्यकत्थन्तेति हेतुतृतीया प्रयोक्तव्या। अर्थान्तरे तु सकर्मकोपि दृश्यते। तथा च भारते प्रयोगः—सदा भवान्फाल्गुनस्य गुणैरस्मान्विकत्थते इति। गर्हते इत्यर्थः। ७—प्राड्विवाकमतानुसारेणेति वक्तव्यम्। प्रकृत्यादित्वात्तृतीया बोध्या। द्वितीया तु सर्वथाऽनुपपन्नेति हेया। ८—एतावत्पर्यन्तमिति बहुर्व्रीहेः क्रियाविशेषणत्वेन प्रयोगः। तेन द्वितीया साध्वी। ९—गुणकर्मस्वभावैरिति हेतौ तृतीयया वक्तव्यम्। निर्धारणे षष्ठीसप्तम्यौ भवत इति सर्वेषां सर्वेष्विति वा प्रयोक्तव्यम्। १०—अम्बाया इत्यधीगर्थदयेषां कर्मणीति कर्मणि शेषत्वेन विवक्षिते षष्ठी। ११—नक्तमित्यधिकरणवृत्ति दिवेत्यपि। तेनाहर्निशमिति वा नक्तन्दिवमिति वा प्रयोज्यम्। १२—पञ्चमी विभक्त इत्यस्मात्साधुतर इत्येव साधु। १३—वेदानन्दयेति हेतौ तृतीयेष्यते। १४—जन्मनेति प्रकृत्यादित्वात्तृतीया। १५—षष्ठी हेतुप्रयोग इति हेतुशब्दात्षष्ठी, तत्सामानाधिकरण्यात्कस्येत्यत्रापि षष्ठी। १६—पामरस्यापि तेन प्रयोजनमिति वाग्व्यवहारः। १७—महान्तं कालमित्यत्यन्तसंयोगे द्वितीयेष्टा। १८—तादर्थ्याभावादाविष्काराच्चतुर्थ्या अप्रसङ्गः। आविष्कारस्य कृते, आविष्कारकारणादिति वा वक्तव्यम्। १९—परित्यागस्येति षष्ठी सम्बन्धे साध्वी। सप्तम्या तु नार्थः। २०—धर्मभावनाया इति षष्ठी वक्तव्या। अन्तरमिति भेदमाह। उभे अपि भावने भेद्यभेदकभावेन मिथः सम्बद्धे इत्युभयत्र षष्ठी युक्ता। २१—समाजवादेनेति तृतीयैव साध्वी। गम्यमानापि क्रिया कारक विभक्तेः प्रयोजिकेति वचनात्। २२—विक्रमादूर्ध्वं सार्धे वत्सरशते इत्येवं वक्तव्यम्[1]। पश्चाच्छब्दश्च हेयः। २३—सर्वेषां गुणानां पूर्ण इत्येवं व्यवहारः[2]। २४—नात्र भावलक्षणायाः सप्तम्या विषय इति विचार्यमाणमिति वक्तव्यम्। २५—दर्शनस्येति षष्ठी युक्ता। अधीगर्थदयेषामिति। २६—प्रभ्वादियोगे

---

१—व्यवहारनैयत्ये च प्रमाणनिचयो भूमिकायां द्रष्टव्यः। २—अत्रापि व्यवहारस्य प्रायिकत्वे प्रमाणानि भूमिकायां द्रष्टव्यानि।

स्त्राम्ये षष्ठीति दीक्षितवचनादात्मन इति वक्तव्यम्। २७—नव क्रोशानिति द्वितीयाऽत्यन्तसंयोगे। वैदूर्येण गुणेन नवक्रोश्यात्मकस्याध्वनोभिव्याप्तिः। विदूरशब्दत्यागे तु तद्युक्तादध्वनः प्रथमासप्तम्याविति नव क्रोशाः, नवसु क्रोशेष्विति वा वक्तव्यम्। २८—भूयस्या संख्ययेतीत्थम्भूतलक्षणे तृतीया न्याय्या। २९—एकपञ्चाशतमित्यत्यन्तसंयोगे द्वितीया प्रयोक्तव्या। ३०—अद्य रविवार इति व्यवहार्यम्। दिनशब्दस्तु रविवार इत्यनेनैव गतार्थः। षष्ठी तु सुतरामनुपपन्ना। दिनमिति रविवारस्य नाऽवयवः, न चातो भिन्नं किञ्चिदस्ति। ३१—बलिनामिति निर्धारणे षष्ठी। ईयसुंस्तु विभज्योपपदे विहितः। न चेह विभज्योर्थोस्ति, निर्धारणाश्रय एवास्तीति इष्ठन्नेव युक्तः। तेन बलिष्ठ इति वक्तव्यम्। ३२—व्यायामे परमरसिक इति विषये कारकसप्तमी साधुः। ३३—अग्रेसरः श्रीमोहनदासकर्मचन्द्रो दिव्यं निदर्शनमिति सामानाधिकरण्येन वक्तव्यम्। तत्र भवान् मोहनदासः स्वयमेव निदर्शनं न तु तत्सम्बन्धि किञ्चिदन्यत्। ३४—विभाषा गुणेऽस्त्रियामित्यत्र विभाषेति योगविभागादगुणे स्त्रियामपि हेतौ पञ्चमी। ३५—इदं साधु। अव्यवहितपूर्वमुक्तेन हेतुनाऽगुणेपि हेतौ पञ्चमीति धूमादिति साधु। ३६—स्वार्थपङ्के इति समस्तरूपकेण स्वार्थे पङ्के इति व्यस्तरूपकेण वा वक्तव्यम्। स्वार्थ एव पङ्क इति हि विवक्षति। ३७—चन्दनः पादप एव तु भवति। तेन व्यधिकरणषष्ठी नोपपद्यते। चन्दनकाष्ठमपि चन्दनमुच्यत इति पादपशब्दोर्थवान्। ३८—प्राणा आहुतिर्दत्तेति वक्तव्यम्। प्राणा आहुतिरिति रूप्यन्ते। ३८—ददातिरत्र न दाने वर्तते। नहि पृष्ठं दीयते नाम, किन्तर्हि भयाद्रणाद् द्रुतेन योधेन पराङ्मुखीभावाच्छत्रोर्दृग्गोचरी क्रियते। तेनात्र सम्बन्धमात्रे घ्नत इति षष्ठी युक्ता। ४०—स्वीकृतेनार्थेन विरुद्धमिति वक्तव्यम्। अनुक्ते कर्तरि तृतीया। ४१—यशसि भागिनो भवन्तीति शिष्टजुष्टो व्यवहारः। न तस्य वाच्यपि भागोस्तीत्यृवर्णात्। ४२—संवत्सरानित्यत्यन्तसंयोगे द्वितीयेष्यते। शतश इति शस्प्रत्ययः शसः स्थाने वेदितव्यः। ४३—वयसीति वक्तव्यम्। भावलक्षणा सप्तमी। ४४—मासोऽयं माधव इत्येवं

वक्तव्यम्। उक्तो हेतुः ( ३० तमे वाक्ये )। ४५—परमार्थेनेति प्रकृत्यादित्वात्तृतीया साध्वी। ४६—निमित्तात्कर्मसंयोगे इत्यनेन वल्कशब्दात्सप्तमी। संयोगशब्देन चेह संयोगमात्रं गृह्यते न समवाय एवेति केचित्। तन्मतेनोदाहरणं बोपदेवे। ४७—षष्ठी चानादर इति पश्यत इति षष्ठी। पश्यन्तमनादृत्येत्यर्थः। ४८—काके बहु भाषमाणे इति तु युक्तम्। भावलक्षणायाः सप्तम्याः प्रसङ्गः। तत्रानादराधिक्य एव षष्ठीविधानादनादरस्य चेहाप्रतीतेः षष्ठी दुरुपपादा। ४९—अत्र रुचिर्दीप्तौ वर्तत इति सम्प्रदानताया अप्रसङ्गः। प्रिय इति कर्तरि कः प्रत्ययः, प्रीणातीति प्रियः। तद्योगे कस्येति कर्मणि षष्ठी। ५०—आख्यातोपयोगे इत्यनेनोपयोगे सत्याख्यातुः प्रवक्तुरपादानसंज्ञा विहिता। उपयोगो नियमपूर्वकं विद्याग्रहणमित्युक्तम्। स चेह नास्तीति सम्बन्धमात्रे आगन्तुकानामिति षष्ठी साध्वी। ५१—मासमरुध्यतेति वक्तव्यम्। तादर्थ्याभावात्। ५२—प्रकृत्यादित्वाद् आकृत्येति कर्मणेति च वक्तव्यम्।

---

## अथ तिङ्क्षु गणाधिकारः प्रथमः।

१—दृभी ग्रन्थे इति तुदादिषु पठ्यते। तेन शे प्रत्यये सन्दृभतीति साधु। २—असु क्षेपणे इति दिवादिः। तेन श्यनि न्यस्येत् इति स्यात्। ३—शासु अनुशिष्टौ इत्यदादिः। तेन शपो लुकि लङि बहुवचनेऽशासुरित्येव साधु। सिजभ्यस्तविदिभ्यश्चेति झेर्जुस्। ४—ध्यै चिन्तायामिति भ्वादिः। तेन शपि आयादेशे च ध्यायतीत्येव साधु। ५—द्रु गताविति भ्वादिः। तेन शपि गुणेऽवादेशे द्रवन्तीत्येव साधु। ६—पृङ् व्यायामे इति तुदादिषु पठ्यते। तेन शे रिङि इयङि च व्याप्रियते इत्येव साधु। ७—दॄ विदारणे इति क्र्यादिः। कर्मकर्तरि लट्। तेनय गात्मनेपदयोः सतोर्विदीर्यो इति साधु। शुद्धे कर्तरि वा। दृदृत् दृणातेर्दीर्यतेर्वेति भाष्याद् दृ धातुर्दैवादिकोप्यस्तीत्याहुः। ८—यसु प्रयत्ने दिवादिः। यसोनुपसर्गात् इति सोपसर्गात्तस्मात् शप् नेति प्रयस्येत्येव साधु। ९—श्वस प्राणने इत्यदादिः। तेन शपो लुकि विश्वस्यादिति सार्वधातुके लिङि रूपम्।

१०—घृणीयामिति स्पष्टं प्रमादः । अधर्मे घृणां कुर्यामित्येव वक्तव्यम् । गृ घृ सेचने इति भ्वादिषु । घृणु दीप्ताविति तनादिषु पठितम् । घृणीयामिति रूपं तु नैकतरेण सुसाधम् । न चेष्टार्थलाभः । ११—आस उपवेशने इत्यदादिरात्मनेपदी । तेन शपि लुकि उपासीरन्निति साधु । १७—अभ्यस्यन्तीति तु युक्तम् । युक्तत्वे हेतुरुक्तः । १३—उदीयन्त इत्यत्र ईङ् गतौ दिवादिधातुर्नत्विण् गतावदादिः । तेन न कश्चिद्दोषः । १४—इट किट कटी गतौ इति भ्वादिषु पठ्यते । तत्र कटीतीकारे इ ई इति च प्रश्लिष्यन्ति केचित् । तेन उदयतीति तिपि शपि साधु । १५—कृती वेष्टने इति रुधादिः प्रयोक्तव्यो न तु कृती छेदने तुदादिः । तेन कृणत्तीत्येव साधु । १६—पूर्यी विशरणे इति दिवादिष्वात्मनेपदी पठितः । तेन नात्र कश्चिद्दोषः । १७—ञिष्वप् शय इति धातुरादादिकः । तेन शब्लुकि यासुटि च स्वप्यादिति साधु । १८— गॄ निगरण इति तौदादिकः । तेन शे निगिरन्ति, अचि विभाषेति पाक्षिके लत्वे निगिलन्तीति वा साधु । १९—पलातीति पल गतावित्यस्य लेटि आडागमे रूपम् । छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्त इति दुर्घटवृत्तिः । २०—प्रकृते भ्रमु चलने इति भ्वादिः प्रयोक्तव्यः, न तु भ्रमु अनवस्थाने इति दिवादिः । चलनमिह मण्डलाकारेण चलनमभिप्रेतं न तु चलनमात्रम् । तदभाववद्विशेष्यकं तत्प्रकारकज्ञानं च धात्वर्थ इति तत्त्वबोधिनीकारः । अनवस्थाने पर्यटने तु दैवादिकः प्रयुज्यते । तद्यथा भ्राम्यन्देशमनातपं विधिवशात्तालस्य मूलं गत इति । २१—वा भ्राशभ्लाशेत्यादिना वा श्यनि क्रमः परस्मैपदेष्विति दीर्घे परिक्राम्यतीति साधु । २२—तनूकरणे तक्ष इति तनूकरणे श्नुर्विकरणो न तु भर्त्सने । तेन सन्तक्षतीति शपि रूपं साधु । २३—धूञ् कम्पने इति चुरादिष्वाधृषीयः । तेन णिजभावपक्षे कर्तरि शपि विधवतीति सिद्धम् । २४—अनो रुध कामे इति कामेऽर्थेऽनुपूर्वो रुधिर्दिवादिरात्मनेपदी । प्रेरयामः प्रार्थयामहे इति चार्थे रुधिः श्नम्विकरणः । तेन प्रकृते न कश्चिद्दोषः । २५—विद ज्ञाने इत्यदादिः । तेन अवेत् इति लङि रूपं साधु । २६—ग्रन्थ बन्धने इति क्र्यादिः । तेन निरग्रन्थ्नासीति युक्तम् ।

## उपग्रहाधिकारो द्वितीयः ।

१—अनुपराभ्यां कृञ इति परस्मैपदेन भवितव्यम् । अनुकरोषीत्येव साधु । २—समस्तृतीयायुक्तादिति श्रूयमाणे तृतीयायोगे सम्पूर्वाच्चरते-रात्मनेपदं विहितम् । अत्र च तृतीयायोगो न श्रूयत इत्यात्मनेपदस्याऽप्रसङ्गः । संचरतीत्येव साधु । ३—व्याङ्परिभ्यो रम इति विरमतीत्येव साधु । आरमाम इत्येव साधु । उक्तो हेतुः । ५—क्रीडोऽनुसम्परि-भ्यश्चेत्यत्र चकारेण आङो दोऽनास्यविहरणे इति पूर्वसूत्राद् आङो-नुकर्षणादाक्रीडन्त इत्येव साधु । ६—क्रीडोनुसम्परिभ्यश्चेति समक्रीडथा इत्येव न्याय्यम् । ७—समवप्रविभ्यः स्थ इत्यात्मनेपदेऽवतिष्ठेतेति साधु । ८—आङः स्थः प्रतिज्ञाने इति वार्तिकेन आतिष्ठन्ते इत्येव साधु । प्रतिजानते इत्यर्थः । ९—कुर्द खुर्द गुर्द गुद क्रीडायामेवेति भ्वादिष्वात्मनेपदिनः पठिताः । रमु क्रीडायाम् इति च भ्वादिरात्मनेपदी । तेन कूर्दन्ते रमन्ते इति च वक्तव्यम् । १०—अत्रोत्पूर्वस्तिष्ठति रूर्ध्व-कर्मणि वर्तत इति उदोनूर्ध्वकर्मणीत्यस्य न विषयः । तेन परस्मैपदमेव साधु । ११—अत्र यद्यपि धातुरनूर्ध्वकर्मणि वर्तते तथापि उद ईहाया-मिति वक्तव्यान्नात्रात्मनेपदप्राप्तिः । ईहा चेष्टेत्यनर्थान्तरम् । सा चेह नास्तीति व्यक्तम् । तेन शतमुत्तिष्ठतीति वक्तव्यम् । उत्पद्यत इत्यर्थः । १२—अत्रोत्पूर्वस्तिष्ठतिरुद्योगे वर्तत इत्यात्मनेपदं युक्तम् । १३—अत्राङ्-पूर्वस्तिष्ठतिराश्रयणे परिग्रहे वा वर्तते न तु प्रतिज्ञान इति परस्मैपदे आतिष्ठती-त्येव साधु । १४—समवप्रविभ्यः स्थ इति संस्थास्यत इति साधु । तेनैव प्रस्थास्यन्ते इति च साधु । १५—हरतेर्गतताच्छील्ये तङ्विधिः । गतं गतिः । तस्य शीलनम् । तच्चेह नास्तीति तङोऽप्रसङ्गः । गत-विधप्रकारास्तुल्यार्था इति मतान्तरे ऽर्वाचीने तु यथास्थिते न दोषः । १६—गृधिवञ्च्योः प्रलम्भने इति वञ्चयन्ते इत्येव साधु । १७—अत्रा-क्रामेत् इत्येव साधु । आत्मनेपदस्याप्राप्तेः । १८—उपपराभ्यामित्यनेन सर्गे वर्तमानात्परापूर्वात् क्रमेरात्मनेपदेन भवितव्यम् । तेन पराक्रमन्ते-त्येव साधु । १९—ज्योतिरुद्गमन इति वक्तव्यादाक्रामतीत्येव साधु ।

ज्योतिः शब्देन च सूर्यादयो गृह्यन्ते। २०—न्याये तु साधीयः क्रमते इति वक्तव्यम्। क्रमिरत्र वृत्तावप्रतिबन्धे वर्तत इति वृत्तिसर्गतायनेषु क्रम इत्यात्मनेपदम्। २१—प्रोपाभ्यां युजेरयज्ञपात्रेषु इति प्रयुङ्क्त इत्येव साधु। २२—अयज्ञपात्रेष्विति पर्युदासात्प्रयुनक्तीति परस्मैपदे साधु। २३—स्वराद्यन्तोपसृष्टादिति वक्तव्यादनुपूर्वाद्युजेरात्मनेपदे ऽनुयोच्य इत्येव साधु। अकर्मकाच्चेत्यनेनोपातिष्ठथा इत्येव साधु। २४—अकर्मकाच्च (१।३।२६) इत्यनेनोपपूर्वात् तिष्ठतेरकर्मकादात्मनेपदं विहितम्। प्रकृते तु प्रतीहारः कर्म। तेनोपतिष्ठतीत्येव साधु। २५—अकर्मकाच्चेत्युपतिष्ठसे इति साधु। २६—सम्प्रतिभ्यामनाध्याने इत्यनाध्यानेर्थे सम्पूर्वाज्ज्ञानातेरात्मनेपदं युक्तम्। २७—प्रतिजानत इत्येव साधु। उक्तो हेतुः। २८—अभ्यनुजानातीत्येव साधु। आत्मनेपदस्याप्रसक्तेः। २९—प्रोपाभ्यां समर्थाभ्यामित्युपक्रंस्य इत्येव युक्तम्। ३०—उपक्रामतीत्येव साधु। उपशब्दो यदाऽऽदिकर्मणि तदा प्रोपाभ्यां समर्थाभ्यामित्यनेनात्मनेपदं भवति। ३१—गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवानुदात्तेत इति विचिकित्सतीत्येव साधु। हरिदीक्षितस्तु गुपतिजकितमाना अनुदात्तेत इति भाष्यस्वरसात्कितेरनुदात्तेत्वमेवोचितमिति पश्यति। ३२—अपह्नवे ज्ञ इत्यपजानीषे इत्येव साधु। ३३—वृत्तिसर्गतायनेषु क्रम इति सर्गं उत्साहेर्थे ऽत्रात्मनेपदमिति सर्वमनवद्यम्। ३४—अधेः प्रसहने इत्यात्मनेपदेन भवितव्यम्। ३५—अकर्मकाच्च (१।३।३५) इत्यनेन विपूर्वात्करोतेरकर्मकादात्मनेपदं विहितम्। तेन विकुर्वत इत्येव साधु। विकारं प्राप्नुवन्तीत्यर्थः। ३६—वेः पादविहरणे इति विक्रमन्त इति साधु। ३७—कर्तरि कर्मव्यतिहारे इति व्यतिकृषते इत्येव साधु। ३८—न गतिहिंसार्थेभ्य इति कर्मव्यतिहारे प्राप्तमात्मनेपदं प्रतिषिध्यते। तेन शेषात्कर्तरि परस्मैपदं सिद्धं भवति। ३९—किरतेर्हर्षजीविकाकुलायकरणेषु इति वक्तव्यादत्रात्मनेपदं साधु। ४०—उपसर्गादस्यत्यूह्योर्वा वचनमिति वाऽऽत्मनेपदं भवति। तेनापोहति, अपोहत इत्युभयं साधु। ४१—अनुपराभ्यां कृञ इति

परस्मैपदेनैव भवितव्यम्। तेन पराकरोति इत्येव साधु। ४२—प्रकाशन-स्थेयाख्ययोश्चेत्यनेन तिष्ठन्ते इत्येव साधु। महात्मा श्रीगान्धी स्थेय एषां नेतॄणाम्। ४३—हरतेर्गतताच्छील्ये इत्यनुहरन्त इत्यत्रात्मनेपदं स्थाने। ४४—भासनोपसंभाषेत्यादिना व्यूदिरे इत्यत्रात्मनेपदम्। विमत्यर्थो ह्यत्र वदिः। यजादित्वात् सम्प्रसारणम्। ४५—अत्राचार्यकरणे विशेषणे संमाननोत्सञ्जनेत्यादिनात्मनेपदमिष्यते। उपनेष्य इत्येव साधु। ४६—बुधयुधनशजनेङित्यादिना कर्त्रभिप्रायक्रियाफलेऽपि परस्मैपदविधानाद् अध्यापयतीत्येव न्याय्यम्। ४७—कोपं विनयन्ते इत्येव साधु। विनयन्तेऽपनयन्तीत्यर्थः। कर्तृस्थे चाशरीरे कर्मणीत्यात्मनेपदनियमः। ४८—अकर्मकाच्चेति विकुर्वाणादित्यत्रात्मनेपदं वैधम्। विकुर्वाणाद् विकारं प्राप्नुवत इति यावत्। ४९—उपसर्गाद् अस्यत्यूह्योर्वा वचनमिति पक्षे परस्मैपदं साधु। ५०—अभ्यस्येति लोण्मध्यमैकवचने साधु। ५१—शकेर्जिज्ञासायामिति शिक्षते इत्येव साधु। ५२—समवप्रविभ्यः स्थ इत्यात्मनेपदे विप्रतिष्ठन्त इति साधु। ५३—उदश्चरः सकर्मकादित्युच्चरन्त इत्यत्रात्मनेपदं साधु। ५४—अत्रोच्चरतिरकर्मक इति परस्मैपदं साधु। ५५—समस्तृतीयायुक्तात् इति संचरमाणानि इत्येव साधु। ५६—क्रीडोऽनुसंपरिभ्यश्चेति संक्रीडमानस्येत्येव युक्तम्। वेः पादविहरणे इति विहितस्यात्मनेपदस्य नेह प्रसङ्गः। न ह्यत्र धातुः पादविहरणे ( चरणविक्षेपे ) वर्तते किन्तर्हि शिथिलीभवने। तेन व्यक्रामदित्येव युक्तम्। ५७—व्यक्तवाचां समुच्चारणे इत्यात्मनेपदं विहितम्। व्यक्तवाच इति हि मनुष्याः प्रसिद्धाः, कुक्कुटास्तु न तथेति सम्प्रवदन्तीति साधु। ५८—निसमुपविभ्यो ह्व इत्यनेनात्मनेपदे उपह्वयत इत्येव साधु। ५९—गन्धनावक्षेपणेति सूत्रे सेवनशब्दो नुवृत्तिवचनः, इह त्वनुग्रहे साहाय्यदाने वा वर्तत इति नात्मनेपदनियमः। यथा नहि दीपौ परस्परस्योपकुरुत इति शाङ्करभाष्ये। प्रपूर्वः करोतिरत्र प्रकथने वर्तते तेन गन्धनादिसूत्रेणैवात्मनेपदं युक्तम्। ६०—स्पर्धायामाङ इत्याङ्पूर्वाद् ह्वयतेरात्मनेपदं युक्तम्। ६१—उपाद्यमः स्वकरणे इत्यात्मनेपदे उपायच्छतेति

साधु। भुजोऽनवने इत्यवनवर्जितेऽर्थ आत्मनेपदम्, अवने ( पालने ) तु परस्मैपदमिति भुङ्क्ते ( = अनुभवति) भुनक्ति (=पालयति) इत्युभयं साधु। ६३—ज्ञाश्रुस्मृदृशां सन इति सन्नन्ताज्जानातेरात्मनेपदविधिः, तेन जिज्ञासन्ते इत्येव साधु। ६४—नात्र मन्त्रकरणमर्थः। उपस्थानमिह सेवनं वा संनिधानं वा। स्तवनं तूपचारात्। तेनात्मनेपदस्याप्राप्तिः। ६५—उपाद् देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यात्सुघ्नमुपतिष्ठत इति वक्तव्यम्। ६६—आङो यमहन इत्यकर्मकात्स्वाङ्गकर्मकाद्वा हन्तेराङ्पूर्वादात्मनेपदं विहितम्। अत्र कपाटमिति कर्म श्रूयत इति परस्मैपदं साधु। ६७—उद्विभ्यां तप इत्युद्विपूर्वात्तपतेरकर्मकात्स्वाङ्गकर्मकाद्वाऽऽत्मनेपदविधिः स्मृतः। अत्र स्वर्गम् इति कर्मणः श्रवणात्परस्मैपदं साधु। ६८—अत्र वञ्चनार्थस्य विरहाद् गर्धयन्तीति साधु। गृधिवञ्च्योः प्रलम्भन इति वञ्चनेऽर्थे ण्यन्ताद् गृध्यतेरात्मनेपदं विहितम्। ६९—समः प्रतिज्ञान इति सगिरन्त इत्येव साधु। ७०—नेर्विश इति निविशेरात्मनेपदं साधु। क्लिश उपतापे दिवादिरनुदात्तेत्। अयमकर्मकः क्र्यादिस्तु सकर्मकः। ७१—समः क्ष्णुव इति संक्ष्णुष्वेत्यात्मनेपदे साधु। ७२—भियो हेतुभये षुक्, भीस्म्योर्हेतुभये इति हेतुभये षुगात्मनेपदे विहिते। प्रकृते दण्डात्करणाद्भयं न तु हेतोः प्रयोजकादिति भाययतीत्येव वक्तव्यम्। ७३—अनुपसर्गाद्वेति सूत्रेण केवलाज्जानातेः कर्त्रभिप्रायक्रियाफल आत्मनेपदं विहितम्। तेनानुपूर्वात्तन्नेत्यनुजानीहीत्येव साधु। ७४—प्राद्वह इति परस्मैपदनियमात् प्रवहन्तीत्येव साधु। ७५—निगरणचलनार्थेभ्यश्चेति परस्मैपदनियमाद्भोजयतीत्येव साधु। ७६—अणावकर्मकाच्चित्तवत्कर्तृकात् इति शाययेत्येव साधु। अणौ शयतिश्चित्तवत्कर्तृकोऽकर्मकश्चेति स्पष्टम्। ७७—मृष तितिक्षायां दिवादिः स्वरितेत्। परेर्मृष इति परिपूर्वस्यपरस्मैपदनियमः। तेन परिमृष्येति वक्तव्यम्। ७८—बुधयुधनशजनेत्यादिना परस्मैपदनियमे योधयति जनयिष्यामीति न साधु। ७९—जनयिष्यतीत्येव साधु। उक्तो हेतुः। ८०—समुदाङ्भ्यो यमोऽग्रन्थे इति ग्रन्थपर्युदासात्समुद्यच्छतीत्येव साधु। ८१—नाशयतीत्येव साधु। ८२—समागच्छेम् इत्यत्र गमिराङ्पूर्वो न तु सम्पूर्व इति समो गम्यृच्छि-

भ्यामित्यनेनात्मनेपदविधेरप्रसङ्गः। ८३—अर्तिश्रुविदिभ्यश्चेत्यकर्मका-च्छृणोतेरात्मनेपदविधिः। अत्र शृणोतिः सकर्मक इति संशृणोतीत्येव साधु। ८४—समवप्रविभ्यः स्थ इत्यात्मनेपदे प्रतिष्ठस्वेति साधु। ८५—आशिषि नाथ इत्याशिष्येव नाथतेरात्मनेपदमिति याच्ञायां परस्मैपदे ऽनुनाथामीत्येव साधु। ८६—विकुर्वत इत्यस्य विकारं गच्छत इत्यर्थः। तेन करोतिरत्राकर्मकः। अकर्मकाच्चेत्यनेनात्मनेपदे विकुर्वाण-स्येति वक्तव्यम्। ८७—शंसु स्तुताविति भ्वादिः परस्मैपदी, तेन प्रशंसतीत्येव साधु। ८८—अनोरकर्मकादित्यकर्मकादनुपूर्वाद्वदते-रात्मनेपदं विहितम्। अत्र तु कर्म श्रूयत इत्यनुवदतीति वक्तव्यम्। कालापस्येत्येवं वा विपरिणमयितव्यम्। ८९—उपसर्गादस्यत्यूह्योर्वेति पाक्षिक आत्मनेपदे ऽभ्यस्यते इति साधु। गणकार्यमनित्यमिति वा ऽभ्यसत इत्यपि समाहितं भवति। ९०—अर्तिश्रुविदिभ्यश्चेत्यत्राकर्मका-दित्यनुवृत्तेः सकर्मकाद्विदेरात्मनेपदं दुर्लभम्। तेन संवित्त इति वक्तव्यम्। ९१—उपपराभ्यामिति नियमान्नान्यपूर्वात्क्रमेर्वृत्तिसर्गतायनेष्वर्थेष्वात्म-नेपदम्। विपूर्वः क्रमिरत्र सर्गे उत्साहे वर्तते तेन शतरि ङी विक्रामतीति साधु। ९२—विचिकित्ससीत्येव साधु। उक्तो हेतुः पूर्वत्र। ९३—बुधयुधेति सूत्रेण ण्यन्ताद्बुधेः परस्मैपदनियमः। तेन बोधय-तीत्येव शक्यं वक्तुम्। ९४—ग्रसु ग्लसु अदने भूवादी अनुदात्तेतौ। तेन ग्रसिष्यत इत्येव साधु। ९५—गमेरकर्मकत्वविवक्षायां समो गम्यृच्छिभ्या-मित्यात्मनेपदे संगच्छस्वेति स्यात्। ९६—उपह्वयते इत्येव साधु। उक्तो हेतुः। ९७—विचिकित्सन्तीत्येव साधु। उक्तो हेतुः। ९८—गुपेर्निन्दायां सन्। अयं चानुदात्तेत्। अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति सन्नन्तात्तङ्। तेन जुगुप्सन्त इत्येव साधु। ९९—इगि रिगि लिगि गत्यर्था भौवादिकाः परस्मैपदिनः। तेन इङ्गतीत्येव साधु। १००—आप्लृ व्याप्ताविति परस्मैपदी। तेनाप्नोती-त्येव साधु। १०१—नानोर्ज्ञ इत्यात्मनेपदनिषेधाद् अनुजिज्ञासतीत्येव साधु। १०२—प्रत्याङ्भ्यां श्रुव इत्यात्मनेपदनिषेधाद् आशुश्रूषतीत्येव

साधु। १०३—शिलपिरकर्मकः। अयं च दिवादिषु परस्मैपदिषु पठ्यते तेन शिलष्यन्ति शिलष्यतीति च साधू। १०४—'हेतुमति च' इति सूत्रे यदभिप्रायेषु सज्जत इति भाष्यकारप्रयोगात् षस्ज सङ्ग इति धातुरात्मनेपद्यपि। तेनादोषः। १०५—ऋधु वृद्धाविति दिवादिः परस्मैपदी। तेन समृध्यतु इत्येव साधु। १०६—अर्थ याच्ञायामिति चुरादिरदन्तोऽनुदात्तेत्। तेन प्रार्थयेमहीति वक्तव्यम्। १०७—इगि रिगि लिगि गत्यर्था भौवादिकाः परस्मैपदिनः। तेन रिङ्गन्नित्येव साधु। १०८—भृशु भ्रंशु अधः पतने दिवादिषु परस्मैपदिनौ। तेन भ्रश्यति, भ्रंश्यतु इति च पठितव्यम्। १०९—षिधु संराद्धाविति दिवादिः परस्मैपदी। तेन सिध्यन्त्विति साधु स्यात्। आशंसामहे इत्याङः शसि इच्छायामित्यस्य लटि रूपम्। स चानुदात्तेत्। ११०—निर्पूर्वाद् विद्यतेर्लिटि निर्विविदे इत्येव साधु। १११—तपस्तपः कर्मकस्यैवेति कर्तुः कर्मवद्भावः। तेनात्मनेपदमेव युक्तम्। ११२—दिव परिकूजने चुरादिरनुदात्तेत्। तेन परिदेवयमान इत्येव साधु। ११३—दाणश्च सा चेच्चतुर्थ्यर्थे इत्यात्मनेपदे सम्प्रयच्छत इत्येव साधु। ११४—काङ्क्षतिर्भ्वादिषु परस्मैपदी पठितः। तेन काङ्क्षामीत्येवं साधूकरणीयम्। ११५—आङो दोऽनास्यविहरण इत्याददीतेत्येव सार्वधातुके लिङि साधु। ११६—परिव्यवेभ्यः क्रिय इति विक्रीणीते इत्येव साधु। ११७—अत्र वद सन्देशवचन इति चौरादिको धातुः। अभिपूर्वो नमस्कारे वर्तते। अयमनुदात्तेत् इति केचित्। तन्मतेऽभिवादये इत्येव साधु। स्वरितेत्त्वे प्याशीर्लक्षणस्य क्रियाफलस्य कर्तृगामित्वाण्णिचश्चेत्यात्मनेपदमेव न्याय्यम्। तथा च प्रायेण व्यवहारः। ११८—संविदन्निति सकर्मकत्वात् संवित्त इत्यस्य चाकर्मकत्वाद्यथास्थितं पदे न्याय्ये। सम्पूर्वादकर्मकादेव विदेरात्मनेपदविधिः। ११९—अधिकुर्वन्त्वित्यस्य विषयीकुर्वन्त्वित्यर्थः। प्रयोगेणेति प्रकृत्यादित्वात्तृतीया। तेन 'अधेः प्रसहने' इत्यस्याप्रसङ्गः। १२०—आङ् पूर्वः क्रमिरिहावष्टम्भे वर्तते नोर्ध्वं गमने तेन यथास्थितं साधु। १२१—आङि नुप्रच्छ्योरित्यात्मनेपदे आपृच्छे इत्येव साधु। १२२—मन्त्रि गुप्तपरि-

भाषणे चुरादिरनुदात्तेत्, तेनामन्त्रयस्वेति साधु। १२३—मिथ्योपपदात्कृञोऽभ्यासे इत्यात्मनेपदे साधु रूपम्। १२४—समुदयन्तीत्यस्य साधुत्वे पूर्वत्र (गणाधि० १४ वा०) हेतुरुक्तः। १२५—कर्तरि कर्मव्यतिहारे इति व्यतिकुरुत इत्येव साधु। १२६—आगमेः क्षमायामित्यात्मनेपदे आगमयस्वेत्येव साधु। १२७—तर्ज भर्त्स भर्त्सने चुरादी अनुदात्तेतौ। तेन भर्त्सयत इत्येव पाठ्यम्। १२८—अत्र विनयतिविगणने वतत इति संमाननोत्सञ्जनादिसूत्रेणात्मनेपदेन भाव्यम्। १२९—उपनयते विभर्तीत्यर्थात्संमाननादिसूत्रेणात्मनेपदं साधु। १३०—वदन्ते भासमाना भाषन्त इत्यर्थः। तेन भासनोपसंभाषेत्यादिनाऽऽत्मनेपदं साधु। पूर्ववत्सन इति विजिगीषन्त इत्यपि साधु। १३१—संवदत इत्येव साधु। आत्मनेपदविधिविरहात्। १३२—टुदु उपतापे स्वादिः परस्मैपदी। तेन सार्वधातुके लिङि 'दुनुयुः' इति स्यात्। १३३—ऊह वितर्के इत्यात्मनेपदी भ्वादिषु पठितः। तेनात्मनेपदमेव साधु। १३४—उपकरोतिरिह सेवनेऽनुवृत्तौ वर्तत इति गन्धनादिसूत्रेणात्मनेपदे उपकुर्वत इत्येव साधु। १३५—नमोवरिवश्चित्रङः क्यच् इति क्यचि परस्मैपदे वरिवस्यतीत्येव साधु। १३६—अत्र नयतेर्यः कर्ता न तत्स्था युद्धश्रद्धा, यद्यप्यशरीरा सा, किन्तर्हि कर्मस्थेति कर्तृस्थे चाशरीरे कर्मणीत्यात्मनेपदनियमस्याप्रसङ्गः। तेनाकर्तृगामिक्रियाफलविवक्षायां विनेष्यामीति परस्मैपदं साधु। १३७—भृशु भ्रंशु अधःपतने इति भ्रंशु धातुर्दिवादिषु परस्मैपदी पठितः। तेन भ्रश्यतीत्येव साधु। १३८—नमत इति कर्मकर्तरि साधु। न दुहस्नुनमां यक्चिणाविति यगभावः। ज्वलह्वलह्मलनमामनुपसर्गाद्वेति सोपसर्गस्य नमेर्नित्यायां मित्संज्ञायां सन्नमयन्तीत्येव साधु। १३९—भुञ्जन्नित्यवनेऽर्थे साधु। तद्व्यतिरिक्ते भोगे त्वसाधु। बुभुजे स राजा पृथिवीं न तु पालयाञ्चक्र इति वर्णसाङ्कर्यकरणत्प्रतीयते। तेन भुञ्जान इत्येव वक्तव्यम्। १४०—कृष विलेखने भ्वादिः परस्मैपदी। ते नाकर्षाम इत्येव साधु। १४१—युध सम्प्रहारेऽनुदात्तेत्। तेन लुङि प्रथमपुरुष बहुवचनेऽयुत्सतेत्येव साधु। १४२—प्रोपाभ्यां युजेरयज्ञपात्रे-

ञ्चिति प्रयुङ्क्तइत्येव साधु। १४३—शम लक्ष आलोचने इति चुरादिषु शमिरनुदात्तेत्पठितः। ते निशामयामह इत्येव साधु। नान्ये मितोऽहेता-विति मित्त्वाभावः। १४४—क्लिश उपतापे दिवादिरनुदात्तेत्। तेन क्लिश्यत इत्येव साधु। १४५—उदो नूर्ध्वकर्मणीत्यत्र उद ईहायामिति वाक्यकारः पठति। तेनेहायाश्चेष्टाया अभावादत्रोत्तिष्ठन्तीत्येव साधु। १४६—तुस ह्लस ह्लस रस शब्दे इत्यत्र भ्वादिषु ह्लसतिः परस्मैपदी पठितः। तेन ह्लसन्तीत्येव साधु। धातूनामनेकार्थत्वादल्पीभावेऽस्य वृत्तिः। १४७—खिद दैन्य इति दिवादिष्वनुदात्तेत् पठितस्तेन खिद्यत इत्येव साधु। वामनस्त्वस्य दिवादिषु पाठपश्यन् खिद्यत इति कर्मकर्तरि प्रयोगमाह। १४८—संवदतीत्येव साधु। आत्मनेपदविधेरभावात्। १४९—आङः शसि इच्छायामिति भ्वादिष्वनुदात्तेत्पठितः, तेनाशंसत इत्येव साधु। १५०—संग्राम युद्ध इति चुरादिष्वदन्तोनुदात्तेत्। तेन संग्रामयाञ्चक्र इत्याम्प्रत्ययवत्कृञो नुप्रयोगस्येत्यनेनात्मनेपदे साधु। १५१—यङ्लुकि शेषात्कर्तरि परस्मैपदमिति परस्मैपदे वरीवृतति इत्येव साधु। १५२—निमन्त्रयत इत्येव साधु। उक्तो हेतुः पूर्वत्र (१२२ वा०)। १५३—शप आक्रोशे स्वरितेत्पठितः। शप उपालम्भ इति शपथेर्थेऽकर्तृगेपि फल आत्मनेपदं विहितम्। तेन शप इति युक्तम्। स्वाशयं प्रकाशयामी-त्यर्थो विवक्षितो न तु शपथ इति न तङिति केचित्समाधिमाहुः। १५४—आङः शासु इच्छायामित्यत्राङ्ग्रहणं प्रायिकं द्रष्टव्यमिति दीक्षितः। तेन प्रशास्महे इति साधु। १५५—अनुपसर्गाद्वेति जानातेः केवलात्पक्षे तङ् विहितः, सोपसर्गात्तु शेषात्कर्तरीति परस्मैपदमेव युक्तम्। तेनानुजज्ञावित्येव पाठ्यम्। नृपेणेति विपरिणामेन कर्मण्यात्मनेपदमिति जयमङ्गला। १५६—संक्रामतीत्येव साधु। आत्मनेपदविधेरभावात्। १५७—उपाद्यमः स्वकरण इति स्वकरणे विवाहेर्थे उपपूर्वाद्यमेरात्मनेपदं विहितम्। भट्टिस्त्वङ्गीकारमात्रमर्थमङ्गीकरोति। एवमाचरन्स वृत्त्यादि-विरोधादुपेक्ष्यः। विवाहादन्यत्र तूपायंसीदित्येव साधु। १५८—आङ्-न्तिरिह सकर्मकः, वक्ष इति कर्मणः श्रुतेः, तेन आङो यमहन इत्यने-

नात्मनेपदस्याप्रसङ्गः। अत एव प्रमाद एवायमिति भागवृत्तिः। दीक्षितस्त्वनेकमत्र समाधिमाह—प्राप्येत्यध्याहारो वा। भेत्तुमित्यादि तुमुन्नन्ताध्याहारो वा। समीपमेत्येति वा। अयमर्थः—विषमविलोचनस्य समीपमेत्य वक्ष आजघ्ने स्वकीयमेव वक्षो मल्ल इव सन्तोषातिशयादास्फालयाञ्चक्र इत्यर्थात्स्वाङ्गकर्मकत्वमस्त्येवेत्यव्याहतमात्मनेपदम्। १५९—कुप्यतीत्येव साधु। साधुत्वे स्पष्टो हेतुः। १६०—बुधयुधेत्यादिना शास्त्रेण प्रबोधयन्तीत्येव साधु। १६१—आङ् पूर्वस्तिष्ठतिरिहादरे स्पृहायां वर्तत इति प्रतिज्ञानाभावान्नात्मनेपदप्राप्तिः। १६२—अनुरज्यन्तीति साधु। पक्षेऽनुरज्यन्त इति। साधुत्व उक्तो हेतुः पूर्वत्र। १६३—ज्ञाश्रुस्मृदृशां सन इत्यनुसुस्मूर्षेतेत्येव युक्तम्। १६४—लीङ् श्लेषणे इति दिवादिषु पठ्यते। तेन ङित्त्वाल्लोटि निलीयस्वेत्येव साधु। १६५—सृज विसर्गे इति तौदादिकः परस्मैपदी। तेन सृजेत्येव साधु। १६६—अस्थामित्येव परस्मैपदे लुङि रूपं न्याय्यम्। १६७—त्रैङ् पालने इति धातु र्भौवादिकः। ङित्त्वादात्मनेपदे त्रायस्वेत्येव साधु। १६८—क्लिश उपतापे दिवादिरनुदात्तेत्। तेन लिटि चिक्लिशाते इत्येव भवितव्यम्। १६९—शक विभाषितो मर्षण इति दिवादेरुभयपदिनो लिटि शेकिर इति रूपं बोध्यम्। १७०—समुदाङ्भ्य इति कर्त्रभिप्राये क्रियाफले लिटि उद्येमिर इति साधु। उद्यमं कृतवन्त इत्यर्थः। १७१—संविविदे संवित्तिवान् बभूवेति कर्मणोऽविवक्षायामात्मनेपदं साधु।

---

## रूपाधिकारस्तृतीयः।

१—स्तुसुधूञ्भ्यः परस्मैपदेष्विति सिचि परस्मैपदे परतो नित्यमिडागमः। तस्मिन्सति इट ईटीति सिचो लोपे प्रास्तावीत् इत्येव साधु। २—लिख विलेखने इति कुटादिरिति भ्रमः। तेन लुटि डाप्रत्यये तासि गुणे लेखितास्मीत्येव साधु। ३—रच प्रतियत्ने चुरादिष्वदन्तः। तेनाग्लो-

पित्वात्सन्वद्भावो नेत्यररचेतामित्येव लुङि चङि रूपम्। ४—वसेर्यंजादित्वाद्वचिस्वपियजादीनामिति यकि सम्प्रसारणे न्युष्यत इति रूपं साधु। ५—अनुमिमायेति च्युतसंस्कृतिक्रम्। माङ् माने जुहोत्यादिः। तस्य लिटि अनुममे इति रूपम्। मिनोतेस्तु मीनातिमिनोति दीङां ल्यपि चेत्यात्वेऽनुममावित्येव। ६—एतेर्लिङीत्यार्धधातुके लिङि उपसर्गात्परस्य इणोऽणो ह्रस्वेऽभ्युदियात् इत्येव साधु। जाग्रोऽविचिण्णल् ङित्सु इत्यार्धधातुके लिङि यासुटि गुणे जागर्यात् इत्येव साधु। ७—रिङ् शयग्लिङ्क्षु इति सरतेर्ऋकारस्य रिङादेशेऽनुस्रियन्त इत्येव साधु। ८—जनीजृष् क्नसुरञ्जोऽमन्ताश्चेति मित्त्वे ह्रस्वे जरयतीति साधु। ९—अमन्तत्वान्मित्त्वे ह्रस्वे विभ्रमयसीति साधु। १०—विद ज्ञाने सेट्। तेन वेदिष्यसीत्येव साधु। ११—विभाषोपयमने इति विभाषा सिचः कित्त्वादनुनासिकलोपे उपायतेति साधु। पक्षे उपायंस्तेति भवति। १२—जनीजृष्—इत्यत्र दिवादेर्ग्रहणात् क्र्यादेर्निरनुबन्धकस्य जॄ वयोहानावित्यस्य ग्रहणं नेति मित्त्वाभावाद्ध्रस्वाभावे जारयतीति साधु। १३—अमन्तत्वान्मित्त्वे ह्रस्वत्वे भ्रमयन्नित्येवेति पाणिनीयाः। १४—तस्मान्नुड् द्विहल इत्यस्याप्राप्तेर् आटेत्येव साधु। १५—हलः श्नः शानज्झाविति शानजादेशे बधानेत्येव साधु। १६—सृजिदृशोर्झल्यमकितीति अमागमे स्रक्ष्यतीत्येव साधु। १७—ज्वलह्वलेत्यादिना घटादित्वान्नित्याभित्संज्ञाऽनुपसर्गस्य ज्वलेर्विकल्पिता, न तु सोपसर्गस्येति प्रज्वलयेत्येव साधु। १८—क्षुदिर् सम्पेषणे भञ्जो आमर्दने इति रौधादिकौ धातू अनिटौ। तेन लृटि क्षोत्स्यामि, भङ्क्ष्यामीति च साधुनी रूपे। १९—राधो हिंसायाम् ( ६।४।१२३ ) इत्यनेन एत्वाभ्यासलोपयोः 'अपरेधतुः' इति साधु। अपोपसर्गश्च हिंसाद्योतकः प्रयुज्यते। २०—तनूकरणे तक्ष इति तनूकरणेऽर्थे शपः श्नुर्विहितः। प्रकृते तु भर्त्सनमर्थ इति तस्याप्रसङ्गः। तेन सन्तक्षतीत्येव साधु। २१—दंश सञ्जस्वञ्जां शपीति दंशेरनुनासिकलोपे दशन्तीत्येव युक्तम्। २२—लावस्थायामेवाडाटावित्यभ्युपगमादुपसर्वयोगात्पूर्वमेवाटि 'अतसमदधुः' इति लङि रूपम्। २३—अत्रापि पूर्व-

मटि तत्र उपसर्गयोगे सुट् कात्पूर्व इति नियमात् ककारात्पूर्वं सुटि सिवादीनां वाड्व्यवायेपीति वैकल्पिके मूर्धन्यादेशे पयष्करवम्, पर्यस्करवमिति रूपे। २४—शदेरगतौ त इति गतिव्यतिरिक्ते निसूदनेर्थे तोऽन्तादेशो विधीयते। असमञ्जसं ब्रुवन् दोषेण लिप्यत इति किमाश्चर्यम्। २५—विज इट इतीडादिप्रत्ययस्य ङिद्वद्भावाद् गुणाभावे उद्विजिष्यसे इत्येव साधु। २६—सेर्ह्यपिच्चेति हेरपित्त्वे ङिद्वद्भावे गुणाभावे आद्गुण इति गुणैकादेशेऽवेहि इति साधु। २७—शुध शौचे दिवादिरनिट्। तेन शोत्स्यन्तीत्येव साधु। २८—उपसर्गयोगात्पूर्वमाडागमे आटश्चेति वृद्धौ पुनरुपसर्गयोगे वृद्धिरेचीति वृद्धौ प्रैषयन्नित्येव साधु। २९—प्रीङ् प्रीतौ दिवादिरनिट्। तस्मात्प्रेष्यस इति लृटि साधु। ३०—समो गम्यृच्छिभ्यामिति सम्पूर्वाद्गमेरात्मनेपदम्। पूर्ववत् सन इति सन्नन्तादप्यात्मनेपदम्। गमेरिट् परस्मैपदेष्विति परस्मैपदे सकारादेरार्धधातुकस्य इड् विहितः। तेनात्मनेपदे सन इण्नेति संजिगंसिष्यसे इत्येव साधु। सन्नन्तस्य तु स्ये भवत्येवेट्। धातोरनेकाच्त्वात्। ३१—वच उम् इत्यङि भवति न तु चिणि। तेनावाचीत्येव साधु। ३२—ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु तुदादिषु पठ्यते। तस्येदं लङि झौ रूपम्। आटश्चेति वृद्धिः। ३३—आडजादीनामित्याटि वृद्ध्येकादेशे यणि पर्याटन्नित्येव साधु। ३४—सम्पूर्वस्य ख्यातेः प्रयोगो नेति न्यासकारः। तेन संचक्षत इत्येव प्रयोक्तव्यम्। ३५—'कम्पने चलिः' इति मित्त्वे ह्रस्वत्वे चलयतीत्येव साधु। ३६—ह्म्यन्तक्षणश्वसेत्यादिना वृद्धिनिषेधे हसेर्लुङि माङ्युपपदे 'मोपहसीः' इत्येव रूपम्। ३७—प्रथमं वर्त्स्यसीति रूपं वृतु वर्तन इत्यस्य, द्वितीयं वृधु वृद्धावित्यस्य लृटि। 'वृद्भ्यः स्यसनोः' इति वा परस्मैपदम्। न वृद्भ्यश्चतुर्भ्य इतीण्निषेधः। तेनोभयं साधु। ३८—स्खल संचलने इति घटादिः। तेन स्खलयतीत्येव साधु। ३९—श्वस प्राणनेऽदादिः। तेन शपो लुकि विश्वस्यात् इत्येव साधु। ४०—धृष्णोषीति ञिधृषा प्रागल्भ्ये इत्यस्य स्वादेर्लटि रूपम्। धर्षयसीति च धृष प्रसहने इत्यस्य चुरादेः। ४१—श्लिष आलिङ्गन इति क्से समाश्लिक्षन्

इत्येव साधु। ४२—अयङ् यि क्ङिति ( ७।४।२२ ) इति शीङोऽयङि अन्तादेशेऽतिशय्यते इति कर्मणि यकि रूपं साधु। ४३—'उपसर्गाद्ध्रस्व ऊहतेः' इति ह्रस्वेऽभ्युह्यते इत्येव साधु। ४४—तपोऽनुतापे चेति चिण्निषेधः। तेन सिचि अन्वतप्तेत्येव साधु। ४५—सर्तिशास्त्यर्तिभ्यश्चेत्यङ् आत्मनेपदेपि भवति, पृथग्योगकरणादिति वृत्तिः। अयं चाङ् इयर्तेरेव न त्वर्तेः। समो गम्यृच्छिभ्यामित्यात्मनेपदविधौ तूभयोर्ग्रहणमिति समारत्तेति साधु। ४६—आदेच उपदेशेऽशितीत्यात्वे आह्वास्यामीत्येव साधु। ञित्त्वेपि फलस्याकर्त्रभिप्रायत्वविवक्षायां परस्मैपदम्। ४७—न दुहस्नुनमां यक्चिणाविति यगभावे दुग्धे इति कर्मकर्तरि लटि साधु। ४८—सुखयतीत्येव साधु। भृशादिषु सुखदुःखादयो द्रष्टव्या इति चेत्, सिध्यति रूपमर्थस्तु नोपपत्तिमश्नुते। असुखवती सुखवती भवतीत्येवार्थः। स च प्रकृते न संगच्छते। ४९—प्रकटशब्दात् तत्करोति तदाचष्टे इति णिचि लुङि प्राचकटन् इत्येव रूपम्। इष्ठवद्भावे 'टेः' इति टिलोपेन अग्लोपित्वात्सन्वद्भावो दीर्घश्च न भवतः। ५०—पार तीर कर्मसमाप्तावदन्तश्चुरादिः। तेनाग्लोपित्वादुपधाह्रस्वो न, सन्वद्भावश्च नेत्यपपारत् इत्येव साधु। ५१—नाभ्यस्तस्याचि पिति सार्वधातुक इति गुणनिषेधे नेनिजानीत्येव। ५२—प्रार्थयन्तेत्येव साधु। उक्तो हेतुः पूर्वत्र। ५३—बन्ध बन्धने इत्यनिट्। तेन भन्त्स्यन्त इत्येव कर्मणि लृटि साधु। ५४—दीर्घशब्दात्तत्करोति तदाचष्टे इति णिचि प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति इष्ठवद्भावेन दीर्घस्य द्राघादेशे द्राघयसीत्येव साध्विति पाणिनीयाः। ५५—तिपि गुणे स्तवीतीत्येव साधु। ५६—किरश्च पञ्चभ्य इतीटि रुदविदमुषेत्यादिना सनः कित्त्वे तदाश्रये सम्प्रसारणे च पिपृच्छिषतीत्येव साधु। ५७—भज सेवायामित्यनिट्। तेन प्रतिभक्ष्यतीत्येव साधु। ५८—न माङ्योगे इत्यडाटोर्निषेधाद् अनुगा इत्येव साधु। ५९—रञ्जेर्नलोपस्याप्राप्तेः कर्मकर्तरि लुटि अपरङ्क्तार इत्येव साधु। ६०—चक्षिङ आत्मनेपदित्वात्प्रत्याचचक्षिरे इति वक्तव्यम्। पक्षे ख्याञादेशे तु प्रत्याचख्युः प्रत्याचख्यिरे इति च लभ्ये। ६१—सम्पूर्वा-

दर्तेर्लुङ्यात्मनेपदे तशब्दे सिज्लोपस्यासिद्धत्वाद् आटश्चेति वृद्धौ कृतायां ह्रस्वादङ्गादिति सिज्लोपाप्रवृत्त्या समार्ष्टेति रूपमिष्यत इति तत्त्वबोधिनी-कारः। लावस्थायामेवाडिति भाष्योक्तसिद्धान्तादाटि कृते सर्वतोन्तरङ्ग-त्वाद्वृद्धौ ह्रस्वाभावान्न सिज्लोप इति समार्ष्टेत्येव रूपमिति च दाधि-मथाः। तेन दीक्षितोक्तं समार्तेति रूपं चिन्त्यम्। ६२—दशन्तीत्येव साधु। उक्तो हेतुः पूर्वत्र। ६३—चक्षिङः ख्याञ् इति ख्याञादेशेन ख्यायत इत्येव कर्मणि लटि रूपम्। ६४—दैप् शोधने इति भूवादिः सकर्मकः परस्मैपदी। तेन अवदायत इति कर्मकर्तरि समाधेयम्। ६५—'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्याये प्रत्यये गोपायतीत्येव साधु। ६६—अनिदितां हल इत्यादिनोपधानकारस्य लोपे निकृत्यत इत्येव साधु। ६७—राधो हिंसायां सनीस् वाच्य इति राध आकारस्य इस्। अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः, स्कोरिति सलोपः। प्रतिशब्दो हिंसाद्योतकः। तेन प्रतिरित्सामीति साधु। संसिद्धावर्थे चाङ्पूर्वस्य राधोऽच इस् नेत्यारिरात्सामीति रूपं न्याय्यमेव। ६८—उतश्च प्रत्यया-दसंयोगपूर्वात् इति हेर्लुकि 'निशिचनु' इत्येव रूपम्। ६९—रा दान आदादिकः, तस्माच्छपो लुकि सार्वधातुके लिङि रायात् इत्येव रूपम्। ७०—लृदित्त्वाद् अङि विमुच इत्येव साधु। ७१—मुचेः कर्मणि लुङि इटि प्रत्यये सिचि 'अमुक्षि' इत्येव रूपम्। ७२—ह्री लज्जाया-मित्यस्मात्सार्वधातुके लिङि यासुटि जिह्रीयात् इत्येव साधु। ७३—वृतु वर्तने इति सेट्। तेन लृटि वर्तिष्यस इत्येव न्याय्यम्। ७४—'द्युद्भ्यो लुङि' इति रुचेर्वा परस्मैपदम्। पुषादिद्युताद्य्लृदित इत्यङ्। तेन व्यरुचत् इति साधु। अत्र रुचिर्दीप्त्यर्थः। ७५—नात्र भावे प्रत्ययो युज्यत इति तिष्ठेयुरित्येव साधु। ७६—लिङ्लुङोरेव हनो वधादेशोनुशिष्टः, तेनान्यत्र हन्तेरेव प्रयोगो युक्त इति 'अहन्यन्त' इत्येव साधु। ७७—द्रु गताविति न घटादिः। तेन णिचि वृद्धौ सत्यां द्रावयेदित्येव साधु। ७८—अचि विभाषेति ग्रो लो विधीयते विभाषा। यकि परतोऽचोऽभावाद् निगीर्यत इत्येव साधु। ७९—गमेरिट् परस्मैपदेष्विति परस्मैपदे विहित

इडात्मनेपदे न भवतीति गंस्यत इत्येव साधु रूपम्। नश्चापदान्तस्य झलीति गमेर्मकारस्यानुस्वारः। ८०—मील निमेषणेऽकर्मकः। तेन णिचि उन्मीलयन्तीति वक्तव्यम्। ८१—तपस्तपःकर्मकस्यैवेति नियमान्नात्र कर्मवद्भावः। अनुतापेऽर्थे शुद्धे कर्मणि तपोऽनुतापे चेति चिणो निषेधे सिचि अन्वतप्तेत्येव साधु। ८२—'नेट्यलिटि रधेः' इति लिड्वर्जे इटि नुम्नेति रधिष्यतीत्येव साधु। ८३—सम्पूर्वात् जनेः कर्तरि लुङि इटि सिचि इडागमे समजनिषीति साधु। ८४—गातिस्थाघुपाभूभ्य इति सिचो लुकि 'न्यधाः' इत्येव दधातेर्लुङि मध्यमैकवचने रूपम्। ८५—मिपोऽम्। तस्य स्थानिवद्भावेन पित्त्वात् गुणेऽतनवमित्येव साधु। एवमेव आप्नवम् इति शुद्धम्। ८६—'चक्षिङो नित्ये ख्याञादेशे ऽस्यतिवक्तिख्यातिभ्योऽङ् इत्यङि अख्यः, अख्यथा इति रूपद्वयं साधु। क्शादिरयमादेश इति भाष्याद् अक्शासीः, अक्शास्था इति रूपद्वयं साधु। तेन 'आचक्षिष्ट' इति प्रामादिकमेव। ८७—उपसर्गयोगात्पूर्वमटि कृतेऽभ्यवाहारयमित्येव साधु। अभ्यवहरतिर्भोजने वर्तते। ८८—अत्रापि पूर्वमटि तत उपसर्गयोगेऽपादेक्ष्य इति दिशतेर्लृङि रूपं व्यवाहरिष्य इति च हरतेर्लृङि निर्दुष्टं रूपं ज्ञेयम्। अपपूर्वो दिशतिर्व्याजीकरणे वर्तते। ८९—कुच अल्पीभावे तौदादिकः कुटादिः परस्मैपदी। तेन शतरि संकुचन्तीत्येव साधु। ९०—लुभ गार्ध्ये इत्ययं सेट्। तेन लृटि लोभिष्यन्तीत्येव न्याय्यम्। ९१—श्नसोरल्लोप इति छिन्द्धि इत्येव साधु। ९२—शप आक्रोशे स्वरितेत्। तेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे शानचि शपमाना इति साधु। क्षाम्यन्त इत्यत्रोपधादीर्घो न प्राप्नोति। श्यनि तद्विधेः। इह च परतः कर्मणि यक् श्रूयते। ९३—सनि मीमेति धातोरच इसि, अत्र लोपोऽभ्यासस्येत्यभ्यासलोपे निर्मित्सतीत्येव रूपम्। माङ् माने इत्यस्मात्सनि तु पूर्ववत्सन इत्यात्मनेपदे निर्मित्सत इत्येव निर्दुष्टं रूपम्। ९४—अत्र प्रयोजक व्यापारोऽपेक्ष्यत इति णिच् प्रयोज्यः। णिचि च सति लुङि चङि पर्यणीनयामेत्येव साधु। ९५—प्रार्थयन्तेत्येव साधु। हेतुः पूर्वत्रासकृदुक्तः। ९६—व्यतीयन्ते इति इङ् गतौ दिवादिः,

तस्य कर्तरि लटि रूपं बोध्यम्। दिवादेराकृतिगणत्वाङ्गीकारे संक्षीयत इति सिध्यतीत्याहुः। ९७—व्यय गताविति भ्वादिषु स्वरितेत् पठितः, तेन व्ययतीति साधु। पक्षे व्ययते इत्यपि। ९८—यङ्लुगन्तान् शेषात्कर्तरि परस्मैपदमिति परस्मैपदे लटि तिपि वरिवर्त्ति, वरिवर्तीति इति रूपे साधुनी। ९९—भद्यत इत्येव साधु। साधुत्वे पूर्वं हेतुरुक्तः। १००—उद्वरतीति वृञ् आवरणे चुरादिष्वाधृषीयः। इत्यस्माण्णिजभावपक्षे लटि तिपि रूपं शक्यं व्याकर्तुम्। उत्पूर्वस्यास्यात्रार्थे प्रयोगो व्यवहारमनुपतति न वेति सन्दिह्यते। १०१—नमेरनिट्कत्वात् समुन्नंस्यतीत्येव साधु। १०२—वदेर्यजादित्वाल्लिटि किति सम्प्रसारणे व्यूदिरे इत्येव साधु। भासनोपसंभाषेत्यादिना विमत्यर्थविशेषणे आत्मनेपदम्। १०३—अत्र प्रयोजकव्यापारोऽपेक्षित इति णिचि एधयाञ्चक्रुः, एधयाञ्चक्रिरे इति वा स्यात्। एधाञ्चक्रुरिति तु न साधु। प्राकृते प्यर्थे आम्प्रत्ययवत्कृञोनुप्रयोगस्येति करोतेरात्मनेपदेनैव भवितव्यम्। १०४—उपनिपूर्वादस्यतेर्लङि 'उपन्यास्यन्' इत्येव साधु। उक्तो हेतुः। १०५—निपूर्वाद्बध्नातेः कर्मणि लुङि प्रथमपुरुषबहुवचने न्यभन्त्सतेत्येव साधु। चिण्वद्भाव इट् चेति अज्झन् ग्रहदृशामेवोक्तौ। १०६—अभिप्रेम इत्येव साधु। वृद्धेरप्राप्तेः। १०७—इरितो वेति अरुधः, अरौत्सीः इति च सिचि परस्मैपदे साधुनी रूपे। १०८—दृशेर्णिचि गुणे लुङि चङि सन्वल्लघुनीति सन्वद्भावस्याप्राप्तौ अददर्शत् इति साधु। उर्ऋत् इति सूत्रप्रवृत्तौ पाक्षिक्याम् अदीदृशत् इत्यपि साधु। १०९—गृधु अभिकाङ्क्षायाम् इति दिवादिः परस्मैपदी सेट्। तेन लुङि सिपि 'अगर्धीः' इत्येव साधु। ११०—इति सुबन्तेषुगतं सँस्कृतं च। इहावृत्तिरनवधानात्। १११—अत्राभ्यासस्य नुकोऽप्राप्तेर्दीर्घे च प्राप्ते तातप्येते इत्येव साधु। ११२—द्रु गतावित्यनिट्। तेन द्रोष्यन्तीत्येव साधु। ११३—अर्थयतेर्लुङि चङि नन्द्राः संयोगादय इति 'थ' शब्दस्य द्वित्वे आर्तथन्तेति साधु। अर्थ उपयाच्ञायामनुदात्तेत्, अदन्तश्च। वोपदेवस्तु णिचि परतः पूर्वं वृद्धौ कृतायामाकारान्तत्वात्पुकं करोति,

आर्तथपतेति च रूपं साधु पश्यति। तद्भ्रमसात्। वृद्धेर्लोपो बलीयानिति पूर्वं लोपे वृद्धेरप्राप्तेः। ११४—क्षमेर्णिचि पुगामस्याप्राप्तेर्मित्त्वाद् ह्रस्वत्वे च क्षमयामीत्येव साधु। ११५—अधि इङ् अध्ययन इति ङित्त्वादात्मनेपदी। गाङ् लिटीति गाङादेशेऽधिजगे इत्येव साधु। ११६—संग्राम युद्धे इति चुरादिष्वनुदात्तेत्। अस्मादेव सोपसर्गादडादिविधिः। तेन असंग्रामयन्तेत्येव साधु। ११७—नयतेर्लुङि भ्सौ 'अनैषुः' इत्येव रूपम्। लङः शाकटायनस्यैवेति यातेर्भेर्जुस्। पक्षे ऽयानिति भवत्येव। ११८—एतेर्लिङि इति ह्रस्वेऽभ्युदिया इत्येव साधु। ११९—जागर्तेरनेकाच्त्वाद् धातोरेकाचो हलादेः क्रियासमभिहारे यङ इति यङ् नैव भवति। नतरां यङ्लुक्। भृशं जागर्तीति वा पुनः पुनर्जागर्तीति वा वक्तव्यम्। १२०—सम्पपृच्छे इति कर्तरि लिट्यात्मनेपदे साधु रूपमभिमन्यतेऽश्वघोषः। इह प्रच्छेः सकर्मकत्वात् विदिप्रच्छिस्वरतीनामुपसंख्यानं कर्तव्यमित्यात्मनेपदं न प्राप्नोति। अकर्मकादित्यनुवृत्तेः। संयोगान्तत्वाद् असंयोगाल्लिट् कित् इति कित्त्वं च नेति सम्प्रसारणमपि न। तेन प्रमाद एवायमिति प्रामाणिकाः। १२१—'आस' इति अस गति दीप्त्यादानेष्वित्यस्य भ्वादेः स्वरितेतो लिटि रूपम्। न तु अस भुवि इत्यस्य। तेन न कश्चिद्दोषः। १२२—प्रशंसेत् इत्येव युक्तम्। युक्तत्वे उक्तो हेतुः। १२३—'उपनयेत' इत्येव साधु। आचार्यकरणेर्थोऽपाधावात्मनेपदंविधानात्। उपपूर्वाद् नयतेर्लिङि शपि गुणेऽयादेशे यासुटि अतो येय इतीयादेशे वलि लोप उपनयेतेति रूपम्। १२४—प्रोपाभ्यां समर्थाभ्यामित्यनेन क्रम आत्मनेपदं विहितम्। तत्र प्रक्रमत उपक्रमत इति शब्विकरणमेव क्रमिमुदाहरन्ति व्याख्यातारः। वा भ्राशभ्लाशेत्यादिना विकल्पेन शपः श्यनि प्रोपपूर्वस्य क्रमेरारम्भेर्थे प्रयोगो भवति न वेति विद्वांसो निर्णयं ब्रुवन्तु। १२५—शम लक्ष आलोचने चुरादिः। नान्ये मितो ऽहेताविति मित्त्वाभावे ह्रस्वो न। धातूनामनेकार्थत्वात् श्रवणे वृत्तिः। आत्मनेपदाभावस्तु चिन्त्यः। १२६—उद्घाटनमिति घट संघात इत्यस्य चुरादे रूपं न तु घट चेष्टायामिति भ्वादेः।

तेन घटादित्वाभावान्मित्त्वं नेति ह्रस्वो न। १२७—अनुग्रहीष्यतीत्येव। ग्रहोऽलिटि दीर्घ इति दीर्घेण ईडागमेन भवितव्यम्। क्त्त्वाभावात् सम्प्रसारणमपि न। १२८—सन्वल्लघुनीत्यस्याप्रवृत्तेः सन्वद्भावस्य दीर्घस्य चाभावात् अपस्पर्शत इति भवति। उऋत् इत्यृति तु दीर्घ सन्वद्भावयोः कृतयोः अपीस्पृशत् इत्यपि साधु। १२९—लेलिहाना इति कानचि निर्दुष्टं रूपम्। कानच्च लिडादेशः। प्रकृते च लिडर्थो न संगच्छते। लडर्थस्तु विवक्ष्यते। तेन लिहेर्यङ्लुकि लेलिहत इति वक्तव्यम्। भाषायामपि यङ्लुक् क्वचिदिति वचनात्। यङि वा लेलिह्यमाना इति वाच्यम्। १३०—दूरं करोतीत्यर्थे प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति णिचि इष्ठवद्भावेन दूरस्य दवादेशे दवयतीति रूपम्। स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुण इति हि इष्ठादिषु विधिः स्मृतः। बहुलग्रहणादिष्ठवद्भावो नेति समाधिः। १३१—शमो दर्शन इति गणसूत्रेण शाम्यतिर्दर्शनेर्थे मिन्न भवतीति निशामयेति साधु। १३२—मदी हर्षग्लेपनयोर्घटादिष्वनूद्यते। तेन मित्त्वाद्ध्रस्वे मदयतीति साधु। मदयति हर्षयतीत्यर्थः। १३३—द्विषश्च (३।४।११२) इति लङो झेर्जुसं वा विधत्ते। तेन अद्विषुः, अद्विषन् इत्युभयं साधु। १३४—हनो वध लिङि, लुङि च, आत्मनेपदेष्वन्यतरस्यामित्यार्धधातुकात्रमधिकृत्य विधिः। तेन कर्तृ कर्मणोरुभयोरपि भवति। तस्मात्कर्मण्यपि अवधीति रूपं साधु। तथा च कालिदासप्रयोगः—जघान समरे दैत्यं दुर्जयं तेन चावधि (रघौ १७।५) इति। पक्षेऽ'घानि' इति भवति। १३५—भाष्यकारमते चकाधि इति रूपम्। धि चेति सूत्रेण सिचः सकारस्य लोपो नान्यसकारस्येत्यन्ये। तन्मते 'चकाद्धि' इत्येव। १३६—अत्रार्थे रुचेर्यङ्नेति भाष्यम्। तत्रानभिधानं हेतुः। १३७—अबोभूवीत् इत्येव भुवो यङ्लुगन्ताल्लुङि तिपि रूपम्। गातिस्थेति सिचो लुक्। यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्। अबोभवीदिति तु चिन्त्यम्। भुवो वुको नित्यत्वादिति भाष्यग्रन्थविरोधात्। ईडभावपक्षे ऽबोभोत् इति रूपान्तरम्। १३८—सिजभ्यस्तविदिभ्यश्चेति झेर्जुसि गुणे च 'अजुहवुः' इत्येव साधु। १३९—रुधेःकर्मणि लुङि

इटि 'उपारुत्सि' इत्येव साधु। इट आगमस्य गुणस्य चाप्राप्तेः। लिङ्-सिचावात्मनेपदेषु इति सिचः कित्त्वात्। १४०—आडागमे आटश्चेति वृद्धौ औप्यन्तेत्येव साधु। इदं च वपेः कर्मणि लङि रूपम्। १४१—स्निह्याम इति श्यनि साधु। अदुदध्म इति च। १४२—रुधिः श्नम्विकरणो न तु श्नाविकरण इति रुणद्धीत्येव रूपम्। १४३—दक्ष वृद्धौ शीघ्रार्थे चेति भ्वादिष्वनुदात्तेत् पठितः। तेन लोटि तुप्रत्ययस्याभावात् तातङादेशस्यासंभवः। तेनाशिषि लिङि दक्षिषीष्टेत्येव निरवद्यं रूपम्। १४४—उपन्यास्थत् इत्येव साधु। अस्यतेस्थुक् इति थुगागमेन भवितव्यम्। १४५—धीङ् आधारे दिवादिः। विरुपसर्गः। अनुः कर्मप्रवचनीयः। १४६—उत्तरतिरुत्तरवचने न, प्रसिद्धः। तत्रार्थे उत्तरशब्दाण्णिच् कर्तव्यः। उच्छब्दं पृथक्कृत्वाऽटि उदतरयत् इति रूपं साधय। १४७—एषृ गतौ भूवादिः। तस्यानुपूर्वस्य लङ्यात्मनेपदे रूपमिति सर्वमवदातम्। १४८—अनुप्रयुज्यमानस्य करोतेरेवाम्प्रत्ययवदात्मनेपदविधानादस्तेरनुप्रयुज्यमानात्तु यथाप्राप्तं परस्मैपदमेव साधु। १४९—जागृतेत्येव साधु। १५०—सर्तेः प्रपूर्वाल्लिङ्युसि प्रसस्रुरित्येवानवद्यं रूपम्। एत्वाभ्यासलोपयोरप्राप्तेः। १५१—अत्राभ्यासलोपस्याप्रसक्तेः जजागारेत्येव भवति। उषविदजागृभ्योऽन्यतरस्यामित्यामि तु जागरामासेत्यदि। १५२—षिधु संराद्धौ दिवादिषु पुषादिः। तेन लुङि अङि माङ्युपपदे मा सिधत् इत्येव साधु। १५३—सिजभ्यस्तविदिभ्यश्चेति झेर्जुसि 'अविदुः' इत्येव साधु। १५४—चिण्वदिटोरप्राप्तेः अमंसत इत्येव कर्मणि लुङि रूपम्। १५५—दृढं करोतीत्यर्थे प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति णिचि इष्ठवद्भावे च 'र ऋतो हलादेर्लघोः' इति रकारे द्रढयतीत्येव साधु। १५६—उपनमयेति साधु। मित्त्वाद् ह्रस्वः।

———

## लकाराधिकारश्चतुर्थः ।

१—अत्रातिसर्गोऽर्थः । अतिसर्गश्च कामचाराभ्यनुज्ञानम् । तथा चापिरपि तत्रार्थे कर्मप्रवचनीयः प्रयुक्तः । तेन प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेत्यनेन लोण्न्याय्यः । अपि याहि, अपि तिष्ठेत्येवं न्यासः कार्यः । २—अत्र संभावनेऽलमित्यादिना लिङ् प्रयोज्यः । अपिशब्दोऽत्र संभावनायां कर्मप्रवचनीयः । अप्यतीयात्सागरो वेलामित्याद्येव साधु । ३—अत्र चित्रीकरणं गम्यत इति शेषे लृडयदावित्यनेन लृडेव साम्प्रतम् । तेन वर्तिष्यन्त इत्येव साधु । ४—अभिज्ञावचने लृट् इति क्रीडिष्याव इत्येव साधु । ५—यावत्पुरा निपातयोर्लट् इति भविष्यत्यर्थे लट्प्रयोगः साधुः । अत्र पुराशब्दः सन्निहितं भविष्यमाह । अन्यत्र चिरातीतमप्याचष्टे । तथा चामरः स्यात्प्रबन्धे चिरातीते निकटागामिके पुरेति । ६—आशंसावचने लिङ् इति लिङ् साधुः । ७—अत्रापिशब्दो बाढमित्यर्थमाचष्टे । तेन उताप्योः समर्थयोर्लिङ् इत्यनेन लिङ् युक्तः । ८—जातुयदोर्लिङ् इत्यनवक्लृप्त्यर्थे जातुशब्दे उपपदे लिङ्डेव साधुः । अनवक्लृप्तिरसंभावनेत्यनर्थान्तरम् । तेन निन्देदिति युक्तं वक्तुम् । ९—गर्हायां लडपिजात्वोरिति सर्वलकारापवादो लडेवात्र युक्तः । १०—नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोरित्यनेनानद्यतने भविष्यति विहितस्य लुटो निषेधाल्लृट एव साधुत्वे प्रस्थास्यत इति वक्तव्यम् । ११—क्रियाप्रबन्धे क्रियासातत्ये गम्यमानेऽनद्यतने भूते विहितस्य लङः प्रतिषेधाल्लुङ् प्रयोज्यः । अदात्, अग्रहीत् इति च वक्तव्यम् । १२—कामप्रवेदनेऽकच्चितीति लिङेव साधुः । तेन भुञ्जीतेति वक्तव्यम् । १३—अत्र शक्नोत्यर्थोपाधिको धात्वर्थ इति शकि लिङ् चेत्यनेन लिङि जयेयमित्येव साधु । १४—लिङ् यदीत्यनेन कालशब्दे उपपदे यच्छब्दे च लिङि कुर्वीतेत्येव सुवचम् । १५—यदि धनार्जनस्यावसरस्तवागत इति प्राप्तकालतार्थस्तदा प्रैषातिसर्गेत्यादिना लोडेव शक्यः प्रयोक्तुम् । तेन धनमर्जयेत्येवं वक्तव्यम् । १६—अत्र पारोक्ष्यं नास्तीति लिटोऽनवकाशः । १७—संभावनेऽलमित्यादिनात्र

लिङेव साधुः। तेन तरेत् इति वाच्यम्। १८—अत्र भूतानद्यतनेऽर्थे पुरि लुङ् चास्मे इत्यनेन प्रतिषेधेपि लट् स्मे इत्यनेन लट् निर्बाधः। तेन निर्दुष्ट एष न्यासः। १९—अत्र क्रियातिपत्तिर्गम्यते लिङो निमित्तं हेतुहेतुमद्भावश्चास्तीति लृङेव साधुरिति पाणिनीयाः। २०—कामप्रवेदनेऽकच्चितीति कच्चितः पर्युदासादत्र लिङोऽप्राप्तेर्वर्तमानसमीपे भविष्यति लट् साधुः स्यात्। २१—भूते चेत्यनेन क्रियातिपत्तौ गम्यमानायां लृङेव युक्तः। तेन अवत्स्यम्, अभविष्यमिति च वक्तव्यम्। २२—हेतुहेतुमतोर्लिङ् इति लिङ् न्याय्यः। तेन प्रमनायेतेत्यादि निरवद्यं वचः। २३—प्रभूयादित्याशिषि लिङि साधु स्यात्। न चात्राशीरर्थः। तेन प्रश्नेऽर्थे विधिनिमन्त्रणेत्यादिना लिङि प्रभवेत् इत्येव सुवचम्। २४—परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्येति लुडेव साधुः। तेन अध्येतेति वक्तव्यम्। २५—परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्य इत्यनेनात्र लङ् साधुः। भगवान् भाष्यकारः साकेतरोधेन तुल्यकाल इति साकेतरोधो भगवतो दर्शनविषयः सन्नपि देशान्तरे वृत्तेस्तस्य परोक्षोभूत् इत्यर्थः। तेनोपपन्नो लङ्। २६—अनद्यतने लुट् इत्यत्रानद्यतनशब्दो बहुव्रीहिः। तेन व्यामिश्रे लुण्न भवतीति अद्य वा श्वो गमिष्यामीति वक्तव्यम्। २७—अनद्यतने लङ् इत्यत्राप्यनद्यतन इति बहुव्रीहिनिर्देशः। तेन व्यामिश्रे लङ् नेति अभुद्महीति वाच्यम्। २८—अत्र हेतुहेतुमद्भावो नास्तीति क्रियातिपत्तौ सत्यामपि लृङ् नोपपन्नः। सभाजयिष्यामीति वक्तव्यम्। अत्रार्थे हेतुप्रपञ्चस्तु भूमिकायां द्रष्टव्यः। २९—अत्रापि वाक्ययो हेतुहेतुमद्भावो नास्तीति क्रियातिपत्तौ गम्यमानायामपि लृङ् दुर्लभः। यत्रापि लृङ् प्रयुज्यते तत्रोभयोर्वाक्ययोस्तस्य प्रयोगो दृश्यते न त्वेकत्र। ३०—माङि लुङ् इति माङ्युपपदे सर्वलकारापवादो लुङ् शिष्टः सूत्रकारेण, व्याख्यातश्च भाष्यकारेण। माशब्दोप्यस्ति प्रतिषेधार्थकः, तत्प्रयोगे लोडपि निर्बाध इत्याहुः। ३१—अत्र लिङ् निमित्ते लृङ् क्रियातिपत्तावित्यनेन भविष्यति काले लृङेव युक्तः। स्पष्टा चात्र क्रियातिपत्तिः। न वर्षसहस्रं जीविष्यामि न च पुत्रशतं जनयिष्यामीत्यर्थः। असंभवात्। ३२—स्मोत्तरे

लङ् चेत्यनेन लङ् वा साधुः स्याल्लुङ् वा। ३३—अत्र पारोक्ष्यं नास्तीति न्यगदं न्यगादिषमिति वा वक्तव्यम्। ३४—लिङ् यदीति लिङ्-प्रयोगः साधुः। ३५—धनिको भवेदिति न संभाव्यत इत्यर्थात् अनव-क्लृप्त्यमर्षयोरकिंवृत्तेपि इत्यनेन लिङ् वा प्रयोज्यो लृङ्वा। अत्र नामेति संभावनायम्। ३६—क्रियातिपत्तेरविवक्षितत्वादत्र लिङ् साधुः। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं न वस्तुसत्ता। तदाद्याचिख्या-सायामिति सना ज्ञापितत्वात्। ३७—अत्र क्रियातिपत्त्यभावाल्लृङ्-प्रयोगश्चिन्त्य इति टीकाकाराः। ३८—अत्र लिखेत्, लेखिष्यतीति वा वक्तव्यम्। उक्तपूर्वो हेतुः। ३९—लडर्थे लृट्प्रयोगो व्यवहारानुगत इति भूमिकायां वितत्य प्रतिपादितमिति तत्रैव द्रष्टव्यम्। ४०—अयमपि लृट्प्रयोगः शिष्टैरभ्यनुज्ञातोऽशिष्टोपि शास्त्रेणेति भूमिकायां निर्णीतम्। ४१—अयमपि पूर्वेण तुल्ययोगक्षेम इति न पृथग्विचार्यते। ४२—इदमा निर्देशात् संनिहितः कालो ऽपरोक्षश्चेति लुङो विषयः। आगमत् इति वक्तव्यम्। ४३—वर्तमाने ब्रुवं आहादेशो विहितः। अत्र च भूतकाल-विषया क्रियेत्यस्थाने लट् प्रयोगः। कवयश्च बहुशः प्रयुञ्जते। तत्र वर्तमानताध्यासेन व्याख्येयम्। अन्यथा स्मशब्दोऽधिकः प्रयोक्तव्यः। ४४—अद्यापीत्युक्ते नायं लिटो विषयः। तेन प्रविशतीत्येव साधु। ४५—चित्तविक्षेपादिनापि पारोक्ष्यं भवतीति लिट्प्रयोगः सर्वथोपपन्नः।

---

## सकर्मकाकर्मकत्वाधिकारः पञ्चमः।

१—चल कम्पने इति भ्वादिषु, चल विलसने इति तुदादिषु पठ्यते। तेनार्थानुरोधादुभयोऽपि धातुरकर्मकः। तथा च शिष्टव्यवहारः। तेन गतः, अतिक्रान्त इति वा वक्तव्यम्। २—रुदिर् अश्रुविमोचन इत्यर्थनिर्देशे कर्मण उपसंग्रहादकर्मकः। तथाऽपि धात्वन्तरान्तर्णयात्सकर्मको भवति। तथा च भट्टौ प्रयोगः—रोदिम्यनाथमात्मानम् ( १८।३० ) इति। प्रकृते गतं चिन्तयन्तो रुदन्तीत्यर्थः। ३—लुभ गार्ध्ये इति दिवादिषु पठ्यते।

शिष्टव्यवहारेऽकर्मकोयमिति दर्शितं भूमिकायाम्। तेन परकीयेऽर्थे इति सप्तमी प्रयोक्तव्या। ४—मिल श्लेषण इति तौदादिकः। श्लेषणमिति श्लिषेर्ल्युटि रूपम्। श्लिषिश्चाकर्मक इत्यभ्युपगमः। तेन मिलतिरप्यकर्मक एवेति स्थितम्। तस्मान्मया सह मेलिष्यसीत्येवं वाच्यम्। ५—ष्णिह प्रीताविति दिवादिः। प्रीतिरिति प्रीङः क्तिनि रूपम्। प्रीङ्यमकर्मक इति भूमिकायां वितत्य निदर्शितम्। तेन स्निह्यतिरप्यकर्मक एवेति व्यवस्थितम्। तस्माच्छिशुक इति सप्तमी निर्देशः साधुः। ६—गृधु अभिकाङ्क्षायामित्यर्थनिर्देशो भ्रमकः। शिष्टव्यवहारेऽकर्मकोऽयं धातुरिति भूमिकायां दर्शितम्। तेन परकीयेर्थे गृध्यतीति वक्तव्यम। ७—धुञ् कम्पने, स्वरतिसूतीत्यादिसूत्राज्ज्ञापकाद्दीर्घान्तोपि स्वादिरेषधातुः। दीर्घान्तश्च तुदादौ क्र्यादौ चुरादौ च पठ्यते। सर्वत्र चायं सकर्मक इति धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम्। वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च॥ इति कविरहस्यपद्यात्स्पष्टम्। अर्थनिर्देशे कम्पनमिति कम्पयतेर्ल्युटि रूपं द्रष्टव्यम् तेन तरवो न कम्पन्ते न चलन्तीति वा वक्तव्यम्। ८—प्रीञ् तर्पण इति क्र्यादिः सकर्मकः। प्रीञ् तृप्ताविति नोक्तम्। अत एव इगुपधज्ञाप्रीकिरः क इत्यत्र प्रीणातीति प्रिय इति प्रीञो व्युत्पत्तिर्दर्शिता न प्रीङः। तेन प्रीयत इति वाच्यम्। ९—स्कन्दिर् गतिशोषणयोरिति भूवादिरकर्मक उपसर्गवशादर्थान्तरे वर्तमानः सकर्मको भवति। अवपूर्वोऽयं सकर्मक इति विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोरिति सूत्रे वृत्तौ गेहं गेहमवस्कन्दमास्त इत्युदाहरणात्स्पष्टम्। तथा च माघप्रयोगः—पुरीमवस्कन्द लुनीहि नन्दनमित्यादिः। १०—क्रृपू सामर्थ्ये इत्यकर्मकः। तेन णिच्सहकारेण कल्पयिष्यसीति वक्तव्यम्। ११—स्वाद आस्वादन इति नित्यं सकर्मकः। स्वदिरप्यास्वादनेऽनुभवे सकर्मकः, रुचावकर्मक इति दीक्षितः। तेन पूर्ववाक्येपि स्वदन्त इत्येव प्रयोज्यम्। १२—जीव प्राणधारण इति धात्वर्थेन कर्मण उपसंग्रहादकर्मकः, उपसर्गवशात्तु सकर्मको भवति, अर्थान्तरं चार्पयति। उपजीवनमाश्रयणमित्यनर्थान्तरम्। तेन इमां वयमुप-

जीवाम इत्येव स    १३—परा पूर्वो भवतिरकर्मकः पराजयप्राप्तौ वर्तते ।
तथा च भाष्यप्रयोगः—ते ऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुरिति ।
परिपूर्वस्तु नियमेन सकर्मकः । १४—राधीद्योर्यस्य विप्रश्न इत्यत्र
ईक्षतिर्दैवपर्यालोचने वर्तत इति धात्वर्थेन कर्मणो दैवस्योपसंग्रहादकर्मकः ।
तेन वाक्ये दैवमिति न प्रयोक्तव्यम् । १५—जनी प्रादुर्भाव इत्यकर्मको
धातुः । तेन पुत्रमजनयत् इति वाच्यम् । पुत्रं व्यजायतेति वा वाच्यम् ।
अत्र शिष्टानुग्रहोस्तीति नास्यासाधुत्वमतिशङ्कनीयम् । अन्तर्भावितण्यर्थोऽ
यमिति व्याख्येयम् । १६—लुप्लृ च्छेदन इति तुदादिरर्थनिर्देशादेव व्यक्तं
सकर्मकः । तेन कर्मणि लुलुपे इति वा वाच्यं ननाशेति वा प्रयोक्तव्यम् ।
१७—शिक्ष विद्योपादाने सकर्मकः । प्रकृते प्रयोजकव्यापारोऽपेक्षित इति
णिचि शिक्षयामासुरिति पठनीयम् । १८—स्तॄञ् आच्छादने । अर्थनिर्दे-
शादेवायं सकर्मकः । तेन विस्तीर्णो भूत्वेत्यादि वक्तव्यम् । १९—रुह बीज-
जन्मनीति भ्वादिरकर्मकः । आङ् पूर्वस्तु नित्यं सकर्मकोऽर्थान्तरे वृत्तेः ।
तेन स्कन्धमारोढुमिति वक्तव्यम् । २०—स्वापार्थः संविशतिरकर्मको
न त्वर्थान्तरे वर्तमानोपि । प्रकृते च गच्छेदित्यर्थः । तेन स्त्रियमिति
कर्म युज्यते । २१—यु मिश्रणेऽमिश्रणे चेत्यदादिः प्रायेण सकर्मकः ।
तेनात्मानमिति शेषोत्र बोध्यः । वेदे त्वकर्मकोपि यौतिर्दृष्टः ।
तथा च बह्वृचाः पठन्ति—अथा स वीरैर्दशभिर्वियूयाः (ऋ० ७।१०४।१५)
इति । २२—रवि लबि अबि शब्दे । लबि अवस्रंसने चेति धातुपाठः ।
तेनाकर्मकोऽयमिति मुक्तसंशयं शक्यं वक्तुम् । तेन प्रकृतेऽदोषः ।
२३—अत्रावपूर्वो लबिर्धारण आश्रयणे च वर्तत इति युज्यतेऽस्य
सकर्मकता । २४—शीङ् स्वप्न इत्यकर्मकः, उपोपसृष्टस्तु सकर्मको
भवतीत्यत्र उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुपशेष एहि इत्यृक् प्रमाणम् ।
२५—अशूङ् व्याप्ताविति धातुः सकर्मको व्याप्यस्य कर्मणोऽपेक्षितत्वात् ।
तेनार्यावर्तमिति वक्तव्यम् । २६—रभ राभस्य इति नित्यं सकर्मकः । तेन
कर्मणि प्रारभ्यतेति साधु स्यात् । २७—भञ्जो आमर्दन इति धातुः ।
अस्यार्थनिर्देश एव तथाऽभूद्यथाऽस्य सकर्मकत्वे सन्देहो मा भूत् । तेन

भग्ना भूत्वेति वक्तव्यम् । २८—रुधिर् आवरण इति नित्यं सकर्मकः । तेन महात्मनो विरुन्धन्तीत्येव साधु । २९—अवतरतेर्गत्यर्थत्वात्सकर्मकत्वमभ्युपेयते । तथा सत्यप्यधिकरणविवक्षया नद्यामिति साधु स्यादिति चेन्नैवम् । लौकिकी हि विवक्षा प्रभवति न प्रायोक्त्री । लोकश्चात्र कर्मैव विवक्षति नाधिकरणमिति कविप्रयोगेषु व्यक्तम् । तेन नदीमवतरतीति वक्तव्यम् ३०—वृक्षानारोहन्ति इत्येव साधु । उक्तो हेतुः । ३१—मुच्लृ मोक्षणे तुदादिः । मोक्षयतिः सकर्मकः । मोक्षयिष्यामि मा शुच इत्यादिप्रयोगदर्शनात् । तेन मुञ्चतिरपि सकर्मकः । मुचोऽकर्मकस्य गुणो वा ( ७।४।५७ ) इति सूत्रं तु मुचेरकर्मकतामपि शब्दत आह । अकर्मकत्वे शिष्टप्रयोगास्तावन्मृग्याः । तेन कर्मणि मुच्येमहीति वक्तव्यम् । ३२—ञि इन्धी दीप्ताविति रुधादिषु पठ्यते । अर्थनिर्देशादयमकर्मक इति शक्यमन्यथाध्यवसातुम् । धातुपाठेऽर्थनिर्देशो यत्र तत्र परिष्कारमर्हतीति भूमिकायामस्माभिरुदाहृतम् । प्रयोगेऽयं धातुर्नित्यं सकर्मकः । समीधे दस्युहन्तमम्, पुत्र ईधे अथर्वण इत्यादिषु भ्राष्ट्रमिन्धः, अग्निमिन्ध इत्यादिषु च तथा दर्शनात् । तेन प्रकृते प्रज्वलितुं दीपितुमिति वा वक्तव्यम् । ३३—आगमयस्वेत्यस्य मा त्वरिष्टा इत्यर्थः । तेनास्याकर्मकताऽसन्दिग्धा । आगमेः क्षमायामिति तङ् । रध हिंसासंराद्ध्योरिति दिवादिः संराद्धावर्थेऽकर्मकः । ३४—शरणमाक्रमिषुरित्येव साधु । आक्रमणमास्कन्दनमित्यनर्थान्तरम् । तेनात्राङ्पूर्वः क्रमिः सकर्मकः । अन्यत्रोर्ध्वगमनेऽर्थे वर्तमानस्त्वकर्मको दृष्टः । आक्रमते सूर्यः । ३५—कण्डूञ् गात्रविघर्षण इति कण्ड्वादिः । अत्र धात्वर्थेन कर्मण उपसंग्रहादकर्मकोऽयं धातुरिति जायते भ्रमः । परमयं सकर्मक इत्यत्र कवीनां प्रयोगाः प्रमाणम् । तथा च कविकुलपतिः कालिदासः प्रायुङ्क्त कण्डूयमानेन कटं कदाचित् ( रघौ २।३७ ) । मृगीमकण्डूयत कृष्णसारः ( कुमारे ३।३६ ) । शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् इति च शाकुन्तले । मनुस्मृतावपि—न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिर इति ( ४।८२ ) । तेन कण्डलं मे पादतलमिति वक्तव्यम् । ३६—अवपूर्वो धाव् प्रायेणाकर्मकः कविप्रयोगे

दृष्टः। अवधत्त अवधानं दत्तेत्यर्थः। समीपीभवनेर्थे संनिधात्यकर्मकः। तथा च बालरामायणे प्रयोगः—वाङ्मूर्त्ति मे देवता संनिधत्ताम् इति। अर्थान्तरे तु सकर्मकः। (दृष्टिं) पुनः सहस्रार्चिषि संनिधत्ते (रघौ १३।४४) इत्यत्र यथा। ३७—अनुपूर्वः कपि चलन इति धातुर्नित्यं सकर्मकः। तेन दीनान् दुर्गतान् इति वक्तव्यम्। ३८ उपपूर्वो विशतिरकर्मक आसने वर्तमानः। तेन पितुरङ्के उपविष्टाविति वाच्यम्। ३९—आङ्पूर्वः श्लिषिः सकर्मकः, केवलस्त्वकर्मक इति पूर्वमवोचाम। स्पष्टं चैतद् गत्यर्थश्लिषशीङ् इति सूत्रे वृत्तौ। तेन तनयमाश्लिष्यदित्येव शोभनं वचः। ४०—अभ्यस्यतिः सकर्मकः, यथा केवलोऽस्यतिः। रोमन्थमभ्यस्यतीत्यादिषु दर्शनात्। तेन चिरमभ्यस्तरथचर्या इति वा समासेन, चिर रथचर्यामभ्यस्तवन्त इति वा व्यासेन वक्तव्यम्। ४१—लुप्लृ छेदन इति सकर्मकः। अर्थनिर्देश एव तथात्वस्य ज्ञापकः। तेन कर्मणि लोप्स्यत इति वक्तव्यम्। ४२—मीञ् हिंसायां क्र्यादिः सकर्मकः, मीङ् हिंसायां दिवादिरकर्मक इति भूमिकायां सप्रमाणं निदर्शितम्। तेन सर्वथा निर्दुष्टोऽयं न्यासः। ४३—घृषु संघर्षे इति भ्वादिः सकर्मकः। घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धम् इत्यादिषु दर्शनात्। स्पर्धार्थेपि सकर्मकत्वं न जहाति। स्पर्धतिरपि सकर्मकोऽकर्मकश्चेति कौमुद्यां स्थितम्। तेन सद्भिः संघर्षमवाप्येति वक्तव्यम्। ४४—रिचिर् विरेचने, रिच वियोजनसंपर्चनयोरिति धातू उभावपि सकर्मकौ। तेन कर्मकर्तरि उद्रिच्यत इति वक्तव्यम्। उद्रिक्तोऽभ्यधिको भवतीत्यर्थः। ४५—शॄञ् हिंसायामिति प्रायेण सकर्मकः। शृणाति हिनस्तीति शरुरिति व्युत्पत्तेः। शरारुर्घातुको हिंस्र इति कोषाच्च। कविभिस्तु क्वचित् क्वचिदकर्मकत्वेनापि प्रयुक्तः। तथा च विशरारोर्जटाकलापस्येति श्रीहर्ष चरिते। स्वयं विशीर्णद्रुमपर्णवृत्तितेति कुमारे। तेन सदनं विशीर्णमिति न दूष्यम्। ४६—वस निवासेऽकर्मकः। तेन सकर्मकत्वलाभायाधिपूर्वः प्रयोक्तव्यः। अध्युषितेति वक्तव्यम्। ४७—स्रवतिरत्रान्तर्भावितण्यर्थो वेदितव्यः। स्रावयतीत्यर्थः। बहुलं चैष एवं प्रयुज्यत इति भूमिकायां प्रपञ्चितम्। ४८—सृज विसर्गे

तुदादिः सकर्मको दिवादिश्चाकर्मकः। अत्र तुदादेः सम्पूर्वस्य सृजेः कर्मणि लटि प्रयोगो बोध्यः। ४९—शिष असर्वोपयोग इति चुरादिष्वाधृषीयः। अयं सकर्मक इत्यसन्देहः। तेन क्तः प्रयोक्तव्यो न क्तवतुः। ५०—मृगयामुद्दिश्य निर्यातीत्यर्थः। अन्तर्णीतक्रियान्तरा अपि धातवः प्रयुज्यन्त इत्युदाहरणैः स्पष्टीकृतं भूमिकायाम्। ५१—अत्रापि पूर्व एव हेतुरिति साधुत्वमनभिशङ्कनीयम्। ५२—ह्नुङ् अपनयन इति धातुः। अपनयतिः सकर्मकः, तेन ह्नुतिरपि। तस्मादपह्नूयत इति कर्मकर्तरि साधु स्यात्।

---

## अथोपसर्गेषु विवेचनम्।

१—संस्कृते वाङ्मये जुहोतिः केवल एव देवतोद्देश्यकहविर्दाने वर्तते न तूपसृष्टः। एष व्यवहारः। व्यवहारपरतन्त्रा वयम् इति विशब्दः परिहार्यः। २—अत्र समुपसर्गोऽस्थाने। भूषणार्थस्याभावात्सुडपि दुर्लभः। तेन कुरुत इत्येव वक्तव्यम्। ३—प्रपूर्वो लभिर्विप्रपूर्वो वा वञ्चनेऽतिसन्धाने वर्तते। प्रकृते नासावर्थो घटत इति लभ्य इत्येव पाठ्यम्। ४—शसु हिंसायामिति भ्वादिः। प्रायेणायं विपूर्व इति विशसनमिति वक्तव्यम्। ५—सम्पूर्वः सरतिर्योन्युपसंक्रमे वर्तते। संसरति देही नानायोनीरुपगच्छतीत्यर्थः। तेन प्रवाहशब्देन प्रयोक्तव्यः। ६—अत्रोच्छब्देन चिनोतिर्विशेषणीयः। उच्चिनुत इति वक्तव्यम्। केवलस्य तु इष्टकाश्चिनोतीत्यादिषु प्रयोगः। ७—दीप्यत प्रकाशत इत्यर्थः। सन्दीप्यतेऽग्निर्ज्वलति समिद्धो भवतीत्यर्थः। अत एव सन्दीपनानीमानि वचनानि क्रोधस्येति संगच्छते। ८—प्रतिश्रवः प्रतिज्ञानं भवति। तेन प्रकृते प्रतिना नार्थः। श्रूयत इत्येव साधु। ९—उत्सृजेयमिति साधीयः स्यात्। विसर्गो विमोक्षो भवति। १०—अत्रानुना नार्थः। अनुः सादृश्यद्योतकः, स चेह नेष्यते। ११—उत्पूर्वस्य वपतेरुद्धारोऽर्थः, यथाऽऽवापोद्वापावित्यत्र। प्रासने तु प्रशब्दस्तदर्थद्योतकः प्रयोक्तव्यः पराशब्दो वा। प्राचीवपमिति वक्तव्यम्।

१२—कुशब्दोऽव्ययम्, नायं प्रादिर्नैवोपसर्गः। कुत्सितं चेष्टन्ते विचेष्टन्ते असच्चेष्टन्त इति वा वक्तव्यम्। १३—आङ् पूर्वो मुञ्चतिर्बन्धने वर्तते। प्रकृतेऽर्थे तेन विपर्यासो जातः। मुक्तशस्त्रस्येति वक्तव्यम्। १४—आङ्-पूर्वो वहतिर्जननें वर्तत इति धारणेऽर्थे केवलः प्रयोक्तव्यः। १५-प्रपूर्वो युजिर्व्यवहारे वर्तते। सम्प्रपूर्वस्तु संयोजने संश्लेषणे। तच्च प्रकृते न युज्यत इति प्रयुङ्क्त इत्येव वक्तव्यम्। न च सम्यक् प्रयोगः सम्प्रयोगो भवति। तत्रास्य व्यवहारस्यादृष्टेः। १६—हननीय इत्येव साधु। सम्पूर्वो हन्तिस्तु संघातीकरणे सम्पिण्डने वर्तते। १७—विपूर्व एव स्तृणातिः प्रपञ्चमाह न केवलः। तेन विस्तीर्णमिति वक्तव्यम्। १८—जनी प्रादुर्भावे इति धातुः प्रपूर्वः प्रसवे विजनने वर्तते। यथा 'प्रजाता' इत्यत्र। तेन जायत इत्येव श्रेयः। १९—युगपरिवर्तानुसारेणेति वक्तव्यम्। आवर्तोऽम्भसां भ्रम इति रूढिः। यौगिकोप्यावर्तशब्दो वृत्तेः पौनःपुन्यमाह नत्ववस्थान्तर-गमनम्। २०—अत्रानुना नार्थः। अनुशयो हि पश्चात्तापो भवति। २१—विलेखनं विशिष्टं लेखनमिति मा स्म भ्रमीः। विलेखनमुल्लेखन पादादिनाऽऽहत्य मृदाद्युत्क्षेपणम् भवति। तथा च कवीनां प्रयोगाः—पादेन हैमं विलिलेख पीठम् ( रघौ ६।१५ )। यमोपि विलिखन्भूमिम् ( कुमारे २।२३ )। मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण (काव्य प्र० )। क्वचिदालेखनेपि वर्तते। तेन प्रकृते विशब्दस्त्याज्यः। २२—संवीक्षणं विचयनं मार्गणं मृगणं मृग इत्यमरात्संविपूर्व ईक्षतिर्विचयने गवेषणे वर्तते। तेन वीक्ष्येत्येव वक्तव्यम्। २३—सम्पूर्वो वृतु वर्तन इति धातुरुत्पत्तौ वर्तते न तु संव्यवहारे। तेन सह वर्त इत्येव साधु। २४—परापूर्वः पततिरुपगमने प्रत्यागमने वा वर्तते। तेन आपतन्तीत्येव वक्तव्यम्। २५—सम्पूर्वो दधातिः संयोजने सम्पर्चने वर्तते। तेन समा नार्थः। दधती-त्येव पर्याप्तम्। २६—अत्र समोऽभावे श्रेयान्विन्यासः स्यात्। समा सहितोपि कथंचित्सह्यः। २७—विलयनं द्रवीभवनमित्यनर्थान्तरम्। तेन विशब्दमपहाय लीयत इत्येव वाच्यम्। २८—अत्र समा नार्थः। करोमीत्येव पर्याप्तम्। २९—प्रतिशयनं नाम देवतायाः सम्मुखे भक्तस्या-

नशनं शयनं यावन्मनोरथसमृद्धिम्। तेन प्रतिशब्दः परिहार्यः। शयित इत्येव च वक्तव्यम्। ३०—निलयनं नामान्तर्धानं भवतीति निस्त्याज्यः। लीना इत्येव निर्दुष्टं वचः। ३१—सम्पूर्वो दंश दशन इति धातुः संयोजने वर्तते। यथा सन्दंश इत्यत्र। तेन केवलः प्रयोक्तव्यः। ३२—परिपूर्वो हरतिस्त्यागे उपेक्षणे वा वर्तते न तु ग्रहणे मोषणे वेति हृत्वेत्येव प्रयोक्तव्यम्। ३३—सत्युपकण्ठम् इति शब्दे उपेन नार्थः। गच्छन्तीत्येव पर्याप्तम्। उपकण्ठमित्यव्ययीभावः सामीप्ये वर्तते। ३४—संवाहनं मर्दनं भवति। तेन वाहका इत्येव वक्तव्यम्। ३५—आङ्पूर्वः षेवृ सेवने इति धातुः क्रियातात्पर्ये वर्तते। इदं च विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः (३।४।५६) इति सूत्रे स्पष्टम्। तेन विरलमासेवन्त इति वदतो व्याघातः। विरलं सेवन्त इत्येव निर्दोषो न्यासः। ३६—आवसथ इति संवसथ इति च। संवसथो ग्रामपर्यायः। तेन संवसथे इति वक्तव्यम्। प्रतिपूर्वो वसतिः समीपे वसने वर्तते। तेन वसति स्मेति वाच्यम्। ३७—प्रमोहो मूर्च्छा भवति। तेन मूढेषु इत्येव वक्तव्यम्। ३८—बहूनां सहोच्चारणं समुच्चारणं भवतीति व्यक्तवाचां समुच्चारण इति सूत्रे वृत्तौ स्पष्टम्। तेनोच्चार्यमाणे इत्येव वक्तव्यम्। ३९—यती प्रयत्ने इति धातुराङ्पूर्वः परतन्त्रीभवने वर्तते। इदं मय्यायतते। इदं मदायत्तमित्यादिषु तथा दर्शनात्। तेन यते प्रयते वेति प्रयोज्यम्। ४०—अभिनिविशते इति वक्तव्यम्। अत्रार्थेऽभिनिपूर्वो विशतिर्व्यवह्रियते नाभिविशतिः। ४१—उद्गीर्यंत इति वक्तव्यम्। गृणातिर् अयं प्रायेणोच्चारणे कथने वोत्पूर्व एव प्रयोगमवतरति न केवलः। ४२—संनिपातः समुदायो भवतीति संनिपतन्तीति समुदिता भवन्तीत्यर्थमाचष्टे। स च प्रकृते नेष्ट इति निपतन्तीत्येव वक्तव्यम्। ४३—लभिरनुपसृष्ट एव प्रयोगमवतरन्दृष्टो यावदर्थान्तरं न वक्ति। सम्पूर्वस्य त्वस्य प्रयोग एव नास्ति। ४४—आहरणं हि भिद्यते हरणात्। धनस्य हरणं मोषणं विवक्षितं न तु कुतश्चिदानयनम्। तेनाङ् त्याज्यः। ४५—उपपीडिता इति वक्तव्यम्। आचार्योऽपि हिंसाथामर्थे उपपीड्यतिमिच्छति। तथा चासूत्रत—सप्तम्यां चोपपीडरुधकर्षः

(३।४।४९) इति । उत्पीडयति स्तूपरोधने वर्तते । यथा—अन्योन्यमुत्पीडयदुत्पलाद्या इत्यत्र कुमारे ( १।४० ) । उत्सारणे वा यथा एताः करोत्पीडितवारिधारा इत्यत्र रघौ ( १६।६६ ) । ४६—दिव परिकूजने चुरादिः । अयं परिपूर्व एव प्रयुज्यते, तेन परिदेवनेति प्रयोज्यम् । ४७—आरभामहे प्रारभामहे इति वा वक्तव्यम् । केवलस्य प्रयोगादर्शनात् । ४८—संजीवितोऽभवदिति वक्तव्यम्, उज्जीवित इति वा । एष व्यवहारः प्रायिकः । केवलस्यापि प्रयोगोऽदुष्टः । तथा चामरः पठति—जीवातुर् जीवनौषधम् इति । ४९—प्रपूर्वो गृह्णातिर्बन्धने वर्तते । तथा चामरः पठति प्रग्रहोपग्रहौ बन्द्याम् इति । तेन प्रतिगृह्य परिगृह्येति वा वक्तव्यम् । ५०—छिन्दन्तीत्येव साधु । आङ्पूर्वश्छिदिर्बलाद् हरणे मोषण आमर्शने वा वर्तते । ५१—अत्रान्तिकशब्देनोपशब्दो गतार्थ इति 'इहि' इत्येव प्रयोक्तव्यम् । ५२—संकथा संलापो भवति । पतितैः संकथाऽपि पातित्याय भवति । ५३—चक्षिङः ख्याञ् इति सूत्रे वर्जने प्रतिषेधो वक्तव्य इति वार्तिकं पठति वृत्तिकारः, दुर्जनाः संचक्ष्या इति चोदाहरति । तेन सम्पूर्वश्चक्षिङ् वर्जने वर्तत इति प्रकृतेऽदोषः । ५४—अस्तीह नियोगविनियोगयोर्भेदः । तेन धर्मार्थे विनियुञ्जीतेति वक्तव्यम् । ५५—परिपूर्वस्यादादिकस्य विदेस्तु प्रयोग एव नास्ति । स च विदिः सेट्कः । परिपूर्वस्य विन्दतेस्तु ज्यायांसं भ्रातरं परिवर्ज्य कनीयसो दारग्रहणमर्थः । तेने प्रकृते वेदितार इत्येव वक्तव्यम् । ५६—उपमन्त्रणं रहस्युपच्छन्दनं भवतीति काशिका । तेन निमन्त्रयितव्या इति वक्तव्यम् । ५७—अवोऽस्थाने । तारयेदित्येव वक्तव्यम् । सलिलमवतरति सलिलमवगाहत इत्यर्थः, न सलिलस्य पारं यातीति । पारयानं चेह विवक्षितं यथा तरति शोकमात्मविद् इत्यादिषु । ५८—पर्यवपूर्वस्तिष्ठतिर्विरोधे वर्तते तथा चामरः पठति—पर्यवस्था विरोधनम् इति । आचार्यः खल्वपि परिपन्थिपरिपरिणौ पर्यवस्थातरीति सूत्रे तमेवार्थं प्रमाणयति । तेनावस्थाताह इत्येव वक्तव्यम् । ५९—उल्लेखनं प्रायो विलेखनं भवति न तूपरि लेखनं प्रत्यवमर्शनं वा । तेन लिखितपूर्वे उद्धृते इति वा वाच्यम् । ६०—संवरणे समुच्छब्दोऽर्थविपर्यासकृत् ।

संवरणं गोपनं प्रच्छादनं भवति। वरणमेवानुपसृष्टमभीष्टमर्थमर्पयति। ६१—प्रतिपूर्व इषिर्ग्रहणे वर्तते न त्वभिलाषे। अभिलाषश्चेहार्थः प्रतिभाति। तेन प्रतिशब्दस्त्याज्यः। ६२—आङ् पूर्वो हन्तिराघाते वर्तते न तु घाते। घातो वा वधो वेहाभिप्रेत इति मा त्वं वधीर्मामिति निर्दुष्टं वाक्यम्। ६३—निध्यानं निर्वर्णनमवलोकनं भवतीति चिन्तनेऽर्थे ध्यायेदित्येव शोभनं वचः। ६४—चेष्टस्वेति वाच्यम्। विर्विरोधे वर्तते। विचेष्टते विरुद्धं चेष्टते। ओदनस्य पूर्णाश्छात्रा विचेष्टन्ते विकुर्वत इत्यर्थः। ६५—आङ्पूर्वो दधातिः प्रायेण जनने वर्तते न तु धारणे। तेन दधातीत्येव शोभनम्। ६६—इष्टदेवतां परामृशतीति वक्तव्यम्। परामृशति मनसा तां गच्छति चिन्तयतीत्यर्थः। आमर्शनं तु स्पर्शनं वा भवत्याच्छेदनं वा। आमृष्टं नः परैः पदम् इत्यत्र कुमारे ( २।३१ ) यथा। ६७—क्षिपन्तीत्येव शोभनम्। आक्षेपणं त्वाच्छेदनमवहेलनं वा भवति। ६८—प्रतिरोद्धुमित्येवानवद्यम्। अवरोधनं त्वेकत्र प्रदेशे व्रजादौ रोधनं भवति। यथाऽवरोधोऽन्तःपुरं भवति, अन्तःपुरस्था योषितो वा। ६९—आभाषते इत्येव सुवचम्। आलपतीत्यर्थः। यदि समुपसर्गः प्रयुयुक्षितस्तदा ऽऽङा नार्थः। संभाषत इत्येव वक्तव्यम्। ७०—अवधीयतामिति साधु। प्रायशः समवधानं सज्जीकरणं भवति यथा सामग्रीसमवधानम्। कोषे तु साध्ववधानं समवधानमित्यपि स्थितम्। ७१—विचिकित्सा संशयो भवतीति चिकित्सतीत्येव वक्तव्यम्। ७२—हनिष्यामीत्येव साधु। संपूर्वस्य तु हन्तेः सम्पिण्डनमर्थः। ७३—दिग्धशब्दो विषदिग्धमाह। विषाक्ते दिग्धलिप्तकावित्यमरः। सम्पूर्वस्तु संशये वर्तते। ७४—प्रस्मरणं विस्मरणं भवति न तु प्रकृष्टं स्मरणम्। तेन स्मरसीत्येव प्रयोक्तव्यम्। ७५—संज्ञानं स्मरणं वा भवत्यानुगुण्येन व्यवहारो वा। मातरं मातुर्वा संजानाति। मातरं मात्रा वा संजानीते। अभ्युपगमनं खल्वपि—शतं संजानीते। कविना तु ज्ञाने परिचयनमात्रे संजानातिः प्रयुक्तः। तेन समा नार्थं इति भाति। ७६—आर्यसीदुपसंहृतवानिति जयमङ्गला। आङ्पूर्वोयमिरत्रार्थे शक्त इति सन्दिग्धः। ७७—प्रबोद्धुमित्यत्र प्रशब्दोऽस्थाने।

प्रवाहो नाम स्यन्दनं भवति। ७८—सन्धत्त इत्यस्य साधुत्वे सन्दिह्यते। आधत्त इति तु शोभनं स्यात्। ७९–शयान इत्येव वक्तव्यं समाऽर्थान्तरप्रतीतेः। ८०—निर्वाहयतीति प्रयोक्तव्यम्। कालमतिवाहयति कालं गमयतीत्यर्थात्। ८१—प्रवाहयति प्रकर्षेण वाहयति गमयतीत्यर्थः। कर्णीरथः प्रवहणं डयनं च समं त्रयमित्यत्रामरे प्रपूर्वो वहतिः प्रकृष्टगतौ त्वरितगमने दृष्टः। तेन प्रकृतेपि न कश्चिद्दोषः। यथाऽऽपः प्रवहन्ति स्यन्दन्ते तथा गमयतीत्यर्थः। ८२—अत्रोपप्लावितशब्दे उपेन नार्थः। उपप्लव उपद्रवो भेदो विनाशो वा भवति। प्लावितब्रह्मानन्दसहोदरो रस इति वा वक्तव्यम्। परिशब्दो वा योजनीयः। ८३—विभाषा लीयतेरिति लीङो वाऽऽत्वम्। सम्पूर्वो लीङ् संकोचे वर्तते संलीनकुक्षिरित्यत्र यथा। संलापयेयुरिति च ण्यन्तं संलपिं बलाद् बुद्धौ करोतीति समृशब्दोऽस्थाने। ८४—उपहतं दूषितं भवति। तेनाऽऽहता इत्येव वक्तव्यम्। ८५—उज्जृम्भत उत्सहत इति प्रायोऽर्थः। व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भत इति भर्तृहरौ (२।६)। प्रकटीभवनं वर्धनं चाप्यर्थावभ्युपगतौ। तेन प्रकृतेऽदोषः। ८६—संसरणं नाम योनेर्योन्यन्तरोपसंक्रमणं भवति। तेन प्रासरदिति वक्तव्यम्। ८७—अभियोक्तव्यः प्रष्टव्यो भवति दोषेण संयोक्तव्यो वा। प्रयोक्तव्यानीति वक्तव्यम्। ८८—सीतामार्गेण इत्येव साधु। सम्पूर्वस्य मार्गतेः प्रयोगो न दृष्टः। अमरोपि संवीक्षणं विचयनं मार्गणं मृगणं मृग इति सम्शब्दमुपेक्षते। ८९—व्याङ् पूर्वो हन्तिर्विरोधे वर्तते न हिंसायाम्। स्वोक्तं व्याहन्ति। विरुणद्धीत्यर्थः। ९०—आहरणमानयनं भवतीति विरुद्धार्थप्रतीतिवृदाङ् परिहार्यः। ९१—परिधानं हि परितो धानं भवति। शाटीं परिधत्ते। बृहतिकां परिधत्त आच्छादयतीत्यर्थः। तेन मालां धत्त इत्येव वक्तव्यम्। ९२—सम्यगवधानं समवधानमित्यर्थस्वीकाराददोषः। ९३—अत्र प्रतिना नार्थः। प्रतिपूर्वो हन्तिर्गतिप्रतिरोधे रूढः। घातयिष्यसीत्येव साधु। ९४—संवेशः स्वाप इत्यनर्थान्तरम्। तेन प्रविश्येत्येव शोभनं वचः। ९५—अगारं प्राविशमिति प्रयोक्तव्यम्। न ह्यभेः प्रयोगो व्यवहारानुपाती। ९६—आसञ्जनमासञ्जनं भवति। आसञ्जनं नाम

प्रस्थानाभ्यनुज्ञासम्प्रार्थनम् । तेनाङ् त्याज्यः । पृष्ट इत्येव साधु । ९७—ष्ठिवु निरसने इति धातुर्नियमेन निपूर्वः प्रयुज्यते । तेन स्वर्णनिष्ठीवि जातमिति वाच्यम् । ९८—पश्चात् परावर्ततेति वक्तव्यम् । उपावर्तनं त्वन्तिके प्रत्यागमनं भवति । शक्यं वा पश्चादिति पदं त्यक्तुम् । परावर्ततेत्येव विवक्षितमर्थमर्पयिष्यति । ९९—परावपन्निति वक्तव्यम् । उक्तो हेतुः । १००—उपाचरन्तीत्यत्रोपशब्दो व्यर्थः । सेवनाद्यर्थान्तरप्रतीतेः । १०१—शीर्षघातमित्येव साधु । अवघातस्तु व्रीह्यादेः कण्डने रूढः । १०२—अत्राप्यवशब्दोऽस्थाने । अवरोधनं नामैकत्र व्रजादौ रोधनमुच्यत इत्युक्तं पुरस्तात् । १०३—अत्र प्रशब्दस्त्याज्यः । प्रजातः प्रसूत इत्यनर्थान्तरम् । १०४—प्रतिवेशे प्रवसतीति विरुद्धं वचः । प्रवसति दूरे वसति इत्यर्थः । प्रशब्दो विप्रकर्षे । तेन वसतीत्येव वक्तव्यम् । १०५—आपततीत्येव साधु । उक्तः परापूर्वस्य पततेरर्थः । १०६—न ह्याविद्ध आसमन्ताद् विद्ध इति भवति । किन्तर्हि कुटिलः । तथा चामरः पठति—आविद्धं कुटिलं भुग्नमिति । तेन विद्ध इत्येव साधु । १०७—अभ्युपपूर्वः पद्यतिरनुग्रहे वर्तते । अभ्युपपत्तिरनुग्रह इति चामरः । प्रतिशब्दः प्रयोक्तव्यः । प्रतिपत्तव्यमिति वक्तव्यम् । १०८—आहृत्येत्येव साधु । समाहरणं समाचयनं भवति । १०९—आधीनमित्यसंस्कृतम् । अधीनमित्येव प्रयोक्तव्यम् । इनं स्वामिनमधिगतोऽधीनः । ११०—कल्पते सम्पद्यत इत्यर्थः । तेनोपशब्दस्त्याज्यः । १११—प्रमार्ष्टीत्येव साधु । संमार्जनं नाम समूहन्याऽवकरादेरपनयनं भवति । यथा मार्गसंमार्गः क्रियताम् । ११२—तपोऽतप्यतेत्येव वक्तव्यम् । अनुतापः पश्चात्तापोऽनुशयो भवति । ११३—अतिक्रान्तेति वक्तव्यम् । निष्क्रामति बहिर्गच्छतीत्यर्थात् । ११४—हेडृ अनादरे इत्ययं धातुर्नित्यमवपूर्वः प्रयुज्यते । तेनावहेलस इत्येव साधु । डलयोरभेदः । ११५—म्नाऽभ्यासे इति धातुर्नित्यमाङ्पूर्वः प्रयोगमवतरति न केवलः । तेन आमम्नाविति वक्तव्यम् । ११६—हि गतौ वृद्धौ चेति स्वादिषु पठितः । अयं प्रायः प्रपूर्वः प्रयुज्यते । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इति श्वेताश्वतरोपनिषदि ।

अन्तर्भूतण्यर्थोऽयं प्रेषणे वर्तते। ११७—निःपूर्वो मुच्लृ मोक्षण इति धातुः सर्पत्वक्त्यागे वर्तते। निर्मुच्यते भुजङ्गः। निर्मुक्तो भुजङ्गः। भुजङ्ग-निर्मोक इत्यादिषु दर्शनात्। अन्यत्र तु प्रायेण केवलः प्रयुज्यते यावदर्थ-विशेषो न विवक्ष्यते। तेन मोचयितुमित्येव वक्तव्यम्। समयतन्तेत्यत्रापि दोषः। सम्पूर्वो यतिः स्पर्धायां संघर्षे वर्तते विग्रहणे वा। यथा देवाश्चा-सुराश्च संयत्ता आसन् इति ब्राह्मणप्रयोगे। तथा चामरः पठति—स्त्रियः संयत्समित्याजिसमिद्युध इति। तेनायतन्त प्रायतन्तेति वा प्रयोक्तव्यम्। ११८—कुञ्च क्रुञ्च कौटिल्याल्पीभावयो र्भ्वादिषु पठितौ। नान्तरेणोपसर्गं कुञ्चतिः प्रयोगमवतरन्दृष्टः। तेन संकुचिताऽऽकुञ्चिता वेति वक्तव्यम्। ११९—अवधारणं निश्चयनं भवति। तेन धृत्वेत्येव साधु। १२०—अत्रो-च्छब्देन नार्थः। स च त्वचमुन्मथतीत्यादिषु चरितार्थः। अवलोडने तु केवलो मन्थतिर्मथ्नातिर्वा प्रयुज्यते। १२१—समापत्तिः समागमो भवति। तेनोत्पद्यत इति वक्तव्यम्। १२२—अपहृत इत्येव व्यवहार्यम्। १२३—समालम्भो विलेपनमित्यमरप्रामाण्यात् केवलो लभिः प्रयोक्तव्यः। १२४—भृतमिति साधीयः स्यात्। प्रायेण संभरणं संग्रहणं भवति साध्य-साधनानाम्। १२५—भृञ् धारणपोषणयोर्जुहोत्यादिः सकर्मकः। निः-पूर्वस्यास्य तिङि प्रयोगो नास्ति। कृत्स्वेव प्रायो दृश्यते। प्रकृते आयतते, लम्बते तदाश्रितो भवतीत्यर्थः। निर्बिभर्तीति तत्रार्थेऽप्रयुक्तपूर्वमिति त्याज्यम्। १२६—सम्पातः संचारो भवति। तेन पतति निपतत्यवपततीति वा वक्तव्यम्। १२७—अत्रोपसंहरतिः प्रापणे वर्तत इति निर्दुष्टो न्यासः।

---

## अथ कृत्सु विवेचनम्।

### तत्र क्त्वाधिकारः प्रथमः।

१—समासेऽनञ्पूर्वे क्त्वो ल्यप् इति प्राथ्र्येत्येव साधु। २—स्कन्दिर् गतिशोषणयोरिति धातुरनिदित्। तेन ल्यपि स्थानिवद्भावात् कित्त्वे नलोपः स्याद्देव। नलोपनिषेधस्तु क्त्वि स्कन्दिस्यन्दोरिति सूत्रे क्त्वाग्रहणान्न

भवति। तेनावस्कद्येत्येव साधु। ३—ल्यपि शास इदङ्हलोरित्युपधाया इकारादेशे शासिवसिघसीनामिति च षत्वेऽनुशिष्येति साधु। ४—तूष्णीमि भुवः ( ३।४।६३ ) इति क्त्वाणमुलौ विधत्ते। तृतीयाप्रभृतीन्यन्यतरस्यामिति वा समासः। तेन तूष्णीम्भूय, तूष्णीं भूत्वेत्युभयं साधु। ५—साक्षात्प्रभृतीनि चेति नमः शब्दस्य वा गतिसंज्ञा। तेन गतिसमासे नमस्कृत्येति रूपम्। असमासे च नमस्कृत्वेति न कश्चिद् दोषः। ६—अनुपसृष्टस्य नमेर्विकल्पेन मित्त्वं सोपसर्गस्य तु नित्यम् इति ण्यन्तात् परिणमेर्ल्यपि लघुपूर्वादिति णेरयादेशे परिणमय्येत्येव साधु। ७—नञ्समासे क्त्वो ल्यब्न। अनञ्पूर्वे इत्युक्तेः। तेनादृष्ट्वेत्येव साधु। ८—अत्र जनिक्रियायाः सुखानुभवः कर्ता। शुश्रूषित्वेत्यस्य च देवदत्तादिः शिष्यः। तेन भिन्नकर्तृकत्वे क्त्वा न प्राप्नोति। तेन स्थितस्य देवदत्तस्येत्याद्यध्याहार्यम्। बहुलं चैवं प्रयुञ्जते कवय इति तत्र तत्रायमेव समाधिर्वेदनीयः। ९—जप जल्प व्यक्तायां वाचि। जप मानसे चेति धातुपाठः। जपिरयं सेट्। तेन जपित्वेत्येव साधु। १०—लूञ् छेदने क्र्यादिः। अयं सेट् श्र्युकःकितीतीण्निषेधात् लूत्वेत्येव साधु। ११—बहिषो गतिसंज्ञा नेति बहिर्गत्वेत्येव साधु। १२—अत्रापि भिन्नकर्तृकत्वे क्त्वा पूर्ववत्समाधेयः। स्थितस्येध्याहार्यम्। एवं निशमनस्थाने समानकर्तृके भवतः। १३—जान्तनशां विभाषेति क्त्वि नलोपो वेति रङ्क्त्वा, रक्त्वेति रूपद्वयम्। सकर्मकोऽयं धातुः। कर्मकर्तरि प्रयोग इति चेन्मैवम्। यगात्मनेपदचिण् चिण्वद्भावाः प्रयोजनमिति कर्मवत्त्वे प्रयोजनपरिगणनात् क्त्वायां कर्मवद्भावो न भवतीत्युक्तं भवति। रक्तो भूत्वेति वक्तव्यम्। १४—ज्वलह्वलह्मलनमामनुपसर्गाद्वेति सोपसर्गस्य ज्वलेर्नित्ये मित्त्वे मितां ह्रस्व इति ह्रस्वत्वे प्रज्वलय्येति साधु। १५—ह्रस्वस्य पिति कृति तुगिति तुकि उपसर्गात्सुनोतिसुवतिस्यतिस्तौतीत्यादिना मूर्धन्यादेशेऽभिष्टुत्येत्येव साधु। १६—उन्दी क्लेदने। अनिदितां हल इति नलोपे समुद्येति वक्तव्यम्। १७—पृथक्शब्दस्य शास्त्रे गतिसंज्ञा न क्वापि पठितेति पृथग् भूत्वेत्येव साधु। १८—रच प्रतियत्ने चुरादिरदन्तः। णावल्लोपस्य स्थानिवद्भावा-

दुपधावृद्धावसत्यां ल्यपि लघुपूर्वादिति णेरयादेशे विरचय्येत्येव साधु। १९—परावृत्येत्येव साधु। णिचा नार्थः। २०—नाधार्थप्रत्यये च्व्यर्थे इति क्त्वा। तृतीया प्रभृतीन्यन्यतरस्याम् इति वा समासः। तेन पञ्चधा कृत्वा पञ्चधाकृत्येत्युभयं साधु। २१—समानकर्तृकयोः पूर्वकाले इत्यनेन भिन्नकर्तृकत्वे क्त्वा दुर्लभः। न दूरीभूतः परितोषश्च नाभूदित्येवं वाक्यं प्रणेयम्। २२—सातेर्गतिसंज्ञा नेति सात्कृत्वेत्येव साधु। २३—वर्जनक्रियाकर्तृत्वमाकरेषु कथं चित्कल्पयित्वा समाधेयम्। २४—सम्पूर्वो हन्तिः सकर्मकः। तेन तन्तव इति संहननक्रियायाः कर्म। तस्मात्संहताः सन्त इति वक्तव्यम्। २५—विद्लृ लाभे। अयं व्याघ्रभूत्यादिमते सेट्कः, भाष्यादिमतेऽनिट्कः। तेन वित्त्वेति साधु। २६—चकासृ दीप्तौ। ततो णिचि ल्यपि संचकास्येत्येव साधु। ल्यपि लघुपूर्वादिति णेरयादेशो न भवति। सकारस्य लघुपूर्वत्वाभावात्। संजागरय्येति तु साधु। णिचि परतो रकारात्पूर्वो गकारोत्तरवर्त्यकारो लघुरस्तीति णेरयादेशो निर्बाधः। २७—मुद्रां करोतीति णिचि मुद्रयतीतीष्यते। केचिदत्रापुकमिच्छन्ति यथा व्रर्धापयतीत्यत्र। असमासे मुद्रयित्वेत्येव साधु। मुद्रापयित्वेति चापुकि। उपसर्गे संमुद्र्येति वक्तव्यम्। २८—न ल्यपीतीत्त्वनिषेधान्निर्मायेत्येव साधु। २९—उत्पूर्वस्य वहतेर्ल्यपि उदुह्येति निर्दुष्टं रूपम्। वचिस्वपियजादीनां कितीति सम्प्रसारणम्। तस्य प्रकृते दीर्घविधायकं शास्त्रं नास्ति। ३०—शद्लृ शातन इति धातुरकर्मकः। अयं विशीर्णतायां वर्तते, शातनं तु विषयतया निर्दिष्टमिति दीक्षितः। तेन णिच्प्रयोक्तव्यः। विशाद्येति वक्तव्यम्। विशदशब्दाद्वा तत्करोतीति णिचि विशदय्येति साधु स्यात्। ३१—प्रचार्येत्येव साधु। ३२—अत्रापि स्थितयोः स्थितानां वेत्यध्याहार्यम्। ३३—न ल्यपीतीत्त्वनिषेधाद् उद्गायेत्येव साधु। ३४—संजनय्येत्येव साधु। णिचि जनिवध्योश्चेति वृद्ध्यभावाल्ल्यपि लघुपूर्वादित्यस्य प्रवृत्तेः। ३५—श्लोकैरुपस्तौतीत्युपश्लोकयति। समासेऽनञ्पूर्वे क्त्वो ल्यप् इति उपश्लोक्येति साधु। ३६—न ल्यपीतीत्त्वनिषेधात्समनुष्ठायेति साधु।

# तुमुन्नधिकारो द्वितीयः ।

१—तॄ तरणप्लवनयोरित्युदात्तः । वृतो वेति पाक्षिकेणेटो दीर्घत्वेन तरितुं तरीतुमिति रूपद्वयं साधु । २—तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति तुमुन्नपि समानकर्तृकत्व एवेष्यत इति निर्णीतं भूमिकायाम् । तेन निष्क्रामेति ब्रूहीत्येवं न्यसनीयम् । ३—अध्यवपूर्वः षोऽन्तकर्मणीति धातुः । तुमुनि आदेच उपदेशेऽशितीत्यात्वेऽध्यवसातुमित्येव साधु । ४—मस्जिनशोर्झलीति नुमि विनंष्टुमित्येव साधु । ५—प्रक्रमितुमित्येव । क्रमः सेट्त्वात् । ६—बन्ध बन्धने इति धातुः । तस्मात्तुमुनि नलोपाप्राप्तेर्बन्द्धुमित्येव युक्तम् । ७—भिन्नकर्तृकत्वे तुमुन्दुलभ इति वैयाकरणकृतान्तः । अङ्गुलीयकं विचिनुतेत्याज्ञापयति भृत्यान्राजेति न्यासः कार्यः । ८—स्कन्दिर् गति शोषणयोरित्यनिट् । तेनास्कन्तुमित्येव साधु । ९—हनो लिङि लुङि च वधादेशो विहितो नान्यत्र । तेन तुमुनि हन्तुमित्येव । १०—रौतिरुदात्तः । ऊदॄदन्तै र्यौतिरुक्ष्णु शीङ् स्नुनुक्षुश्विडीङ्श्रिभिः । वृङ् वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ इति कारिकायामुदात्तेषु पाठात् । ११—ह्वेञ् स्पर्धायां शब्दे चेति धातुरनुदात्तः । आदेच उपदेश इत्यात्वे आङ्युपसर्गे आह्वातुमिति रूपम् । १२—आस उपवेशन उदात्तः । तेन अध्यासितुमित्येव युक्तम् । १३—व्यतियापयितुमित्येव साधु । १४—विद ज्ञाने इति सेट्कः । तेन वेदितुमित्येव साधु । १५—आचरितुमित्यत्र केन तुमुन् इति तावद्विमर्ष्टव्यम् । तुमुण्ण्वुलावित्यादिना सूत्रेणेति चेन्न । न ह्यत्र शङ्कत इति क्रियार्था क्रियोपपदमस्ति । पुष्पाण्याहर्तुमुपवनं यातीत्यत्र यातीति क्रिया यथा । सूत्रान्तरेण शकधृषज्ञा—इत्यादिनाऽपि तुमुन्दुर्लभः । तेन गुरुविरोधाचरणान्न शङ्कन्ते (न बिभ्यति) इत्येवं वक्तव्यम् । विमतिश्चेदुपपत्तिः प्रदर्श्यताम् । १६—अत्रापि तुमुन् दुर्लभः । परस्य गुणानां स्वस्य दोषाणां चाङ्गीकारे इत्याद्येव साधु स्यात् । १७—भिन्नकर्तृकत्वे तुमुनं न सहन्ते शिष्टा इत्यसकृदुक्तम् । तेन इध्मान्याहरतेत्यादिशातीति वक्तव्यम् । १८—अत्र तुमुण्ण्वुलाविति सूत्रविहित एव तुमुन् । परं स

समानकर्तृकत्व एवेष्यते इति दीक्षितप्रभृतयः। तेनायं चिन्त्यस्तुमुनः प्रयोगः। १९—षिध गत्यां भौवादिकः सेट्कः। तस्य तुमुनि प्रतिषेधितुमित्येव रूपम्। षिधू शास्त्रे माङ्गल्ये चेत्यपि भौवादिकः। ऊदित्त्वादयं वेट्। अस्मात् तुमुनि इडभावपक्षे प्रतिषेद्धुमिति रूपम्। निषेधः प्रतिषेधो विप्रतिषेध इत्यादिषु सेधतिरेव धातुर्न सिध्यतिः। मूर्धन्यविधौ सेधतेरेव भौवादिकस्य ग्रहणात्। २०—असु क्षेपणे इति दिवादिः सेट्। तेन अपासितुमित्येव शोभनम्। २१—अनुजानीहि मां गमनायेत्येव साधु। उक्तो हेतुः। २२—गणयितुमित्येव। नित्योऽत्र णिच्। २३—लिखिः कुटादिरिति मास्म भ्रमीः। तेन गुणे लेखितुमिति ब्रूहि। २४—सभाप्रवेशात् प्रतिषिद्ध इत्येवं न्यसनीयम्। २५—तुष्याम इति क्रियार्थायां क्रिया नेति तुमुण्ण्वुलाविति सूत्रेणात्र तुमुन्दुर्लभः। तेन निवेदनेन, निवेदयन्तो निवेद्येति वा यथाभिप्रेतं वक्तव्यम्। २६—गुपू रक्षण इति धातुः। गुपू धूप विच्छिपणिपनिभ्य आय इत्यायप्रत्यये गोपायितुम् इति रूपम्। आयादय आर्धधातुके वेति पक्ष आयप्रत्ययेऽसति गोपितुं गोप्तुमिति च। २७—भाषणमारभ्यतामिति वक्तव्यम्। २८—क्रुश आह्वाने रोदने चेति धातुरनुदात्तः। तेन विक्रोष्टुमिति रूपम्। २९—यदि शिक्षिता इति शिक्षेर्णिचि निष्ठायां रूपं तदा भिन्नकर्तृकत्वं दोषः। अन्यथा शिक्षिता इति कर्तरि क्तो व्याख्येयः। अस्तीह वामनसूत्रं व्यवसितादिषु क्तः कर्तरि चकारादिति। तथापि तुमुन् केनेति चिन्त्यम्। ३०—उत्थातुमित्येव साधु। ३१—अत्रापि भिन्नकर्तृकत्वमिति तुमुन्दुर्लभः। गृहत्यागे इति वक्तव्यम्। ३२—यत्रैकाज्ग्रहणं चेति वचनाद् एकाच उपदेशेऽनुदात्तात् इत्येष विधि र्यङ्लुकि नेति बोभधितुमित्येव। ३३—गॄ निगरण इति धातुः। तुमुनि गुणे लत्वे च निगलितुम्, निगलीतुमिति च रूपद्वयम्। ३४—स्मेतुमित्येव। ष्मिङ् ईषद्धसने इति नित्यानिट्।

———

## क्तक्तवतोरधिकारस्तृतीयः ।

१—घुषि रशब्दार्थे । घुषिर् विशब्दने इति धातू । घुषिरविशब्दने (७।२।२३) इति विशब्दनादन्यत्र निष्ठायामिण्न । प्रकृते विशब्दनं शब्देनाभिप्रायाविष्करणमर्थ इति घुषितेत्येव साधु । २—हृषितपुष्ट इति तु युज्यते । उक्तं च हृषेर्लोमसु (७।२।२९) इति सूत्रे वृत्तौ—हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्येति । ३—मुषितमित्येव युक्तम् । इडू दुर्वारः । ४—धृषिशसी वैयात्य इति वैयात्य एव निष्ठायामिण्निषेधः । प्रकृते तु निसूदित इत्यर्थः । तस्माद् विशसित इति वक्तव्यम् । शंसु हिंसायामिति धातु वैयात्येऽपि वर्तते विपूर्वः, अनेकार्थत्वाद् धातूनाम् । ५—पूतधीरित्येव । ६—दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्य इति वार्तिकेन विवक्षित एव णिचि दरिद्रातेरालोपे क्तप्रत्यये इटि च दरिद्रित इत्येव । तेन प्रकृते न कश्चिद् दोषः । ७—स्फायः स्फी निष्ठायामिति निष्ठायां स्फीभाव उक्तः क्तिनि न प्राप्नोतीति स्फातिरित्येव साधु । ८—जाग्रोऽविचिण्णल्ङित्सु इति गुणे जागरित इत्येव साधु । ९—मृषस्तितिक्षायामिति निष्ठायां कित्त्वनिषेधे गुणे मर्षित इति साधु । १०—णेरध्ययने वृत्तमिति वृत्ते निष्ठायामध्ययनेऽर्थे इडभावो णिलुक् च निपातितौ । तेन वृत्तमित्येव साधु । ११—षिवु तन्तुसन्ताने । निष्ठायां च्छ्वोः शूडनुनासिके चेति वकारस्योठि यस्य विभाषेति इण्निषेधे अस्यूते इत्येव साधु । १२—खानिता इति णिचि क्ते साधु । १३—दरिद्रिता इत्येव साधु । आर्धधातुके विवक्षित एवालोपस्य विधानात् । दरिद्राणमिति ल्युटि रूपम् । १४—शाच्छोरन्यतरस्यामिति तकारादौ किति इकारदेशो वा भवति । शितम् । शातम् । निशितम् । निशातम् । श्यतेरित्त्वं व्रते नित्यमिति वक्तव्यम् इति संशितव्रत इत्येव साधु । १५—धृषिशसी वैयात्य इतीडभावे धृष्ट इति साधु । लप व्यक्तायां वाचीति नित्यं सेट् । तेन विप्रलपितमित्येव साधु । १६—यती प्रयत्न इति धातुः । श्वीदितो निष्ठायामितीण्निषेधाद् यत्तमित्येव साधु । १७—जागर्तेरकारो वेति जागरा जागर्या चेति रूपद्वयमेव साधु । क्तिनोऽपवाद एष विधिः ।

जागर्तिरिति क्विचि कथंचिद् व्युत्पाद्यम्। १८—ग्रसु अदने। यस्य विभाषेति निष्ठायामिण्निषेधाद् ग्रस्त इत्येव साधु। १९—गाहू विलोडने ऊदित्। यस्य विभाषेति इटः प्रतिषेधे अवगाढ इत्येव रूपम्। २०—'प्यायः पी' इति व्यवस्थितविभाषा। तेनानुपसर्गस्य नित्यं भवति। सोपसर्गस्य तु नैव भवति। तेन पीन इत्येव साधु। २१—क्षुब्धस्वान्तध्वान्तेत्यादिना सूत्रेणेडभावो मन्थेर्थे निपातितः। तेन प्रकृते क्षुभितमित्येव साधु। २२—कण्डूयतेः क्विपि कण्डूरिति रूपम्। अप्रत्ययात् इत्येननाकारे 'कण्डूया' इति च। कण्डूतिरिति कण्डूयतेः क्तिचि रूपं ज्ञेयम्। २३—एकत्रिता इति दुःसाधं कृता वा तद्धितेन वा। तत्करोति तदाचष्ट इति णिचि क्ते प्रत्यये सिध्यतीति चेन्न। तदित्यनेन कर्म प्रत्यवमृश्यते नाधिकरणमिति णिज् दुर्लभः। २४—वितीर्णमित्येव साधु। श्र्युकः कितीतीण्निषेधः।

---

## शतृशानचोरधिकारश्चतुर्थः।

१—मृद्नतीत्येवेति पाणिनीयाः। नुमोऽप्राप्तेः। २—ईदासः (७।२।८३) इत्यानस्य ईकारादेशो विधीयते। स च आदेः परस्येत्याकारस्य स्थाने भवति। तेनोपासीना इत्येव साधु। मुगागमस्य तु प्राप्तिरेव न। ३—कुर्वतीत्येव साधु। नुमोऽप्राप्तेः। ४—उच्छ्वसत्य इत्येव साधु। अवर्णान्तादङ्गात्परः शतुरवयवो नास्तीति नुमोऽप्राप्तेः। अवसीदन्त्य इति भौवादिकस्य, अवसीदन्त्यः, अवसीदत्य इति च तौदादिकस्य। आच्छीनद्योर्नुम् इति विकल्पात्। ५—कामयान इत्यनित्यमागमशासनमिति मुकोऽभावेऽपि निरवद्यम्। कामयमान इति च भवति। ६—आप्लृ व्याप्ताविति परस्मैपदी। तेनाप्नुवन्नित्येव साधु। शानचोऽप्रसङ्गात्। न च चानश् कल्प्यतामिति वाच्यम्। तस्य ताच्छील्यवयोवचनशक्तिषु विधानात्। ७—अधीयानेष्वित्येव। आने मुक् इत्यस्य अप्रसक्तत्वात्। ८—वर्धतीत्येव सूत्रानुसारि

अप्रथमासमानाधिकरण इत्युक्तेः । व्यवहारानुपाति च । कवि-प्रयोगेषु तादृशस्य विन्यासस्य दौर्लभ्यात् । ९—चकासृ दीप्तावि-त्यदादिः । चकासतीत्येव साधु । नुमोऽप्राप्तेः । १०—क्वचित्प्रथमान्तेन सामान्याधिकरण्येपि शतृशानचौ भवत इति वृत्तावुक्तेरिदं साधु । ११—ईशाः, ईश्वरा भवन्तीति युज्यते वक्तुम् । ईशत इति वा प्रयोज्यम् । १२—वा नपुंसकस्येति विकल्पेन नुमि ददति, ददन्तीत्युभयं साधु । १३—वरिवस्यन् इत्येव साधु । क्यच्प्रत्ययान्तो वरिवस्यतिः । नमो वरिवश्चित्रङः क्यच् इति क्यच् । तेनात्मनेपदनिमित्ताभावाच्छेषात्कर्तरि परस्मैपदमिति परस्मैपदम् ।

---

## कृत्याधिकारः पञ्चमः ।

१—क्षय्यजय्यौ शक्यार्थे इति निपातनाज्जय्यमिति साधु । २—अनु-वदितव्य इत्येव । सम्प्रसारणस्याप्रसक्तेः । ३—ण्यत्प्रकरणे लपिदभि-भ्यां चेति वक्तव्याण्ण्यति अपलाप्यमित्येव साधु । ४—ऋदुपधाच्चाक्लृपि-चृतेरिति क्यपि प्रवृत्यमित्येव शोभनम् । ५—गदमदचरयमश्चानुपसर्गे इत्यनुपसर्गाच्चरेर्यद्विधेः सोपसर्गाण्ण्यदेव । तेन उपचार्य इतीष्यते । ६—एतिस्तुशास्वृदृजुषः क्यप् इति क्यपि समादृत्यानीति साधु । ७—अभ्युपेयमिति साधु । एरेतद्रूपं, नेणः । तेन क्यब्न । ८—आतो युच् इति युचि सुदाना इति स्यात् । दाञोऽचो यति देया इति सिद्धे तस्य सुशब्देन प्रादिसमासे सुदेया इति साधु । ९—विज इडिति इडादिप्रत्य-यस्य ङिद्भावे गुणाभावे उद्विजितव्यमिति साधु । १०—एतिस्तुशास् इत्यादिना क्यपि शास इदङ्हलोरित्युपधाया इत्वे शासिवसिघसीनामिति षत्वेऽनुशिष्य इत्येव साधु । ११—तेन न तत्र भवेद्विनियम्यमिति वार्तिक-प्रयोगान्नियम्य ।इति साधु । १२—ब्रह्मणश्चर्या ब्रह्मचर्या । अस्त्ययं प्रयोग इत्यभिधानकृतः । रूपसिद्धौ तु न किञ्चिद् दुरुपपाद्यमस्ति । कृत्यल्युटो बहुलमिति भावे कृत्यो यत् । यथा शाकुन्तले—कार्यं विरुष्ट-

व्यस्य विरोद्धव्यस्य वेत्यत्र। ततः स्त्रीत्वविवक्षायां टाप्। १३—अचो यद् इति यति संशेयमित्येव साधु। अयङोऽप्रसङ्गात्। १४—ऋहलोर्ण्यत् इति ण्यति विस्मार्या इत्येव साधु। १५—ऋहलोर्ण्यत् इति ण्यति उपधावृद्धौ, अभ्यास्या इत्येव। १६—उपवस्तव्यमिति रूपम्। वसेर्निष्ठायामिडागमस्य विधानात् तत्रैव च सम्प्रसारणप्रसङ्गात्। उपपूर्वादुषे रूपमिति चेन्न। उष दाह इत्यस्य सकर्मकत्वात्। उष्णदिशब्देषु तथादर्शनात्। बाढम् उपोषणमुपवासो भवति। आत्मनो दाह इव तद्भवतीति कृत्वा। उपोषत्युपवसतीत्येतयोस्तु पर्यायत्वानङ्गीकारः। १७—शास्य इति स्वार्थे णिचि ण्यति समाश्रेयम्। प्रकृतेः केवलायास्तु क्यपि शिष्य इति स्यात्। १८—गुणे सत्यानेयानीत्येव साधु। १९—ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्याण्ण्यति अभिलाप्येति साधु स्यात्। २०—अभ्यंसितव्ये इत्येव साधु। इटो दुर्वारत्वात्। २१—सर्वासां भाषाणां संस्कृतवागेवोपजीव्येत्येवं न्यासः कार्यः। २२—लभेश्चेति नुमि लम्भनीयेति साधु। २३—रभेरशब्लिटोरिति नुमि आरम्भणीयानीत्येव रूपम्।

---

## कृत्परिशेषाधिकारः षष्ठः।

१—अतिशायने तमबिष्ठनावित्यत्रातिशायनमिति निपातितम्। बाधकान्येव निपातनानि भवन्तीत्यतिशायनमेव साधु। २—अदोऽनन्न इति विटि मांसाद् इत्येव साधु। ३—कृभ्वस्तियोगे एव डाचो गतिसंज्ञाविधानादिह (कटकटाय्येत्यत्र) तदभावात् क्त्वो ल्यबादेशो दुर्लभः। ४—क्रमेराङ्पूर्वात् तृचि आक्रमितार इत्येव साधु। उदात्तः क्रमिः। ५—शासु अनुशिष्टावित्युदात्तः परस्मैभाषः। तेन तृचि शासितुरित्येव साधु। ६—व्यधजपोरनुपसर्गे इत्यपि जप इत्येव साधु। उपसर्गे तु घञि उपजाप इति भवति। ७—प्रमदसंमदौ हर्षे इति प्रमदशब्दो हर्षवचनो निपातितः। ८—समुदोरजः पशुषु इति पशुविषये धात्वर्थे

उप्प्रत्ययो विहितः। पशूनां समजो भवति मनुष्याणां तु समाजः। सम्पूर्वादजेर्घञ्। पशुकल्पानां मनुष्याणामपि समुदायोत्र पशुसमुदाय इवेत्युपचारात्समजशब्देनोच्यते। तस्मान्नात्र कश्चिद् दोषः। ९—हनस्त च(३।१।१०८) इति सुप्यनुपसर्गे उपपदे क्यपं विधत्ते न तु केवलाद् हन्तेः। तेन घात इति वक्तव्यम्। स्त्रीजनहत्येति समासेन वा। १०—उपपूर्वा द्रमेर्घञि उपराम इति युज्यते। नोदात्तोपदेशस्य मान्तस्यानाचमेरित्युदात्तोपदेशस्य मान्तस्याङ्गस्यात उपधाया वृद्धेः प्रतिषेध उक्तः। अनुदात्तोपदेशश्च रमिः। धातुपाठे यम उपरम इति निर्देशात्साधु। ११—स्वादुमि णमुल् इत्यत्र स्वादुमीत्यर्थग्रहणमित्युक्तं वृत्तौ। स्वादुसम्पन्नलवणादीनां च मकारान्तत्वं निपात्यत इति लवणंकारमित्येव युक्तम्। १२—भविष्यति गम्यादय इति णिनौ भावीति निरवद्यं रूपम्। प्रयोगस्तु दुष्यति। इति शब्दो हि दूषकः नहि भाविशब्दो भविता, भविष्यतीत्येतयोः स्थाने शक्यः प्रयोक्तुम्। १३—फलेग्रहिरात्मम्भरिश्च (३।२।२६) इत्यत्रानुक्तसमुच्चयार्थश्चकार इत्युक्तम्। तेन कुक्षिम्भरिरुदरम्भरिरित्यादयः सिध्यन्ति। अत्र मुमागम इन्प्रत्ययश्च निपात्यते। तेनोदरम्भरय इत्येव रूपम्। १४—विभाषा ग्रहः (३।१।१४३) इति व्यवस्थितविभाषा। तेन जलचरे नित्यं णप्रत्यये कर्तरि ग्राह इति भवति ज्योतिषि तु ग्रह एव। भावेऽकर्तरि च कारके ग्रह वृद्दनिर्श्चिगमश्चेत्यपि ग्रह इत्येव। तेन प्रकृते मूढग्रहैरित्येव साम्प्रतम्। १५—चोरयतीति चोरः चोरेः पचाद्यच्। चौर इति तु णप्रत्यये तद्धिते। चुरा शीलमस्येति चौरः। १६—क्षेमप्रियमद्रेऽण् चेति पक्षे खचि मुमागमे क्षेमंकरमिति साधु। शिवशब्दे कर्मण्युपपदे करोतेः खचो विधिर्न शास्त्रे दृष्ट इत्यणि शिवकार इत्येव साधु। छन्दसि तु शिवशमरिष्टस्य करे इति तद्धितेन तातिला शिवतातिरिति भवति। १७—ल्युटि गानमित्येव साधु। गायन इति तु गाथको भवति। ण्युट् चात्र प्रत्ययः। १८—घञि परिक्रम इत्येव साधु। घञन्त इति घञन्तं पुंसि नियतम्। १९—आत्मलाभ इत्येव निर्दुष्टम्। उपसर्गात्खल्घञोः (७।१।६७) इत्युपसर्गादेव लभेः खलघञोः परतो नुमागमो भवति, नान्यत्र।

२०—आम्रसेचन इत्येव साधु। नुमोऽप्रसङ्गात्। २१—वसन्तावतरमित्येव साधु। अवे तृस्त्रोर्घञ् इति करणाधिकरणयोरेव। भावे तु ऋदोरप् इत्यवेव युज्यते। २२—प्रथने वावशब्दे इत्यशब्दविषये प्रथने घञ्विधेः शब्दविषये तस्मिन्नप्प्रत्यये विस्तर इत्येव साधु। २३—हस्तादाने चेरस्तेये इति घञि अवचाय इत्येव साधु। हस्तादानेन प्रत्यासत्तिरादेयस्य लक्ष्यते। अन्यत्र एरच् इत्यचि अवचय इति साधु। २४—नखनिकृर्तनमित्येवेति पाणिनीयाः। नखनिकृन्तनमिति प्रयोगस्तु बहुलः। २५—उद्गिरणमिति धातुपाठेऽर्थनिर्देशात्साधु। निगरणीमिति तु लोके गुणे सति साधु। २६—पिपृच्छिषेत्येव निर्दुष्टम्। पृच्छेः सनि किरश्च पञ्चभ्य इतीटि रुदविदमुषग्रहिस्वपिप्रच्छः संश्चेति सनः कित्त्वाद् ग्रहिज्यादिना सूत्रेण सम्प्रसारणे अ प्रत्ययात् इत्यकारे स्त्रियां टापि पिपृच्छिषेति रूपम्। २७—सम्प्रसारणस्याप्रसङ्गात् प्रच्छक इत्येव साधु। २८—स्वच्छन्दवाचो महर्षय इति प्रतीच्छक इति स्मृतिकारप्रयोगो मान्यः। दुःखा तु व्युत्पादना। शप्रत्यये तत्सिद्धेः। स एव च दुर्लभः। २९—हरतेर्दृतिनाथयोः पशाविति पशौ कर्तरि इन्प्रत्यः। दृतिहरिः श्वा भवति। दृतिहारस्तु उदहारः। कर्मण्यण्। ३०—बुद्धिविलुम्पकानि इति सावद्यम्। लुपेर्नुमोऽप्रसङ्गात्। तेन विलोपकानीति वाच्यम्। ३१—विभाषाऽऽङि रुप्लुवोरित्यङ्घञौ भवतः। तस्मादारव आराव इत्युभयं साधु। ३२—स्तन्यस्रवेणेत्येव साधु। ऋदोरप्। ३३—विमोचनमित्येव साधु। नुमोऽप्रसङ्गात्। ३४—खनितार इत्येव साधु। खनु अवदारण इत्युदात्तोपदेशः। ३५—उपनयनमित्येव साधु। आर्षं दीर्घत्वं वा कल्प्यम्। स्मृतिषु तथा प्रयोगात्। ३६—निमूलसमूलयोः कष इति कषेर्णमुल्। कषादिषु यथाविध्यनुप्रयोग इति नियमात्समूलकाषं कषतीत्येव साधु। ३७—आदेच उपदेशेऽशितीत्यात्वे वानमित्येव निर्दोषम्। ३८—आमाशयदोषशमकमिति रूपम्। शमो दर्शन इति दर्शनादन्यत्र नित्या मित्संज्ञेति मितां ह्रस्व इति ह्रस्वत्वे शमकमिति रूपम्। ३९—निबन्द्धव्येति साधु। नलोपाप्रसक्तेः।

४०—निद्रणमित्यपशब्दः, निद्राणमिति च शब्दः। निपूर्वो द्रा कुत्सायाम् इति धातुः। ततो ल्युट्। ४१—जनितेति मन्त्रे निपातितम्। लोके तु णिलोपाभावाद् जनयितेत्येव साधु। ४२—उदि श्रयतियौतिपूद्रुव इत्यनेन घञि समुच्छ्राय इति तु युज्यते। विभाषाऽऽङि रुप्लुवोरित्यत्र वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायेन सम्बध्यते। तेन पक्षेऽच्। ४३—हिंसार्थानां च समानकर्मकाणाम् इति णमुलि लोष्टघातमिति साधु। ४४—रुर्जनमित्येव साधु। ल्युटि गुणस्य दुर्वारत्वात्। भुवश्चेति च्छन्दोविषय इष्णुज्विधिः। छन्दोवत्कवयः कुर्वन्तीति भाषायामपि प्रभविष्णव इत्यनवद्यम्। ४५—संज्ञायां भृतॄवृजिधारिसहितपिदम इति संज्ञायां विषये खच् प्रत्ययो भवति तेन वसुन्धरेति रूपम्। असंज्ञायां तु वसुनो धरेति विग्रहमाश्रित्य वसुधरेति रूपं साधु। ४६—ब्रह्मभ्रूणवृत्रेषु क्विप् इति सूत्रे वृत्तौ चतुर्विधो नियम उक्तः। तेन हिमे कर्मण्युपपदे हन्तेः क्विब्दुर्लभः। बहुलं छन्दसीत्यग्रिमसूत्रबलादुपपदान्तरेऽपि क्विब् भवति। भ्रातृहा। पितृहा। छन्दोवत्कवयः कुर्वन्तीति वचनाद् भाषायामपि समाधेयम्। ४७—कृतघ्न इत्यत्र मूलविभुजादित्वात्को द्रष्टव्यः। ४८—डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानमिति डुः प्रत्ययः। तेन अनसूयव इति साधु। ४९—मन्त्रजपं प्रतीत्येव साधु। उक्तो हेतुः। ५०—कार्योपराम इति तूचितम्। यम उपरम इति धातुपाठादुपरम इत्यपि परिग्राह्यम्। ५१—ण्यत्तु भावे न भवत्यनभिधानादिति काशिकायां हनस्त च(३।१।१०८) इत्यत्रोक्तम्। तथाऽपि कृत्यल्युटो बहुलम् इति भावेऽत्र ण्यत्। ण्यति वृद्धौ समास्येति स्यात्। संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न। बाहुलकाद् यद्वा। ५२—ब्रह्मादिषु हन्तेरेवेति नियमात्क्रुदन्तवृत्त्या वेत्तीति वित्, ब्रह्मणो विद् ब्रह्मविदिति समाधेयम्। ५३—उत्तरदायिन इत्यत्रार्थे दायिनि इत्यशक्तमप्रयुक्तपूर्वं च। ५४—अवे ग्रहो वर्षप्रतिबन्धे इति विभाषा घञ्। पक्षेऽप्। तेनावग्राहोऽवग्रह इति रूपद्वयं निष्पन्नं भवति। ५५—उपघ्न आश्रय इति निपातितम्। आश्रय शब्दः सामीप्यं प्रत्यासत्तिं लक्षयतीत्युक्तं काशिकायाम्। पर्वतोपघ्नः। ग्रामोपघ्न इति चोदाहृतम्। कवयस्तु निरंकुशा

इत्याश्रयेर्थेऽपि प्रयुञ्जते। तद्यथा—छेदादिवोपन्नतरोत्र तत्याविति (रघौ१४।१)। कविकुलपतिमनुसरन्तोन्येपि न दुष्यन्तीति दर्शनं चेत्तथास्तु। ५६—पाघ्राध्माधेट्दृशः श इति सूत्रेण श प्रत्यये जिघ्र इति सिध्यति। उपसर्गे इति केचिदत्र नानुवर्तयन्तीत्युक्तं वृत्तौ। ५७—जागुरूक इति जागर्तेरूकः प्रत्ययो विहितस्तच्छीलादिषु कर्तृषु। प्रकृते ताच्छील्यमर्थो न घटत इति जागरिता इति पाठ्यम्। ५८—क्रय्यस्तदर्थे इति क्रय्यशब्दो निपातितः। न तु विक्रय्यशब्दः। तेनाचो यति विक्रेयमित्येव साधु। ५९—शीतं चातपश्चेति शीतातपम्, तत् साहयतीति शीतातपाषाट् इति तु युक्तम्। नहि वृत्तिवृषिव्यधिरुचिसहितनिषु क्वाविति क्वौ पूर्वपदस्य दीर्घविधानात्। प्रकृतिग्रहणे णिजधिकस्यापि ग्रहणमिति साहयतेरपि विधिः। सहेः साढः स इति मूर्धन्यादेशः। ६०—ण्यन्ताद् विग्लापेर् एरच् इत्यच्। तेन विग्लाप इति साधु। ल्युटि विग्लापनमिति च। एरजण्यन्तानामिति तु भाष्ये नास्ति। ६१—'जन्तुहा' इत्यत्र ब्रह्मभ्रूणवृत्रेषु क्विप् इत्यनेन क्विब्दुर्लभः। ६२—शपथंकारमिति कृञः खमुञि सिध्येत्। न च शपथे कर्मण्युपपदे कृञः खमुञ् विहितः। तेनापशब्द एवायम्। ६३—अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु इत्यत्र वर्येति स्त्रीलिङ्गनिर्देश इति वृत्तौ स्थितम्। तेन वार्य इत्येव साधु। उदाहृतं च तत्रैव वार्या ऋत्विज इति। ६४—वह्यं करणमिति सूत्रे वहत्यनेनेति वह्यं शकटमित्युक्तं वृत्तौ। प्रकृत औपचारिकः प्रयोग इति समाधेयम्। साधनमात्रं चार्थः। ६५—सुदुरोरधिकरणे गमेर्डो विहितः। वाहनमात्रे च करणत्वविवक्षा लौकिकी प्रसिद्धा। तेन सुगमेन (शोभनो गमोऽस्येति बहुव्रीहिः) सुखसम्पातेनेति वा वक्तव्यम्। सुगमिति दुर्गप्रतियोगि। ६६—संज्ञायां भृतॄवृजीत्यादिनाऽत्र खच् सुदुर्लभः। नहि शत्रुन्दम इति संज्ञाऽभिप्रेता। भगवतो रुद्रस्य संज्ञैषेति केचित्। उपचारादन्ये महाविक्रमा अपि शत्रुन्दमा भवन्ति। ६७—रव इत्येव साधु। उपसर्गे उपपद एव घञ्विधेः। ६८—तापत्रयशङ्करम् इत्यत्र कृञो हेतुताच्छील्यानुलोम्येष्विति टः। अन्यत्र शङ्कर इति भगवतः संज्ञेति शमि धातोः संज्ञायामित्यच्। तेनोभयं साधु।

६९—गुरुमात्मन इच्छतीति गुरूयति । क्याच्छन्दसीति उः प्रत्ययः कृत्। तेन गुरूयुरिति सिद्धम्। लोके प्रयोगाप्राप्तेश्छन्दोवत्कवयः कुर्वन्तीति समाधेयम्। ७०—'अमृतम्भरा' इत्यपशब्द एवायम्। संज्ञायामेव विभर्तेः खज्विधेः। ७१—कुङ् शब्दे भ्वादिः। कूङ् शब्दे तौदादिकः कुटादिः। अयं ह्रस्वान्त इति न्यासकारः। भ्वादेस्तृचि तृनि वा 'कोतृ' इति भवति। दीर्घान्तस्य तुदादेस्तु 'कुवितृ' इति, ह्रस्वान्तस्य च 'कुतृ' इति भवति। तेन 'कवितृ' इति शब्दरूपं न सिध्यति। कविरिवाचरतीति क्विपि तृचि इटि गुणे 'कवयितृ' इत्येव रूपम्। तेन कवितुरित्येतत्प्रामादिकमेव। ७२—कण्ठे गृहीत्वेत्यर्थे कण्ठे कर्मणि ग्रहेर्णमुल् दुर्लभः। ७३—जानातेर्णमुलि ज्ञायं ज्ञायमिति वक्तव्यम्। आतो युक् चिण्कृतोरिति युक्। ७४—आत्मानं विद्वांसं मन्यत इत्यात्ममाने खश्चेति खश्। वसुस्रंसुध्वंस्वनडुहां द इति सकारस्य दकारे यरोऽनुनासिकेऽनुनासिको वेत्यनुनासिकविकल्पे विद्वद्मन्यः, विद्वन्मन्य इति च रूपे भवतः। खशि सत्यपि पूर्वपदस्याजन्तत्वाभावान्मुम्न। ७५—चिन्तिपूजिकथिकुम्बिचर्चश्चेत्यङि चिन्तेत्येव साधु। ७६—आतो युच् (३।३।१२८) इति खलोऽपवादः। तेन सुसमाधाना इत्येव साधु। ७७—'अपे क्लेशतमसोः' इति क्लेशशब्द उपपदे हन्तेर्डं विधत्ते। तेनात्र डो दुर्लभः। प्रमाद एवायमिति पाणिनीयाः। ७८—लषपतपदेत्यादिना सूत्रेण तच्छीलादिषु कर्तृषु गमेरुकञ् विहितः। आगामुकं वाराणसीं रक्ष आहुरिति चोदाहृतं वृत्तौ। तेन शुद्धे कर्तरि गन्तास्मीत्येव साधु।

इति कृतो विवेचिताः।

---

# अथ तद्धितेषु विवेच्यानि ।

## तत्रापत्याधिकारः प्रथमः ।

१—कुरुनादादिभ्य इति ण्यप्रत्यये कौरव्य इति भवति । ते तद्राजा इति ण्यस्तद्राजसंज्ञकः । तद्राजस्य बहुषु लुक् तेनैवास्त्रियामिति बहुवचने ण्यस्य लुकि कुरव इत्येव रूपम् । षष्ठ्यां कुरूणामिति । २—विमातृशब्दः शुभ्रादिषु पठितः । तेन ढकि वैमात्रेय इत्येव साधु । ३—सुधातुरकङ् (४।१।९७) इत्यत्र व्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्याद् इञि प्रत्यये ऽकङि चान्तादेशे वैयासकिरित्येव न्याय्यम् । ४—ज्येष्ठा, कनिष्ठा, मध्यमेत्येते शब्दाः कल्याण्यादिगणे पठिताः । तेन कल्याण्यादीनामिनङ् इति ठक् प्रत्ययो भवति तत्संनियोगेन च इनङादेशः । तस्माज् ज्यैष्ठिनेयः, माध्यमिनेयः, कानिष्ठिनेय इति रूपाणि साधूनि भवन्ति । ५—पाण्डवेय इति भारते दृश्यते । तत्र स्वच्छन्दवाचो महर्षय इत्येव सुवचम् । पाण्डव इत्येवेति च पाणिनीयाः । ६—गोत्ररूपाध्यारोपेण तथा व्यपदेश इति विद्धि । ७—नैवात्र महाभारतद्रोणो किन्तर्ह्यनादिः । तत इदं गोत्रे प्रत्ययविधानम् । इदानीं श्रुतिसामान्यादध्यारोपेण तथाऽभिधानं भवति । ८—व्यासवरुडनिषादचण्डालबिम्बानाम् इतीञि प्रत्ययेऽकङादेशे च बैम्बकिरिति शब्दः । बिम्बकशब्दाद्वाऽपत्यार्थे प्राग्दीव्यतीयोऽण् द्रष्टव्यः । ९—इतश्चानिञः इति ढकि ङीपि आर्षेयी इति रूपम् । ऋषिभणितिर्ऋषेरपत्यं भवत्युपचारात् । तेन सर्वं समञ्जसम् । १०—यञञोश्चेति यञो बहुषु लुकि गर्गा मुद्गला इत्येव साधु । मुद्गलस्य गोत्रापत्यं मौद्गल्यः । मौद्गल्यस्य शिष्या मौद्गलाः । कण्वादिभ्यो गोत्र इत्यण् । ११—केकयस्यापत्यं स्त्रीति जनपदशब्दात्क्षत्रियादञ् अतश्च (४।१।१७७) इति लुको 'न प्राच्यभर्गादियौधेयादिभ्य (४।१।१७८) इति निषेधे केकयमित्रयुप्रलयानामितीयादेशे आदिवृद्धौ कैकेयीति स्यात् । तथा च रघुकारप्रयोगः—कैकेयि ! कामाः

फलितास्तवेति। अयमत्र समाधिः—केकयशब्दो मूलप्रकृतिरेवोपचारा-त्तस्यापत्ये वर्तत इति न्यासः। केकयशब्दः शार्ङ्गरवादिषु पठ्यते, तेन ङीन्। १२—पृथाशब्दात् शिवाद्यणि पार्थ इति साधु। १३—मनोरपत्यं पुमान् इत्यर्थे तस्यापत्यमिति प्राग्दीव्यतीयोण्। कुत्सितं मूढं च चेत्तदपत्यं माणवशब्दाभिधेयं भवति। स्मरन्ति च—अपत्ये कुत्सिते मूढे मनो-रौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः॥ इति। अल्पो माणवो माणवकः। अनधीतवेदत्वान्मूढत्वं विहितानुष्ठा-नाच्च कुत्सितत्वमित्याहुः। १४—प्रथमो भ्रातृव्यशब्दो भ्रातुरपत्यमाह। तत्र भ्रातुर्व्यच्चेति व्यत्प्रत्ययः। द्वितीयः शत्रुपर्यायः। तत्र व्यन्सपत्ने इतिव्यन्प्रत्ययः। १५—गङ्गाशब्दः शिवादिषु पठ्यते तिकादिष्वथ शुभ्रादिषु। तेनाणि फिञि ढकि च गाङ्गः, गाङ्गायनिः, गाङ्गेय इति त्रैरूप्यं भवति। १६—राजश्वशुराद्यत् इति श्वशुरस्यापत्य-मित्यर्थे यति श्वशुर्य इति सिद्धम्। श्वशुरो नाम कश्चित्। तस्यापत्य-मित्यर्थे तु बाह्वादिभ्यश्चेतीञ् इति श्वाशुरिरपि। १७—यञञोश्चेति गोत्रप्रत्ययस्य यञो बहुषु लुकि गर्गा इत्येव साधु। गोत्रे कुञ्जादिभ्य-श्च्फञ् इति कुञ्जशब्दाच्च्फञ्। ततो व्रातच्फञोरस्त्रियाम् (५।३।११३) इति स्वार्थे ञ्यः। कौञ्जायन्यः। तस्य ञ्यादयस्तद्राजा इति तद्राजसंज्ञा। तद्राजस्य बहुषु तेनैवास्त्रियाम् इत्यनेन ञ्यस्य लुकि कौञ्जायना इत्येव साधु। १८—आर्ष इत्यत्रापत्यार्थो नास्त्येव। ऋषेरिदमार्षमिति व्युत्पत्तेः। तस्येदमित्यण्। अपत्यार्थे त्वार्षेय इत्येव साधु। इतश्चानिञ इति ढक्। १९—वडवाया वृषे वाच्ये इति वचनाद् वडवाशब्दाद् वृषेऽभिधेये ढग्विधिः। वाडवेयो वृषः स्मृतः। बीजाश्व इत्यर्थः। अपत्ये त्वणेव भवति वाडव इति। २०—दाशरथ इति शेषविवक्षायामणि॥

## मत्वर्थीयाधिकारो द्वितीयः ।

१—प्रज्ञाश्रद्धार्चाभ्यो ण इति मत्वर्थीयो णः । श्राद्धाः श्रद्धावन्तः । २—सुखादिभ्यश्चेति इनिप्रत्ययो नियम्यते । तेनान्यो मत्वर्थीयो न भवति । तस्मात्सुखिनीत्येव साधु । ३—मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मतोर्वत्वे यवादिपर्युदासाद् यवमानित्येव साधु । ४—'द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः' इति वातातिसारौ इत्यस्माद् द्वन्द्वादिनौ 'वातातिसारी' इति साधु । केवलादतिसारशब्दात्तु वातातिसाराभ्यां कुक् इतीनौ कुगागमे चातिसारकीति साधु । ५—रसादिभ्यश्चेति मतुप् । रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् । अन्ये मत्वर्थीया मा भूवन् । प्रायिकमेतद् रसादिभ्यश्चेति वचनम् । इतिकरणो विवक्षार्थोऽनुवर्तते । अथवा गुणादित्यत्र पठ्यते । तेन ये रसनेन्द्रियादिग्राह्या गुणास्तेषामत्र पाठः । 'रूपिणी' इत्यत्र तु शोभायोग्यता गम्यते । ६—धर्मः प्रयोजनमस्या इति ठकि स्त्रीत्वे ङीपि धार्मिकीति साध्ववतिष्ठते । अस्थानेऽस्य वाक्यस्य निवेशः । ७—निवृत्तदेहाभिमाना इत्येव वक्तव्यम् । न कर्मधारयाद् मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति वामनवचनाद् निवृत्तदेहाभिमानिन इति न युक्तम् । ८—रजःकृष्यासुतिपरिषदो वलच् इति मत्वर्थीयो वलच् इति निर्दुष्टं रूपम् । प्रयोगस्तु दुष्यति । रजस्वला स्त्री भवति । इतिकरणो विषयनियमार्थः सर्वत्र संबध्यते । तेनेह न भवति । रजोऽस्मिन्ग्रामे विद्यत इत्युक्तं काशिकायाम् । ९—अनेकवृत्तिरिति बहुव्रीहिणा वक्तव्यम् । उक्तो हेतुः । १०—द्वन्द्वाच्चोपतापगर्ह्यादिनिरिति फालकुद्याललाङ्गलिन इत्येव युक्तम् । ११—सर्वाः शक्तयोऽस्मिन्निति बहुव्रीहिणा सर्वशक्तिरिति वाच्यम् । उक्तोऽत्र हेतुः । १२—ब्रह्मणो वर्चः=ब्रह्मवर्चसम् । ब्रह्महस्तिभ्यां वर्चस इत्यच्समासान्तः । तदन्ताद् अत इनिठनाविति इनिः । तेन ब्रह्मवर्चसिन इत्येवेति पाणिनीयाः । १३—मादुपधायाश्च मतोर्वोऽयवादिभ्य इति सूत्रस्याप्रवृत्तेः पितृमन्त इत्येव साधु । १४—सुधियो धीमतो वेति वक्तव्यम् ।

शोभना धीर्यस्य सुष्ठु ध्यायतीति वा सुधीः। तत्र मतुपा नार्थः। १५—अन्ये देवा अमूर्त्ता मात्रादयश्च मूर्तिमन्त इति चेदभिप्रायो न कश्चिद् दोषः। मात्रादिमूर्त्तिरूपेण स्थिता ये देवा इति चेदर्थः, मात्रादि-मूर्तीनामिति बहुव्रीहिणा वक्तव्यम्। मात्रादयो मूर्त्तयो येषामिति विग्रहः। १६—क्रोधिलमिति संस्कृताभासोऽपशब्दः। क्रोधस्वभाव-स्येति वा वाच्यं क्रोधनस्येति वा। १७—न्यूनातिरिक्तसुखदुःखा इति बहुव्रीहिसमाश्रयेण वाच्यम्। न्यूनातिरिक्तं सुखदुःखिन इति वा द्वन्द्वा-दिनिना। १८—अचक्षुष्मानित्यपास्याचक्षुरिति बहुव्रीहिः समाश्रेयः। १९—अस्मायामेधास्रजो विनिरिति मेधाशब्दाद्विनिर्विहितः। तेन मेधाविन इत्येव साधु। २०—दरिद्रा इमे गृहस्था इत्येव साधु। इनेरप्रसङ्गात्। २१—उद्गतं मुखं यस्या इति बहुव्रीहौ स्त्रियां स्वाङ्गा-च्चोपसर्जनादिति वा ङीषि उन्मुखीत्येव साधु। २२—महाधना इत्येव साधु। उक्तो हेतुः। २३—नित्यं महान्तोऽपराधा यस्य सन्ति स महापराधी। अत्र नित्ययोगे मत्वर्थीय इनिः। नायमर्थो बहुव्रीहिणा शक्यो गमयितुमिति न तस्य विषयः। बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति ह्युक्तम्। २४—महारथा इत्येव युक्तम्। महारथिन इत्यपशब्दः। न चास्य प्रयोगो दुष्टचरः। २५—स्वर्णालङ्करणा इति निर्दुष्टम्। स्वर्णिलमित्यसंस्कृतम् इति परिहार्यम्।

---

## विकारार्थाधिकारस्तृतीयः।

१—तालादिभ्योऽण् इति मयडादीनामपवादोऽण् विधीयते। तेन ताला इत्येव साधु। २—क्वचिदपवादविषये प्युत्सर्गोऽभिनिविशते इत्यौत्सर्गिकः तस्य विकार इत्यण् भवति न तु नित्यं वृद्धशरादिभ्य इत्यपवादभूतो मयट्। तेन काञ्चनीति साधु। ३—नित्यं वृद्धशरादिभ्य इति दर्भशब्दान्मयडेवो-चितः। दर्भमयमित्येव साधु। ४—दारुशब्दस्य वृद्धत्वात्ततो नित्यं वृद्ध-शरादिभ्य इति नित्यं मयटि दारुमये पात्र इति वक्तव्यम्। छान्दसमिदं

वचनम्। छन्दसि च सर्वे विधयो विकल्प्यन्त इत्यणि दारवशब्दः साधुः। रजतादिगणे नीलदारु, पीतदारु तीव्रदारु इति शब्दत्रितयं पठ्यते। दारुशब्दः स्वतन्त्रस्तु नास्तीति प्राणिरजतादिभ्योञ् इत्यञोऽप्रसङ्गः। ५—प्राणिरजतादिभ्योञ् इत्यञि स्त्रियां ङीपि राजत्य इति न्याय्यं स्यात्। मयड्वैतयोर्भाषायामिति पक्षे मयटि रजतमय्य इति न भवति। रजतशब्दो नुदात्तादिः। ततोनुदात्तादेश्चेत्यञि सिद्धे पुनर्वचनं मयड्बाधनार्थम्। ६—मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोरिति विकल्पेन मयटि मुञ्जमयीति साधु। ७—अश्मनो विकार आश्मः, आश्मन इति च। टिलोपः पाक्षिकः। तस्य विकार इत्यण्। मयड्वैतयोरित्यनेन मयटि अश्ममयानीति च भवति। ८—बिल्वादिभ्योऽण् इत्यत्र गणे कर्पासीशब्दः पठ्यते। तेन कार्पासानीत्येव साधु। मयड्विकल्पोपि न। आच्छादने मयटः प्रतिषेधात्। ९—त्रपुजतुभ्यां षुक् इत्यणि षुगागमश्च। तेन जातुषाणि त्रापुषाणीति च भवति। ओरञ् इत्यस्यापवादः। मयड्वैतयोर्भाषायमित्यनेन विभाषा मयट् तु भविष्यत्येव। तेन जतुमयानि त्रपुमयानीति चापि रूपे साधुनी। १०—हरीतक्यादिभ्यश्चेति फले प्रत्ययस्य लुब् भवति। हरीतक्यादिषु व्यक्तिरिति लुपि व्यक्तियुक्तवद्भवतीति हरीतक्य इत्येव साधु। ११—पुष्पमूलेषु बहुलमिति प्रत्ययस्य लुप्। बहुलवचनात् क्वचिल्लुक्। तेन युक्तवद्भावो नेत्यशोकमिति क्लीबं साधु। १२—दाण्डिनायनादिसूत्रे हिरण्मयमिति निपातितम्। तेन हिरण्यमयमित्यपशब्दः। १३—सौवर्णे सुवर्णमये (स्वर्णमये) इति वा साधु। १४—नित्यं वृद्धशरादिभ्य इत्यत्र नित्यग्रहणं किमर्थम्। यावतारम्भसामर्थ्यादेव नित्यं भविष्यतीत्याशङ्क्य एकाचो नित्यं मयटमिच्छन्ति तदनेन क्रियत इत्युक्तं काशिकायाम्। तेन अप्शब्दान्मयटि अम्मयमित्येव साधु। आप्यमिति त्वपशब्द एव। क्वचिद् आपोमयमिति दृश्यते। तच्छान्दसम्।

---

## भावकर्माधिकारश्चतुर्थः ।

१—प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् इत्यञि कौमारमित्येव साधु । २—गुणवचनब्राह्मणादिभ्यः कर्मणि चेति भावकर्मणोरर्थयोः ष्यञि दायाद्यम् इत्येव न्याय्यम् । उक्तेऽर्थे प्रत्ययपौनरुक्त्यं न युज्यत इति त्वप्रत्ययेन नार्थः । ३—चोरशब्दो मनोज्ञादिषु पठ्यते । तेन द्वन्द्वमनोज्ञादिभ्यश्चेति वुञि स्त्रियां टापि चौरिकेति रूपम् । धात्वर्थनिर्देशे ण्वुल्वक्तव्य इति चोरयतेर्ण्वुलि स्त्रियां टापि चोरिकेति कृदन्तम् । ४—न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटबुधकतरसलसेभ्य इत्यत्र चतुरपर्युदासान्नञ्पूर्वादपि चतुरशब्दाद् गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यञि तद्धितेष्वचामादेरित्यादिवृद्धौ सत्यामाचतुर्यमिति रूपम् । चतुरशब्दात्केवलात्तेनैव सूत्रेण ष्यञि पश्चान्नञ्समासे अचातुर्यमित्यपि भवतीत्युभयं सूपपन्नम् । ५—सुमनसो भावः सौमनस्यमिति गुणवचन ब्राह्मणादिभ्यः कर्मणि चेति ष्यञि सिद्धम् । ततः प्रत्ययान्तरस्याप्रसक्तेः सौमनस्यतेत्यपशब्दः—६—विशेष इति भावे घञि रूपम् । घञबन्तः पुंसीति नियमादयं पुमान् । उक्तो भाव इति भावे प्रत्ययान्तरस्य प्रसङ्ग एव नेति विशेषतेत्यपशब्दः । ७—अवश्यम्भाव आवश्यकम् । मनोज्ञादित्वाद्वुञ् । अव्ययानां भमात्रे टिलोपः । भावस्य वुञाऽभिहितत्वात्प्रत्ययान्तरस्य तलः प्रसङ्ग एव नास्तीत्यावश्यकतेत्यपशब्दः । ८—कौमारमेव कौमारकम् । स्वार्थे कन् । कौमारव्युत्पत्तिस्तूक्ता । ९—गुणवचनेत्यादिना भावे सौकुमार्यमित्येव साधु । १०—दूतवणिग्भ्यां चेति काशिका । तेन यप्रत्यये दूत्यमिति साधु । गुणवचनेत्यादिना ष्यञि तु दौत्यमित्यपि भवति । ११—मुनेर्भावो मौनम् । इगन्ताच्च लघुपूर्वादित्यण् । उक्तो भावोऽणेत्यपरः प्रत्ययो नापेक्ष्यते । तेन मौनतेत्यपशब्दः । १२—इगन्ताच्च लघुपूर्वादित्यणि गौरवमिति साधु । गुरुलघुनोर्भाव इत्यर्थे द्वन्द्वमनोज्ञादिभ्यश्चेति वुञा भाव्यम् । पर्यायशब्दानां गुरुलाघवचिन्ता नास्तीति भाष्यप्रयोगात्साधु । १३—व्याकुलस्य भावः वैयाकुल्यम् । स्त्रीत्वविवक्षायां षित्वान्ङीषि वैयाकुलीति

सिध्यति। तथापि प्रयोगो नास्तीति परिहरणीयमिदं शब्दरूपम्। एवं न्यूनस्य भावो नैयून्यं स्त्रियां नैयूनीति रूपसाधुत्वेऽपि न व्यवहार्यं शिष्टानुग्रहोऽस्य नास्तीति। नहि वैयाकरणैः शब्दाः क्रियन्ते कुलालेन घटा इव। १४—उद्भटभटचातुर्येति।तृतीयैकवचने रूपं साधु। चातुरीति चतुरशब्दात्ष्यञि स्त्रियां ङीषि सिद्धम्। उक्तो भावः ष्यञेत्यपरो भावप्रत्ययोऽनवकाशः। १५—वक्तुर्भावो वक्तृता। न हि सा शक्या श्रोतुम्। भावो नाम यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशः स भवति। तस्याभिधाने त्वतलौ विहितौ। तेन प्रवचनमिति वाच्यम्।

---

## स्वार्थिकाधिकारः पञ्चमः।

१—ओषध्यः फलपाकान्ता इत्यमरः। तेन व्रीह्यादयस्ता भवन्ति। न हि ताः पेया भवन्ति। ओषधेरजातावित्यणि औषधमिति तु प्रयोज्यम्। २—कालाच्च (५।४।३३) इति कालशब्दाद्रक्ते कन् प्रत्ययो भवति। तेन कालिकेत्येव साधु। काली निशा, काली गौरिति तु नित्ये वर्णे रक्तार्थाभावे। ३—वर्णे चानित्य इति लोहितशब्दात्स्वार्थे कनि लोहितक इति साधु। ४—जात्यन्ताच्छ बन्धुनि (५।४।९) इति स्वार्थिके छप्रत्यये ब्राह्मणातीयः, क्षत्रियजातीय इति च भवति। ब्राह्मणत्वं जातिरस्येति ब्राह्मणजातिः। स एव ब्राह्मणजातीयः। ५—किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्यद्रव्यप्रकर्ष आमो विधेरिह द्रव्यप्रकर्षे तस्याप्रसङ्गात् अलन्तरमिति भवितव्यम्। ६—अपादाने चाहीयरुहोरित्यनेन पञ्चम्यास्तसिरिह न प्राप्नोति, हीयतेः पर्युदासात्। नैषा पञ्चमी। किन्तर्हि तृतीया। सार्वविभक्तिकस्तसिः। स्वरेण वर्णेन वा हीन इत्यर्थः। ७—सहस्रं सहस्रं ये समेतास्तेषामित्यर्थः। तेनेह वीप्साऽस्ति कारकत्वमपीति संख्यैकवचनाद्वीप्सायामिति शः। ८—यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येवेति वृत्तावुक्तम्। तेन श्रेष्ठतम इति साधु। ९—र ऋतो हलादेर्लघोः (६।४।१६१) इति रविधौ परिगणनं कृतम्। तद्यथा—

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥इति॥

रविकल्पस्तु च्छन्दोविषयः। विभाषर्जोश्छन्दसीति। तेन ऋजीयान् इत्येव साधु। १०—केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते। तमबादयः प्राक् कन इतीष्टिः। तेन भाग्यवत्तरमिति युज्यते। केचिन्महाविभाषया तरपोऽभावं समादधते। ११—अतिशयेन प्रमाणम् इति प्रमाणतराः। स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेपीति वचनात्पुंस्त्वं बहुत्वं चोपपन्नम्। १२—दक्षिणोत्तराभ्यामतसुच् इति साधु।

---

## शैषिकाधिकारः षष्ठः।

१—शेषे (४।२।९२) इति लक्षणमधिकारश्च। श्रुतौ विहितं श्रौतम् इति भवति। न च पुरुषः श्रौत इति प्रयोगोस्ति। २—श्रीमच्छब्दो न वृद्धः। तेन वृद्धाच्छ इति छस्याप्रसङ्गः। तेन वृत्त्यनाश्रयेण श्रीमत इति षष्ठ्यन्तं प्रयोज्यम्। केचिदभिनवशब्दनिर्मितिरसिकाः श्रैमत्कशब्दं तत्रार्थे प्रयुञ्जते तेपि साहसाद्वारयितव्याः। नहि व्याकरणमभूतप्रादुर्भावनं भवति किन्तर्हि भूतस्य व्युत्पादनम्। ३—पौरुषीत्यपशब्दः। पुरुषाद्वध-विकारसमूहतेनकृतेष्विति ढञि पौरुषेयीत्येव शब्दः। अयं ढञ् शैषिको न। ४—सायंचिरंप्राह्णे इत्यादि सूत्रेण ट्युलि तुडागमे च अद्यतना इति सिद्धम्। ततश्छस्याप्रसङ्गादद्यतनीया इति प्रामादिकमेव। ५—वासव-स्येमा इति वासवीया इति तु न्याय्यम्। वृद्धाच्छः। वा नामधेयस्य वृद्धसंज्ञा वक्तव्येति त्वप्राप्तविभाषा। अत एवोदाहृतं वृत्तौ देवदत्तीयाः, दैवदत्ता इति। ६—प्राक्कालिकस्येति तु युक्तम्। कालाट्ठञ्। समानकालीनं प्राक्कालीनमित्यादयोऽपभ्रंशा एवेति प्रामाणिकाः। ७—विभाषाऽमनुष्य इति च्छे पर्वतीयानीत्येव साधु। पक्षेऽणि पार्वतानीति भवति। ८—वृद्धाच्छ इति छे वानरीया सेनेति वक्तव्यम्। ९—दक्षिणापश्चात्पुरसस्त्यक् इति त्यकि पाश्चात्य इति भवितव्यम्। १०—काश्यादिभ्यष्ठञ्ञिठावित्यत्र

आपदादिपूर्वपदात्कालान्तात् इति पठ्यते। तेन ठञि आपत्कालिकी, ञिठे च आपत्कालिकेति रूपद्वयं साधु। ११—ग्रामाद्यखञाविति ग्रामात्प्रत्ययविधिः, न तु ग्रामान्तात्। ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति। तेनैकग्रामीण इति प्रयोगश्चिन्त्यः पाणिनीयानाम्। १२—सन्धिवेलाद्यृतुनक्षत्रेभ्योण् इत्यत्र संवत्सरात्फलपर्वणोरिति गणसूत्रम्। तेन सांवत्सरं पर्वेत्येव साधु। १३—कालाट्ठञि औषसिकेनेति साधु। १४—राष्ट्रावारपाराद्घखाविति राष्ट्रिय इत्येव रूपम्। ततो भावे त । १५—वृद्धाच्छ इति कापुरुषात्प्रातिपदिकाच्छे कापुरुषीयेत्येव युक्तम्। १६—पर्वताच्चेति छप्रत्यये पर्वतीय इत्येव शोभनं वचः। १७—पर्वतीयानामिमे भवन्तीति पर्वतीयशब्दाच्छैषिकेणि पार्वतीयैरिति साधु। १८—अरण्यान्मनुष्ये (४।२।१२९) इत्यत्र पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यादत्रारण्यशब्दाद् वुञ् न। तेनाणि आरण्या इत्येव साधु। १९—दिगादिभ्यो यत् इत्यत्र दिगादिगणे वंशशब्दः पठितो न राजवंशः। तेन यतोऽप्रसङ्गाद् वृद्धाच्छ इति छे राजवंशीय इत्येव साधु। २०—धूमादिभ्यश्चेत्यत्र गणे समुद्रान्नावि मनुष्ये चेति पठितम्। तेन सामुद्रिका नौरिति वुञि रूपम्। अन्यत्र सामुद्रं जलं सामुद्रस्तरङ्ग इत्यण् भवति। नद्यादिभ्यो ढक् इति ढकि स्त्रियां ङीपि नादेयीति साधु। २१—काश्यादिभ्यष्ठञ्ञिठावित्यत्र आपदादिपूर्वपदात्कालान्तादिति पठितम्। तेन ञिठे स्त्रियां टापि तात्कालिकेति साधु। ठञि तु तात्कालिकीति भवति। २२—द्युप्रागपागुदक् प्रतीचो यत् इत्यत्र अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलौ भवत इति वृत्तावुक्तम्। तेन प्राक्तनमित्येव साधु। २३—अवृद्धादपि बहुवचनविषयात् (४।२।१२५) इत्यनेन वुञि कालिङ्ग इत्येव साधु। २४—रोपधेतोः प्राचामिति वुञि पाटलिपुत्रका इत्येव साधु। २५—कच्छादिभ्यश्च (४।२।१३३) इत्यत्र गणे कश्मीरशब्दः पठ्यते। मनुष्यतत्स्थयोर्वुञ् इत्यग्रिमं सूत्रं कच्छादिभ्य एव वुञं विधत्तेऽणोऽपवादम्। तेन प्रकृते काश्मीरका इत्येव साधु। २६—अवृद्धादपि बहुवचनविषयात् इति वुञि आङ्गक इत्येव साधु। २७—कच्छादिभ्यश्चेत्यनेनाखि

काश्मीरमित्येव साधु। २८—दिक्पूर्वपदाट्ठञ् चेति यताऽनुवृत्तेन भवितव्यं ठञा वा। तेन पूर्वार्द्धर्यं पौर्वार्धिकमिति वा भवति। एवं चोत्तरार्द्धर्यं मौत्तरार्द्धिकमिति वा। २९—दिगादिभ्यो यत् इति यति वर्ग्या इत्येव साधु। वर्गान्ताच्छस्य विधानात्। ३०—कुग्जनस्य परस्य चेति गहादिषु पठ्यते। तेन परकीयमित्येव साधु। ३१—आवश्यकशब्दाद् अर्श आदिभ्योच् इत्यचि आवश्यकमित्येव साधु। वृद्धत्वेपि च्छस्य प्रसङ्गो न। शैषिकार्थस्यासत्त्वात्। ३२—कालाट्ठञ् इति ठञि दाशाब्दिके इति वक्तव्यम्। दशसु अब्देषु भवमित्यर्थः। ३३—अचित्ताद्देशकालाट्ठक् (४।३।९६) इति ठकि आपूपिकाः पायसिका इति च साधु। अपूपा भक्तिरस्य, पायसं भक्तिरस्येति विग्रहः। ३४—गोरिदं गव्यम्। तस्येदमित्यणप्रसङ्गे सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत् इति यत्। तेन गव्यमिति साधु। अजाया इदमाजम्। तस्येदमित्यण्। ३५—बाल्यकालिक इत्येव साधु। कालाट्ठञ्। ३६—कुत्सितं शरीरं शरीरकम्। तत्सम्बन्धी शारीरको जीवात्मा। तमधिकृत्य कृतानि सूत्राणि शारीरकीयाणीति वाच्यानि स्युः। अधिकृत्य कृते ग्रन्थे इति वृद्धत्वाच्छप्रत्ययप्रसङ्गात्। शारीरकमिति त्वभेदोपचारात्। ३७—अद्यतन इत्येव साधु। ख्प्रत्ययाप्रसक्तेः। ३८—गतं च तद्वर्षं चेति गतवर्षम्। तत्र भवम् गातवर्षिकमिति युज्यते। कालट्ठञ्। वर्षस्याभविष्यतीत्युत्तरपदवृद्धेरप्रसङ्गः। संख्याया उत्तरस्य वर्षशब्दस्याभावात्। ३९—पूर्वैः कृतमिनयौ चेति यप्रत्यये पूर्व्यं इति च्छन्दसि साधु। पूर्वैः कृतः पूर्व्यं इति च विग्रहः। भाषायां तु नायं शब्दः प्रयुज्यते। तेन पूर्ण इत्येव साधु। ४०—आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्य इति ठकि ऐतिहासिक इति सिध्यति। इतिहासमधीते वेद वेत्यर्थः। अत्रैवार्थेऽस्य प्रयोगो दृश्यते न त्वितिहासे प्रसिद्ध इत्यर्थे, इतिहासे भव इत्यर्थे वा। तेनाध्यात्मादित्वं न कल्पनीयम्। ४१—मध्यान्म इति मध्यम इत्येव साधु। साम्प्रतिके न्याय्य एव मध्यात् अ साम्प्रतिके इत्यप्रत्यये मध्यो वैयाकरणः, मध्यं काष्ठमित्यादि भवति। ४२—परस्परं भवः पारस्परिक इत्यध्यात्मादित्वाद्ठञि शक्यव्युत्पत्ति-

कमप्यप्रयुक्तपूर्वमिति नादरणीयम् । परस्परमित्येव प्रयोगार्हम् । ४३—संस्कृते धार्मिकशब्दो धर्मं चरतीत्यर्थ एव रूढः । अन्यत्र प्रयोगादर्शनात् । ४४—पूर्वपाकिस्थान इत्येव साधु । पूर्वाच्छप्रत्ययाप्रसङ्गात् । ४५—तात्कालिक्येति साधु । उक्तो हेतुः । ४६—धन्वयोपधाद्वुञ् इत्यायोध्यकमिति साधु । अयोध्यायां जातं भवं वेत्यर्थः । ४७—गातवर्षिके इत्येव साधु । कालाट्ठञ् । आदिवृद्धिः । ४८—विरुद्धो धर्मो येषां ते विधर्माण इत्येव वक्तव्यम् । अनिच्समासान्तः । तद्धितवृत्त्या नार्थः । धर्मशीलवर्णान्ताच्चेति मत्वर्थीयेन इनिना हिन्दुधर्मिण इति साधु । हिन्दूनां धर्मो हिन्दुधर्मः, स एषामस्तीति हिन्दुधर्मिणः । तैः हिन्दुधर्मिभिः । ४९—अन्योन्यमित्येव साधु । तस्येदमित्यणि आन्योन्यमित्यस्य सिद्धिसंभवेपि नेदं प्रयुक्तपूर्वमिति परिहार्यम् । ५०—स्वर्गत इत्येव साधु । ननु स्वर्ग इति देशविशेषस्य संज्ञेति वा नामधेयस्य वृद्धसंज्ञा वक्तव्येति वृद्धाच्छे स्वर्गीय इति सिध्यतीति चेन्मैवम् । अप्रयोगात् । नहि 'स्वर्गीय इति स्वर्गतार्थे प्रयुक्तपूर्वः । बाढं ये च स्वर्गस्थास्ते स्वर्गिण इत्युच्यन्ते । ५१—दिनस्य द्विः प्रकाश्यन्त इत्येव शोभनं वचः । नात्र तद्धितवृत्तिसमाश्रयेणाभूतपूर्वं शब्दरूपमुत्पाद्यम् । दिने भवानि दैनिकानि । कालाट्ठञ् । द्विदैनिकानीति द्विर्दैनिकानीति कथं चेत्समाधेयम् । ५२—दक्षिणापश्चात् पुरसस्त्यक् इति त्यकि पौरस्त्यमित्येव साधु ।—५३—मानवशब्दाद् वृद्धाच्छप्रत्यये मानवीयासु इत्येव साधु । ५४—वर्षाभ्यष्ठक् इति वार्षिक इति साधु । वर्षासु भव इति विग्रहः । ५५—चक्षुर्भ्यां गृह्यत इति चाक्षुषः । शेष इत्यण् । ५६—नद्यादिभ्यो ढकि वाराणसेयीनामिति साधु । ५७—अध्यात्मादित्वाट्ठञि इसुसुक्तान्तात्क इति ठस्य कादेशे स्नायुकीत्येव साधु । ५८—जगत इयं जागती । शैषिकोऽण् । तेन जागतिकीति प्रामादिकम् । ५९—शार्वरिकमित्येव साधु । कालाट्ठञ् । शार्वरमिति तु प्रामादिकमेवेति प्रामाणिकाः । ६०—सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि शारदशब्द एव साधुः ६१—स्वस्येदं सौवम् । द्वारादीनां चोत्तरपदवृद्धिप्रतिषेधे वकारात्पूर्वमौकारागमे सिद्धम् ।

# तद्धितपरिशेषाधिकारः ।

१—सार्वजनिकीति साधु। सर्वजनेषु भवेति विग्रहः। अध्यात्मादित्वाट्ठञ्। सर्वजनाट्ठञ् खश्चेति आत्मन्विश्वजनभोगोत्तरपदात्ख इत्यत्र वार्तिकं पठ्यते। तेन सर्वजनेभ्यो हिता सार्वजनिकी सर्वजनीनेति वा स्यात्। प्रातजनादिभ्यः खञ् इति खञि रूपसिद्धिः सुलभा। तत्र साधुरित्यर्थस्तु न युज्यते। २—तेन तुल्यं क्रिया चेद्वतिरित्यस्य प्रवृत्त्यप्रसङ्गाद्वतेरप्राप्तौ जिह्वेति वक्तव्यम्। ३—न स्वीकुर्वन्तीति वक्तव्यम्। कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः। योग इहार्थकृत एव न, शब्दकृतोऽप्यभिप्रेयते। तेन नकारेण व्यवधाने नैष विधिः। ४—एकत्र भूता इत्येव। समवेता इति वा वक्तव्यम्। सम्पद्यकर्तरीत्युक्तम्। कारकान्तरसम्पत्तौ श्रा भूत्। तेन च्विरत्र दुर्लभः। अनेकत्र एकत्र भवन्तीत्यत्राधेयविशेषसम्बन्धेनाभूततद्भावः सत्त्वाधिकरणस्य न कर्तुः। ५—अशीतिर्वर्षाणि वयः प्रमाणमस्येत्यशीतिवर्षः। प्रमाणे लः। द्विगोर्नित्यम् इति मात्रचो लुक् इत्येवं केचिद् व्युत्पादयन्ति। तदपरे न सहन्ते। अत्र प्रमाणशब्देन प्रमाणत्वेन ये प्रसिद्धा दिष्ट्यादयस्ते गृह्यन्ते। द्वे दिष्टी प्रमाणमस्येति द्विदिष्टि। तेन अशीतिं वर्षाणि भूत इति विगृह्य तमधीष्टो भृतो भूतो भावीति भूतेऽर्थे कालाट्ठञि चित्तवति नित्यमिति तस्य लुकि अशीतिवर्ष इत्येव साधु। ६—अद्यश्वीनावष्टब्धे ( ५।२।१३ )। अत्रावष्टब्धे विजने आसन्ने प्रसवेऽद्यश्वीन इति निपात्यते। अद्यश्वीना गौः। अद्यश्वीना वडवा। अद्य वा श्वो वा विजायत इत्यर्थः। केचिदत्र पूर्वसूत्राद् विजायत इति नानुवर्तयन्ति, अवष्टब्धमात्रे निपातनमित्याहुः। अद्यश्वीनं मरणम्। अद्यश्वीनो वियोग इति। प्रकृते आसन्नपातमित्यर्थो विवक्षितः। तमद्यश्वीनशब्दो नार्पयतीत्यस्थाने तत्प्रयोगः। ७—वतिः क्रियातौल्ये विहितः। तेनेह पित्रासह स्थूलः, पित्रा तुल्यः स्थूल इति वा वक्तव्यम्। ८—बिल्वादिभ्योऽणि वैणवीति भवति। मयड्विकल्पे वेणुमयीत्यपि साधु। छन्दसि तु नोत्त्ववद्धर्ध्रबिल्वात् इति मयटो निषेधे वैणवीत्येव। ९—दशवर्ष इत्येव

साधु। उक्तो हेतुः। १०—सेनां समवैतीति सेनाया वेति पाक्षिके ठकि सैनिकमिति रूपम्। तेन प्रकृतेऽर्थासङ्गतिः स्फुटा। तस्माद् वृद्धाच्छे सैनिकीयमिति साधु स्यात्। ११—धर्मं चरतीति धार्मिक इत्यत्रार्थे धार्मिकशब्दस्य रूढेः शास्त्रकारेण च तथा व्युत्पत्तेर्धर्मविरोधी इति समासवृत्त्या वक्तव्यम्। १२—मध्यगन्म इति मध्यम इत्येव साधु। १३—पूर्व इत्येव साधु। पूर्व्य इति च्छन्दसि यति साधु। १४—शतं वर्षाणि भूतेति शतवार्षिकीत्येव शोभनम्। तमधीष्टो भृतो भूतो भावीति भूतेऽर्थे कालाट्ठञ् इति ठञि वर्षस्याभविष्यतीत्युत्तरपदवृद्धौ शतवर्षिकीति रूपम्। छप्रत्ययाप्रसङ्गाच्छतवर्षीयेत्यपशब्दः। १५—गणपतिर्देवताऽस्येति गाणपत इति युज्यते वक्तुम्। अश्वपत्यादिभ्यश्चेति प्राग्दीव्यतीयोऽण्। १६—वर्तमानयुगीना इत्यपशब्दः। खस्याप्राप्तेः। प्रतिजनादिभ्यः खञ् इत्यत्र गणे इदं युगमिति पठ्यते। तेन तत्र साधुरित्यर्थे ऐदंयुगीना इति प्रयोज्यम्। १७—ऋचः शे (६।३।५५) इति पादशब्दस्य पद् इत्यादेशे पच्छ इति रूपम्। १८—ईषदूना शस्त्री शस्त्रिकल्पेति साधु। घरूपकल्पचेलड् इत्यादिना कल्पप् प्रत्यये ङ्यन्तस्यानेकाचः शस्त्रीशब्दस्य ह्रस्वो विधीयते। १९—विदुषीतरा। विदुषितरा। विद्वत्तरेति रूपत्रयमपि साध्विति वृत्तिकारो मन्यते। कौमुदीकारस्तु उगितश्चेति ह्रस्वाभावपक्षे तसिलादिष्विति पुंवद्भावो दुर्वार इति विदुषीतरेति रूपं निराकरोति। २०—अधर्माच्चेति वक्तव्याद् आधर्मिक इत्येव साधु। अधार्मिक इति तु नञ्समासे साधु। न धार्मिकोऽधार्मिकः। २१—वले इत्यासुतीवल इत्येव साधु। आसुतीवलः शौण्डिकः। २२—इदं नागानन्दनाटके चतुर्थेऽङ्के शङ्खचूडस्य वचनम्। क्रोडीकरोतीत्यत्र च्विर्दुर्लभः। सम्पद्यकर्तरि स उक्तः। कारकान्तरसम्पत्तौ न भवति। क्रोडे करोतीत्येव साधु। यदि क्रोडशब्दः क्रोडस्थमाह लक्षणया तर्हि न कश्चिद् दोषः। २३—वर्षस्याभविष्यतीति भविष्यत्युत्तरपदवृद्धेः प्रतिषेधादादिवृद्धौ त्रैवर्षिकमित्येव साधु। २४—असंख्या इत्येव वक्तव्यम्। धा प्रत्ययस्याप्रसङ्गात्। धाप्रत्ययो हि संख्याया विधार्थे धा, विभाषा बहोर्धाऽविप्रकृष्टकाले इति सूत्राभ्यां विधीयते। इह च संख्या-

वचनो नास्ति न वा बहुशब्दोऽस्ति। २५—महाविभाषया च्वेरभाव इत्यदोषः। २६—ब्रह्मण इदं ब्राह्मम्। ब्राह्मोऽजाताविति योगो विभज्यते। ब्राह्म इत्यनपत्येऽणि टिलोपार्थं निपात्यते। ततो जातौ। अपत्ये जातावणि टिलोपो न भवति। ब्रह्मणोऽपत्यं ब्राह्मणः। २७—प्रागिति दिक्छब्दः। दिक्छब्दयोगे विहिता पञ्चम्यपादानपञ्चमी न भवतीत्यपादाने चाहीयरुहोरित्यनेन तसेरादेशस्यायोगात्प्राङ् निशाया इत्येव साधु। २८—याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि। कण्वादिभ्यो गोत्र इत्यण्। कण्वादिर्गर्गाद्यन्तर्गणः। याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वाद् इति पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति णिनिर्न। तद्विषयताऽपि न। प्रतिपदं ब्राह्मणेषु यः प्रत्ययस्तस्य तद्विषयता विधीयते णिनेः। २९—एकाच्च प्राचामित्येकशब्दाद्द्वयोर्निर्धारणे डतरच्, बहूनां निर्धारणे डतमच् विहितौ। तेनात्रैकतमेनेति साधु। ३०—प्रशस्तश्चौरः चौररूपः। प्रशंसायां रूपप्। प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा न तु स्तुतिः। गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते। ३१—सुप्रातसुश्वेत्यादयः (५।४।१२०) बहुव्रीहिसमासेऽच्प्रत्ययान्ता निपात्यन्ते। शोभनं प्रातरस्येति सुप्रातः। तेन प्रकृते तत्पुरुषे प्रयोगश्चिन्त्यः। ३२—तस्य पूरणे डटि नवम्यामित्येव साधु। ३३—मानसा मौखा हास्ता इत्यत्र शैषिकोऽण्। पाद शब्दात्तु वृद्धाच्छः प्रसक्तः। तेन पादीया इति स्यात्। तस्य च प्रयोगो नास्तीति पादाभ्यां कृता इति व्यासेन वक्तव्यम्। पादकृता इति समासेन वा। ३४—परम्परीणा इत्येव साधु। परोवरपरम्परपुत्रपौत्रमनुभवतीति खप्रत्ययः। परम्परकमिति परम्पराशब्दाद्व्युत्पन्नात्प्रबन्धवचनादध्यात्मादित्वाट्ठञि सिध्यति। प्रयोगोऽस्य नास्तीति साधुत्वं दुरवधारम्। ३५—प्रशंसायां रूपप्। साधीयः पश्याम इत्यर्थः। ३६—माध्यमकालिका इत्येव साधु। मध्यान्मः। कालाट्ठञ्। आदिवृद्धिः। ३७—कालेन निर्वृत्तम् इत्यर्थे तेन निर्वृत्तम् (५।१।७९) इति ठञ् नार्हति भवितुम्। न ह्यसौ स्वरूपविधिर्भवति। कालात् इत्यधिकारः। तेन कालकृतमित्येवं वाच्यम्। न च कालाट्ठञिति शैषिकेण ठञा शक्यं व्युत्पादयितुमिति वाच्यम्। स्वरूपस्य पर्यायाणां च न ग्रहणमिति पद-

मञ्जर्यादिषु दर्शनात्। कलिकृतमिति चेद्विवक्षितं सर्वत्राग्निकलिभ्यां ढग्वक्तव्य इति ढकि कालेयमित्येव साधु । ३८—अभिमुखमित्येव शब्दः। आभिमुखीन इत्यपशब्दः। खप्रत्ययस्याप्रसक्तेः। ३९—हृदयशब्दाद् अध्यात्मादित्वाट्ठञि कृते हार्दिक इति न सिध्यति। हृदयस्य हृल्लेखयदण्लासेष्विति यदणोर्हृदादेशो विधीयते न तु ठञि। तेन हार्दिक इत्यागन्तुकोऽसम्प्रदायः शब्द इति सुधियां नादरणीयः। हार्द इति तु परिग्राह्यः। तमो हार्दं निवारयन्निति प्रयोगात्। ४०—यमाच्चेति वक्तव्यमिति ण्यप्रत्यये याम्या इत्येव साधु। ४१—अन्तरे भवम् आन्तरमित्येव साधु। शैषिकोऽण्। वृद्धत्वाभावाच्छो न। ४२—द्वन्द्वाद् वुन्वैरमैथुनिकयोरिति वुन्प्रसक्तः, वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्य इति प्रतिषिध्यते। तेन प्राग्दीव्यतीयेणि दैवासुरमिति साधु। ४३—वा बहूनां जातिपरिप्रश्ने डतमच् इति डतमजिह न प्राप्नोति। देवदत्तास्याजातित्वात्। तेन को भवतां देवदत्त इत्येव साध्विति मन्यते। नैतदस्ति। कतरकतमौ जातिपरिप्रश्ने (२।१।६३) इत्यत्र जातिपरिप्रश्नग्रहणं ज्ञापयति कतमशब्दोऽन्यत्रापि वर्तते इति। तेन नात्र काचिद् दुष्टिः। ४४—तदधिकृत्य कृते ग्रन्थ इत्यण्। संज्ञापूर्वकविधेरनित्यत्वान्न वृद्धिः। ४५—वाचो ग्मिनिः। लशक्वतद्धित इतीत्संज्ञाभावाद् गकारद्वयश्रवणम्—वाग्ग्मिनमिति। ४६—तूष्णीमः काम् वक्तव्यः। तूष्णीमेव तूष्णीकाम्। तेन तूष्णीम्भावं युक्तं पश्याम इति वक्तव्यम्। ४७—अद्य प्रभृति, इत इति वा वक्तव्यम्। अद्येत्यधिकरणवृत्ति। ततस्तसेरप्रसङ्गः। स ह्यपादानपञ्चम्या विहितः। आद्यादित्वात्तसेरपि नायं विषयः। ४८—प्राचीनसामयिका इत्यत्र ठञ् दुर्लभः। कालवाचिभ्यः स विहितः। तेन प्राचीनसमयिका इति वक्तव्यम्। प्राचीनसमयोऽस्त्येषामिति। अत इनिठनाविति ठन्। एवञ्जातीयकेषु प्रदेशेषु ठनेव प्रयोज्यो न ठञ्। तथा च मनौ प्रयोगः—तान्यर्वाक्कालिकतया निष्फलान्यनृतानि चेति (१२।९६)। ४९—उपरित इत्यपशब्दः। उपर्युपरिष्टात् (५।३।३१) इत्युपरिशब्दोऽस्तातेरर्थे निपात्यते। अस्तातिश्च सप्तमीपञ्चमीप्रथमान्तेभ्यो विधीयत इति

पञ्चम्यर्थस्योपरिशब्देनैवोक्तत्वात्तसेरप्रसङ्गः। ५०— सर्वाङ्गायाः सर्वाङ्ग्याः सर्वाङ्गीणाया इति वा वक्तव्यम्। सर्वाण्यङ्गान्यस्या इति बहुव्रीहौ अङ्गगात्रकण्ठेभ्यो वा ङीष् वक्तव्य इति ङीष्विकल्पे प्रथम रूपद्वयम्। तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोतीति खे तृतीयं रूपं साधु। ५१—पूर्वादिभिरिति पूर्वशब्दात् क्रियाविशेषणादिनिः। यां कांचित्क्रियामध्याहृत्य प्रत्ययो विधीयते। पूर्वं परिणीतमनेनेति पूर्वी। ५२—ब्राह्मणमाणववाडवाद्यन् इति समूहे यन्। ब्राह्मणानां समूहो ब्राह्मण्यम्। ब्रह्मणि साधुरिति ब्रह्मण्यः। तत्र साधुरिति यत्। ५३—सर्वदार्थमित्यपशब्दः। सर्वदाशब्दोऽधिकरणप्रधानः। तस्यार्थशब्देन समासोऽनुपपन्नः। सर्वकालमिति समासवृत्त्या वक्तव्यम्। ५४—कर्णकुहरे दुर्लभं इत्येव साधु। दुर्लभोत्र च्विः। हेतुस्त्वसकृदुक्तपूर्वः। ५५— कुरुनादादिभ्यो ण्य इति ण्ये, तस्य तद्राजसंज्ञत्वात्तद्राजस्य बहुषु तेनैवास्त्रियामिति लुकि कुरव इत्येव साधु। कुरोरिमे इति तस्येदमित्यणि तु न कश्चिद् दोषः। ५६—मगधस्य नाम राज्ञोऽपत्यानि बहूनि मगधाः। द्व्यञ्मगधकलिङ्गसूरमसादण् इति विहितस्याणो बहुषु लुकि मगधा इति रूपम्। मगधानां निवासो जनपदो मगधाः। तस्य निवास इत्युत्पन्नस्याणो जनपदे लुप् इति लुपि, लुपि युक्तवद् व्यक्तिवचने इति युक्तवद्भावे मगधा इति देशाभिधानं साधु भवति। तस्य षष्ठ्यां मगधानामिति वक्तव्यम्। ५७—सार्वभौमा इत्येव साधु। तत्र विदित इति चेत्यण्। ५८—पूर्वं बहुव्रीहिस्ततस्तरप् प्रत्यय इत्यल्पाच्तरमित्येव साधु। अत्र भाष्यम—पूर्वपदातिशये आतिशायिकाद् बहुव्रीहिः, सूक्ष्मवस्त्रतराद्यर्थः। ५९—घरूपकल्पेत्यादिना ङ्यन्तानेकाचो ह्रस्वत्वे सुन्दरितरेत्येव साधु। ६०—चक्षुषा गृहीतश्चाक्षुषः। शैषिकोऽण्। चक्षुषे हितमिति तस्मै हितमिति यति चक्षुष्य इति भवति। ततः स्वार्थेऽणि चाक्षुष्य इति साधु स्यात्। ६१—कषायेण रक्तौ काषायौ। हरिद्रया रक्तौ हारिद्रौ। काषायाविव काषायौ। हारिद्राविव हारिद्रावित्युपमानाद्भविष्यति। ६२—जीविकार्थे चापण्य इति पण्यपर्युदासात्कनो लुब्न। तेन रामस्य प्रतिकृतिरित्यर्थे रामक इत्येव साधु। पदं लक्ष्मणा-

दिषु द्रष्टव्यम् । ६३—द्वित्रिचतुर्भ्यः सुच् इति सुच् संख्यायाः क्रियाभ्यावृत्तिगणन इत्यनेन विहितस्य कृत्वसुचोऽपवादः । तेन चतुरपि पाठं श्रुत्वेति वक्तव्यम् ।

पर्यवसितं विवेचनं तद्धितानाम् ।



# अथ समासेषु विवेचनम्।

## तत्र नित्यसमासाधिकारः प्रथमः ।

१—सुप्यजातौ णिनिस्ताच्छील्ये इति केवलाद् व्रधातोर्णिनिर्न संभवति। तेन वाचक इति वक्तव्यम्। मद्यमकरन्दमाक्षिकवाचीति वा। उपपदमतिङ् इति नित्यसमासः। अस्वपदविग्रहोऽविग्रहो वा नित्यसमासः। २—न स्वीकृतवान् इत्येव न्याय्यम्। ऊर्यादिच्विडाचश्चेति गतिसंज्ञायां कुगतिप्रादय इति नित्यः समासः। ३—कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् इति कर्मण्युपपदे धातोर्नपुंसकलिङ्गे भावे ल्युट् प्रत्ययो भवति। ल्युट् च (३।३।११५) इत्यनेनैव सिद्धे प्रत्यये नित्यसमासार्थं वचनम्। तेन पयः पानमित्येव साधु। ४—उत्तरपदे त्वमी निभसंकाशनीकाशप्रतीकाशोपमादय इत्यमरवचनान्निभादय उपमावचना नित्यं समस्यन्ते। उत्तरपदशब्दो हि समासचरमावयवे रूढः। ५—द्वितीयान्ते धर्माधिकारिन्शब्द उपपदे मन्यतेर् आत्ममाने खश्चेति खशप्रत्यये नलोपः प्रातिपदिकान्तस्येति नलोपे तस्यासिद्धत्वाद् अरुर्द्विषदजन्तस्य मुम् इति मम्न। तेन धर्माधिकारिमन्या इत्येव शब्दः। ६—सुप्युपपदे णिनेर्विधिरिति केवलाद् विदेस्तदप्रसङ्गाद्वेदिन इत्यसाधु। आवश्यके णिनेरप्यप्रसङ्गः। अर्थासाङ्गत्यात्। ७—अवश्यम्भावीति साधु। अवश्यमिति मकारान्तमव्ययम्। ८—कर्मणि च येन संस्पर्शाद् इत्यनेन ल्युटि तु नित्य उपपदसमासः स्यात्। तस्मात् शरीरसुखस्याविवक्षायां रोगाद्यभिभूतो यदाऽशक्नुवन्नेव साधु पिबति तदाऽयं प्रयोगः साधुर्द्रष्टव्यः। ९—'कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि' इति वाक्यकारप्रयोगादस्मास्वधीनमित्यसमासेऽपि साधु। अन्यथाऽषडक्षाशितंग्वलं कर्मालंपुरुषाध्युत्तरपदात्ख इत्युत्तरपदात्खेऽस्मदधीनमित्येव साधु स्यात्। केचिद् इनं स्वामिनमधिगतोऽधीन इत्येवं व्युत्पादयन्ति। १०—इवेन समासो विभक्त्यलोपश्चेति छन्दसि विधिः। तत्रापि न नित्यः, किन्तर्हि क्वाचित्कः। तेन प्रकृते व्यस्तप्रयोगः सङ्गच्छते।

## अलुक्समासाधिकारो द्वितीयः ।

१—घकालतनेषु कालनाम्न इति विभाषा सप्तम्या अलुक् । तेन प्राह्णतरे इति साधु । पक्षे प्राह्णेतरे इत्यपि । २—वाचस्पतेरिति साधु । तत्पुरुषे कृति बहुलमिति बहुलग्रहणात्षष्ठ्या अलुक् । पारस्करादित्वात्सुट् । अपरे तु द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ चेति सामान्यापेक्षज्ञापकात् षष्ठ्या अलुक्, कस्कादित्वाच्च सत्वमित्याहुः । ३—आत्मनश्च पूरण इत्यलुकाऽऽत्मनाचतुर्थ इति साधु । आत्मा चतुर्थोऽस्येति बहुव्रीहौ तु न दोषः । ४—स्थे च भाषायामिति निषेधात्सप्तम्या लुक् । तेन विषमस्थस्येत्येव साधु । ५—नेन्सिद्धबध्नातिषु चेति सप्तम्या अलुक् न । तेन स्थण्डिलशायीत्येव शब्दः ।

---

## अविहितनिषिद्धसमासाधिकारस्तृतीयः ।

१—अस्रवारि अश्रुजलं स्रवत् ( स्रावयदित्यर्थः ) नेत्रयुगं यस्य तेनेति विग्रहः । अत्र अस्रवारीति द्वितीयान्तम् । तस्य शत्रन्तेन स्रवच्छब्देन केन शास्त्रेण समासः । न केनापीति अस्रवारिस्राविनेत्रयुगेणेति वाच्यमुपपदसमासेन । २—न निर्धारणे इति निर्धारणे या षष्ठी सा न समस्यत इति सर्वेषां श्रेष्ठ इति साधु । निर्धारणे सप्तम्यपि विहिता । तस्या अनिषेधात् सर्वेषु श्रेष्ठः सर्वश्रेष्ठ इति साध्विति केचित् । अनर्थकस्तर्हि षष्ठीसमासनिषेध इति न शङ्क्यम् । षष्ठीसमासस्य सप्तमीसमासस्य च स्वरे विशेषात् । ३—विद्वत्पूजां न करोति, तस्येत्यर्थो विवक्षितः । प्रसज्यप्रतिषेधेऽत्र नञ् । स च न समस्यते । पर्युदासेन च नेह कश्चिदर्थः । तेनासाधुरेवायं न्यासः । ४—जीवनोपरमत इति द्वितीयान्तं पदम् । जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति जीवनशब्दात्पञ्चमी । तस्याः पञ्चम्याः शत्रन्तेनोपरमच्छब्देन केन समासो विधीयत इति भवाप्रष्टव्यः । पञ्चमीति योगविभागात्समास इति चेन्नैवम् । तस्य शिष्ट-

प्रयोगेषु निर्वाहार्थमभ्युपगमात्। ५—पूरणगुणसुहितार्थसदव्ययतव्य-समानाधिकरणेनेति षष्ठीसमासनिषेधे पाणिनेः सूत्रकारस्येति साधु। विशेषणं विशेष्येण बहुलमित्यनेन तु समासो भवत्येव। तदा नियोगतो विशेषणस्यैव पूर्वनिपातः। सूत्रकारपाणिनेः। ६—दिक्संख्ये संज्ञायामिति नियमात्संज्ञायामेव संख्यावचनाः समानाधिकरणेन समस्यन्ते। अत्र च संज्ञा नास्तीति षष्टी रूप्यकाणीति व्यासेन वक्तव्यम्। ७—क्तेन च पूजायाम् इति क्तस्य च वर्तमाने इति विहितायाः षष्ठ्याः समासो नेति मम संमत इत्येव वाच्यम्। ८—अनित्योऽयं गुणेन निषेधः। तदशिष्यं संज्ञा-प्रमाणत्वादित्यादिनिर्देशादिति पूरणगुणेत्यादिसूत्रे दीक्षितः। अनित्यत्वं भाष्ये न दृश्यत इति दाधिमथाः। तेन काकसम्बन्धिकार्ष्ण्यं काक-कार्ष्ण्यमित्येवं सध्यमपदलोपिसमासकल्पनया साधुत्वमवसेयम्। ९—पूरणगुणेत्यादिना शास्त्रेणाव्ययेन षष्ठीसमासनिषेधात् पर्वतस्योपरिष्टा-दित्येव साधु। १०—विरोधस्य जनयितार इत्यसमासेन वक्तव्यम्। कर्तरि चेति षष्ठीसमासनिषेधात्। ११—न लोकाव्ययनिष्ठाखलर्थतृनाम् इति कृद्योगलक्षणायाः षष्ठ्या निषेधे पुत्राद् द्वितीया। पुत्रमभिलाषुकः। द्वितीयासमासविधेरभावाद् वाक्यमेव साधु। १२—अत्र चतुर्थीसमास-विधेरभावात् सद्भर्त्रे प्रतिपादितेत्येव साधु। अस्ति च तत्पाठान्तरं मातृका-ग्रन्थेषु। १३—महिलानामुत्तमाया इत्येव साधु। उक्तोऽत्र हेतुः। १४—कवि-प्रथमपद्धतेः प्रणेतेत्येवं न्यासो न्याय्यः। कर्तरि चेति षष्ठीसमासनिषेधात्। १५—विशेषणं विशेष्येण बहुलमिति समासः। कार्तवीर्यश्चासावर्जु-नश्चेति विग्रहः। षष्ठी समानाधिकरणेन न समस्यत इति प्रतिषेधे सत्य-प्येष विधिर्भवतीति काशिका। १६—शुक्राचार्यकन्याया देवयान्याः, वृष-पर्वदुहितुः शर्मिष्ठाया इत्येवं व्यासेन वक्तव्यम्। पूरणगुणेत्यादिना सूत्रेण षष्ठ्याः समानाधिकरणेन समासनिषेधात्। १७—सहयुक्तेऽप्रधाने इति सहार्थैर्योगे तृतीया विहिता। एतल्लक्षणायास्तृतीयायाः समासस्तु क्वचिन्नोक्त इति त्वया साकमित्येवं व्यासेन वक्तव्यम्।

## दुर्घटासमर्थसमासाधिकारश्चतुर्थः ।

१—प्रश्नाश्चोत्तराणि चेति प्रश्नोत्तराणि प्रश्नोत्तरं वेति युज्यते वक्तुम् । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्युत्तरशब्दस्य लिङ्गम् । समाहारे तु स नपुंसकमिति समासस्य नपुंसकत्वम् । नात्र बहुव्रीहिः शक्यशङ्कः । चार्थस्य विद्यमानत्वाद् द्वन्द्वस्य दुर्वारत्वात् । २—भयशब्दो हि मृत्युसव्यपेक्ष इति मृत्युशब्देन प्रथमं समसनमर्हति । मृत्योर्भयं मृत्युभयम् । निष्क्रान्तं मृत्युभयात् इति निर्मृत्युभयचेतसामित्येव न्यासो न्याय्यः । ३—तस्य परासृजा रञ्जनमित्येवं न्यासः कार्यः । कर्तृकरणे कृता बहुलमिति बहुलग्रहणात्समासो न । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरित्यादि चतुर्विधं बाहुलकमाहुः । ४—बलिभिः करैः पीडिता इति बलिपीडिताः । तृतीयातत्पुरुषः । ततो नञ् समासः । तेन अबलिपीडिता इत्येव साधु । ५—प्रतीकारार्थमित्यसमर्थसमासोऽयम् । वैषम्यशब्दापेक्षः प्रतीकारशब्दोऽर्थशब्देन समसनं नार्हति । प्रतीकाराय, वैषम्यप्रतीकारार्थमिति समासेन वा वक्तव्यम् । ६—पुनः संस्कृतोद्धारमित्येवं समासो निर्दुष्टः स्यात् । उद्धारशब्दः संस्कृमाकाङ्क्षति । तेन प्रथमं संस्कृतोद्धार इति षष्ठीतत्पुरुष आस्थेयः, ततः पुनःशब्देन समासः । तस्मात् पुनः संस्कृतोद्धार इत्येव साधु । यथा वाक्यपदीयकारस्य भूयो द्रव्यसमुद्देश इति प्रयोगः । ७—सर्वयोषिद्गुणालङ्कृतामित्येवं न्यासः साधुः । पूर्वं षष्ठीसमासः पश्चात्कर्मधारय इत्येष क्रम इति प्रसाधितं भूमिकायामिति तत एवावधार्यम् । ८—मौनमास्थित इति व्यासेन वक्तव्यम् । द्वितीयासमासविधेरभावात् । द्वितीयेति योगविभागाद्वा समास इति समाधेयम् । ९—गीर्वाणेभ्यः समर्पणीया इत्येवं वाक्यमाश्रयणीयम् । चतुर्थीसमासस्याविधेः । १०—आगामिपूर्णिमायाः पूर्वमित्येवं विग्रहेण वक्तव्यम् । पञ्चमीसमासस्याविधानात् । न च पूर्वेण पञ्चमीसमासः शिष्टप्रयोगेषु दृष्ट इत्यलं तत्समाधानयत्नेन । ११—अवसानोत्तरस्मिन्नित्यसमर्थसमासः । अवसानमिति देहेन सम्बद्धमिति सापेक्षम् ।

सापेक्षमसमर्थं भवति । तेन देहावसानोत्तरस्मिन्नित्येवं न्यासो न्याय्यः । १२—दुर्लभस्त्रिपदस्तत्पुरुष इति त्रयाणां लोकानां नाथ इति समासो न स्यात् । तेन त्र्यवयवो लोकस्त्रिलोकः । मध्यमपदलोपी समासः । त्रिलोकस्य नाथस्त्रिलोकनाथ इत्येवं व्याख्येयम् । १३—असामर्थ्येऽपि गमकत्वात्समासो देवदत्तस्य गुरुकुलमिति वत् । तेन ज्ञातयाथार्थ्येति साधु । १४—द्विसहस्राभिरित्यपशब्दः । त्रिभिर्जातिसहस्रैरिति वक्तव्यम् । त्रिसहस्रमित्येकवचनान्तं प्रयुज्यते, त्र्यधिकं सहस्रमिति च तद्विग्रहो भवति । त्रीणि सहस्राणीत्यर्थे तु समासो नास्ति । दिक्संख्ये संज्ञायामिति नियमात् । १५—पूर्वं षष्ठीसमासः सम्बन्धाख्यायको भवति पश्चात्तत्सम्बन्धवान् विशेष्यत इत्युदात्तस्वाचरणेनेति न्यासः शोभनः स्यात् । उत्तरपदार्थप्रधानस्तत्पुरुष इत्युदात्तार्थो गौणतां भजत इत्युदात्तेन स्वाचरणेनेति शोभनतरो न्यासः । स्वशब्दमन्तरेणापि तदर्थगतेरुदात्तेनाचरणेनेति शोभनतमः । १६—सहशब्देन सदृशवचनेन समासो द्रष्टव्यः । वोपसर्जनस्येति वा सादेशः । १७—प्रश्नं प्रश्नं प्रतीति प्रतिप्रश्नमित्यव्ययीभावः । नाव्ययीभावादतोऽम्त्वपञ्चम्या इति सुपोऽमादेशः । तेन प्रतिप्रश्नस्येत्यपशब्दः । १८—अस्तमिति मकारान्तमव्ययं तिरोभावे वर्तते । अस्त इति चाचलविशेषस्य संज्ञा । तेन सूर्योदयास्तमयाविति वाच्यम् । १९—स्वराज्यसुराज्ययोरित्येवं व्यसनीयम् । साधारणमपि राज्यमिति पदं दुस्त्यजम् । न च स्वशब्देन सुराज्यगतराज्यशब्दः शक्यो विशेषयितुम् । सर्वनाम्नां प्रधानपरामर्शित्वमिति स्थितम् । २०—तत्तद्ग्रन्थानधीतानामिति दुष्टो न्यासः । अनधीततत्तद्ग्रन्थानामित्येव शोभनः संनिवेशः । यथास्थिते द्वितीयासमासानुपपत्तेः । २१—आङ् मर्यादाभिविध्योरिति विभाषाऽव्ययीभावः । अव्ययीभावश्चेति नपुंसकत्वे ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वे अव्ययादाप्सुप इति सुब्लुकि आषोडशतिथि इति युक्तः समासः । पक्षे आ षोडश्यास्तिथेरिति वाक्यम् । २२—कृतोपकारावेदनमित्यसमर्थः समासः । तेन अन्यकृतोपकारावेदनमित्येवं वक्तव्यम् । २३—जननी च जनकश्चेति जननीजनकौ, तयोर्जननी

जनकयोः। 'पुमान् स्त्रिया' इत्येकशेषविधौ तल्लक्षणश्चेदेव विशेष इति वर्तते। अत्र स्त्रीप्रत्ययमात्रं भिद्यत इति न, कृत्प्रत्ययावपि भिद्येते। २४—त्रिचतुराङ्गुलायामा इति समासेन वक्तव्यम्। तिस्रश्चतस्रो वा या अङ्गुलयस्ता इत्येवं विग्रहे तु त्रिचतुरा इति न सिध्यति। त्रीणि वा चत्वारि वेति सामान्योपक्रमे संख्ययोः समासे त्र्युपाभ्यां चतुरोऽजिष्यत इत्यचि समासान्ते स्त्रीत्वविवक्षायां टापि त्रिचतुरा इति रूपम्। त्रिचतुरा अङ्गुलय आयाम आसामिति विग्रहे त्रिचतुरा इत्यस्य संख्यात्वमाश्रित्य त्रिचतुराङ्गुलीति शब्दरूपस्योत्तरपदे परतो द्विगुत्वम्। तेन तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरित्यच्समासान्तः। २५—उपकर्तव्यमिति विधेयम्। विधेयेन च समासो नेति परेषामुपकर्तव्यमिति वाक्यमेव साधु। परेषामिति कर्मणि शेषत्वेन विवक्षिते षष्ठी। २६—आचतुश्चत्वारिंशद्वर्षमित्यव्ययीभावेन सुपोऽमादेशो वक्तव्यम्। आ चतुश्चत्वारिंशतो वर्षेभ्य इति व्यासेन वा। २७—सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं नेति भाष्योक्तेः प्रतिवेदमित्यव्ययीभावो निर्वृत्तः सन्साङ्गोपाङ्गस्येति विशेषणेन योगं नार्हति। एकैकस्य वेदस्येति वक्तव्यम्। प्रतिवेदं साङ्गोपाङ्गमध्ययनमित्येवं वा न्यासः कार्यः। तत्र साङ्गोपाङ्गमिति क्रियाविशेषणम्। २८—अविरुध्यत इति प्रमादः। भाषायां तिङन्तेन समासाभावात्। सुप्सुपेत्यधिकारात्। न विरुध्यत इत्येव वक्तव्यम्। २९—संजातसंग्रामे इत्यसमर्थसमासः। आर्यदस्यूनामित्यपि हेयम्। विलम्बितेष्टार्थसमर्पणात्। दस्यव आर्या न भवन्तीत्यागन्तुकार्थप्रतीतेः कर्मधारयायोगाद् द्वन्द्वसमाश्रयात्। तेन आर्याणां दस्यूनां चेति वक्तव्यम् आर्याणां दस्युभिः सहेति वा। ३०—नृपकन्यामित्यसमर्थसमासः। नृपस्य कन्यामिति वाक्यमेव प्रयोज्यम्। ३१—दिक्संख्ये संज्ञायामिति नियमादसंज्ञायां संख्या समानाधिकरणेन सुबन्तेन न समस्यत इति दिव्यानि सहस्रं वर्षाणीत्येवं न्यसनीयं दिव्यं वर्षसहस्रमिति षष्ठीसमासेन वा। ३२—अनन्तरोक्तेनैव नियमेन पञ्चशतमिति सावद्यम्। पञ्चाधिकं शतमित्यर्थे तु मध्यमपदलोपिसमासे तत्साध्वेव। ३३—शताद्वर्षेभ्य इत्येवं निर्दुष्टं स्यात्। निर्दुष्टत्व उक्तो हेतुः। किञ्चि-

न्यूनानि इति च वक्तव्यं तस्यार्थस्य प्राधान्यख्यापनाय। ३४—न हि विशेषणानां परस्परं विशेषणविशेष्यभावोऽस्ति। न ह्युपाधेरुपाधिरस्ति विशेषणस्य वा विशेषणमिति भाष्योक्तेः। तस्मादयं महान् विद्वान् इति विशेषणद्वयमेकमेवार्थमिदंलक्षणं विशिनष्टि। अयं विद्वानस्ति महांश्च कुलेन वा धनेन वा विद्याधिगमेन वेत्यर्थः। महदस्य वैदुष्यमित्यर्थो न। महाविद्वान् इति समासार्थस्तु महद् विद्वत्त्वमस्येति संभवति। तत्र विद्वानिति भावप्रधानो निर्देशः। एकतरस्य विशेषणस्य विशेष्यत्वकल्पनयाऽयं विशेषणयोः समानाधिकरणस्तत्पुरुषो वा द्रष्टव्यः। अपि वा महद्यथा स्यात्तथा विद्वान् इति विग्रहे महच्छब्दः क्रियाविशेषणम्। सुप्सुपासमासः। ३५—चतुश्चत्वारिंशत्सहस्राणि च लक्षं च लोका इत्येवं व्यासेन वक्तव्यम्। ३६—वल्कलं परिधानमिति व्यस्तरूपकेण वाच्यम्। यथा तृणानि शय्यात्वेन रूप्यन्ते तथा वल्कलं परिधानत्वेनेति वल्कलं विशेष्यं प्रधानम् इति तस्य तृणानीतिवत्पूर्वं प्रयोग उचितः। ३७—आमरणान्तमित्येवाव्ययीभावे साधु। समासान्तरं चेह न शक्यं समाश्रयितुम्। ३८—पत्त्रत्रितयं पलाशे इत्येवं वक्तव्यम्। पत्त्राणां त्रितयमिति पत्त्रत्रितयमिति षष्ठीसमासः। न चायं बहुव्रीहिः, पत्त्राणां त्रितयं यत्रास्ति स इति, व्यधिकरणत्वात्। अनेकमन्यपदार्थे इत्यनेकमिति प्रथमान्तम्। तेन प्रथमान्तानामेव बहुव्रीहिः। ३९—प्राणयङ्क्त्वाचञ्चुचरणैरिति द्वन्द्वनिर्देशो न युक्तः। चञ्चुचरणेनेत्येकवद्भावेन वक्तव्यम्। अवश्यं समाधेयमिति चेत् चञ्चुसहिताश्चरणाः चञ्चुचरणा इति मध्यमपदलोपिसमास आश्रेयः। ४०—आबालवृद्धं लोका इत्येवं वक्तव्यम्। बालाश्च वृद्धाश्चेति बालवृद्धाः। तानभिव्याप्य यथा स्यात्तथेत्यर्थः। आङ् मर्यादाभिविध्योरित्यव्ययीभावः। अव्ययीभावश्चेति नपुंसकत्वम्। ४१—चत्वारि शतानि पञ्च शतानि वेति वक्तव्यम्। संख्या समानाधिकरणेन न समस्यत इत्यसकृदुक्तमधस्तात्। चतुष्पञ्चानि शतानीत्येवमपि दुर्लभं वक्तुम्। संख्येये वर्तमाना संख्या संख्यया समस्यते बहुव्रीहिश्च समासो भवति। प्रस्तुते तु चत्वारि वा पञ्च वेति संख्ये संख्येये न

वर्तते, शतानीति हि तत्र विशेष्यम्। तच्च स्वयं संख्येये वर्तते नाम। ४२—अपरिच्छेत्तुमसाध्ययशस इत्यपार्थकः शब्दसन्दोहः। असङ्गतेः। अपरिच्छेत्तुमित्यत्र नञा नार्थः। असाध्ययशस इत्यसमर्थसमासः। अपरिच्छेद्ययशस इत्येव निर्दुष्टो न्यासः। ४३—बृहद्बिल्वफलेनेति व्यवहारानुगो न्यासः। पूर्वं सम्बन्धाख्याकः षष्ठीसमासः पश्चाद् विशेषणसमास इत्येष क्रम इत्यसकृदुक्तम्। ४४—कर्मणि चेत्युभयप्राप्तौ या कर्मणि षष्ठी सा न समस्यत इति सुरायाः पानमित्येव साधु। केचिद्विशेषेण विभाषामिच्छन्तीति वचनान्मर्कटस्येति षष्ठी साध्वी। तस्य वृश्चिकेन दंशनमित्यसमास एव वरम्। ४५—उत्तरपदार्थप्रधानो हि नञ्समासः। एकत्वबुद्ध्या भ्रम इत्यतोऽयमेकशब्द एकस्मिन्नित्येकवचनमेव युज्यते। ज्ञापकं च—अनेकमन्यपदार्थे इति। तथा च माघः—करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रश इति। रक्षितस्त्वाह—अध्यारोपितबहुत्वाद् बहुवचनम्। यथा द्युद्भ्यो लुङि वृद्भ्यः स्यसनोरिति। अनेकश्चानेकश्चानेकश्चेत्यनेके इत्येकशेषाद्वेति शब्दकौस्तुभे स्थितम्। ४६—शतात्परा इति परश्शताः। पञ्चमीति योगविभागात्समासः। पारस्कराादित्वात्सुट्। लोकाश्रयत्वाल्लिङ्गस्येति न परवल्लिङ्गता। स्त्रियाः पुंवद् इति योगविभागात्परशब्दे पुंवत्त्वम्। ४७—विंशतेर्वर्षेभ्य इत्येवं व्यासेन वक्तव्यम्। उक्तोऽत्र हेतुः। ४८—नक्तमित्यधिकरणवृत्ति। तेन नक्तन्दिनमिति द्वन्द्वो नोपपद्यते। एवमेव दिवानिशमिति समासोऽप्यनुपपन्नः। नक्तन्दिवमिति तु साधु। अचतुरविचतुरेत्यादिना निपातनात्। अहोरात्रमिति वा वक्तव्यम्। ४९—तुलाधिरूढमित्यसमर्थसमासः। तुलामधिरूढमित्येव शोभनम्। ५०—अनद्यतनभूतकतिचिल्लकारैरिति दुःश्लिष्टं पदकदम्बकम्। चिच्छब्दस्तावन्न क्वचिदपि समासमनुप्रविशन्दृष्टः। अनद्यतनभूताद्यर्थे कतिभिश्चिल्लकारैरिति वक्तव्यम्। ५१—सर्वदार्थमित्यपशब्दः। सर्वदेति तद्धितश्चासर्वविभक्तिरित्यव्ययम् अधिकरणवृत्ति। सर्वस्मिन्काल इति च तदर्थः। तस्यार्थशब्देन समासोऽनुपपन्नः। सर्वदार्थमित्यपास्य सर्वकालमिति वक्तव्यम्। ५२—नामग्राह-

मिति नाम्न्यादिशिग्रहोरिति णमुलि रूपम् । उपपदसमासः । तत्र सह-शब्देन समासान्तरमनर्थकम् । ५३—पदमकरन्दम् इत्यसमर्थसमासः । मुकुन्दस्येमे पदे मौकुन्दे । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्विन्त्यमरः । मुकुन्दपदमकरन्दमिति तु निरवद्यम् । मौकुन्दपदमकरन्दमित्यपि न श्रेयः । समासवृत्त्यैव विवक्षितार्थस्य समर्पणात् तद्धितवृत्त्या नार्थः । एकत्र वृत्तिद्वयाङ्गीकारे गौरवात् । ५४—प्रतिकोणम् । कोणं कोणं प्रति प्रतिकोणमित्यव्ययीभावः । भारतस्येति षष्ठ्यन्तं विशेषणम् । सत्यस्मिन्विशेषणे समासो न, सति च समासे विशेषणयोगो नेति कोणे कोण इति वक्तव्यम् ।

---

## पूर्वनिपातपरनिपाताधिकारः पञ्चमः ।

१—'द्वन्द्वे घि' इति, अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे इति शास्त्राभ्यां कृमिपक्षिमृगादीनि, कृमिमृगपक्ष्यादीनि इति चोभयं साधु । यदि मृगाणां पक्ष्याद्यपेक्षयाऽभ्यर्हितत्वमभिप्रेयते तदा मृगशब्देन पूर्वं निपतितव्यम् । २—उत्तमबलमित्येव न्यासः साधुः । सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति समासः । उत्तमशब्द उपसर्जनमिति तस्य पूर्वनिपात उचितः । ३—वर्णानामानुपूर्व्येणेति वचनाद्विप्रक्षत्रविट्शूद्राणामित्येवं न्यासो युक्तः । शूद्रादिक्रमेणाभिधानं वधस्यामङ्गलत्वादिति कुल्लूकभट्टः । ४—अल्पाच्तरमिति शूलशब्दस्य पूर्वनिपातः परशोश्च परनिपातः । शेषेऽनियमः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति भृतशब्दस्य निष्ठान्तस्य परनिपातः । ५—प्रहरणार्थेभ्य इत्यस्युद्यत इति स्यात् । आहिताग्न्यादित्वाद्वा निष्ठायाः परनिपात इति पक्षे उद्यतासिरित्यपि साधु । ६—पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेनेति समासे एकशब्दस्योपसर्जनसंज्ञायां पूर्वनिपाते एकमुहूर्त्तमिति साधु स्यात् । ७—भसितं भस्मेत्यनर्थान्तरम् । शरीरे भसितं येषां ते शरीरभसिता इति वाच्याः स्युः । सप्तमीविशेषणे बहुव्रीहाविति सप्तम्यन्तस्य

पूर्वनिपातौचित्यात् । भसितोपलक्षितं भसितोपलिप्तं वा शरीरं येषां ते भसितशरीरा इत्येवं मध्यमपदलोपिसमासाश्रयणे तु न दोषः । ८—निष्ठेति बहुव्रीहौ निष्ठायाः पूर्वनिपातविधानात् परिचितस्वलाभहानय इत्येवं न्यासः कार्यः । ९—'कालाः परिमाणिना' इत्येकं वर्जयित्वा दुर्लभ-स्त्रिपदस्तत्पुरुष इति कठिनस्य स्वपरिश्रमस्य, कठिनस्य स्वस्य परिश्रम-स्येति वा वक्तव्यम् ।

---

## पुंवद्भावाधिकारः षष्ठः ।

१—स्त्रियाः पुंवद्भाषितपुंस्कादिति पुंवद्भावे प्रथमपरीक्षामिति साधु । २—तृतीया प्रकृतिः षण्ढः क्लीबः षण्डो नपुंसकमित्यमरे पाठः । मूलेऽ-समासोक्तिः । समासे तु तृतीयप्रकृतिरित्येवेति भानुजिदीक्षितः । न कोप-धाया इति नेति योगविभागान्न पुंवद्भाव इति केचित् । क्षीरस्वाम्यपि मूलेऽसमासं मन्यते यदाह—स्त्रीपुंसाभ्यां तृतीया प्रकृतिः । लिङ्गान्तर-त्वादिति । ३—भक्तिशब्दस्य प्रियादिषु पाठात्पूर्वपदस्य पुंवद्भावो दुर्घटः । तेन दृढाभक्तिरित्येव साधु । अथवा दृढमिति सामान्योपक्रमा-न्नपुंसकम् । तस्य भक्तिशब्देन समासे दृढभक्तिरिति साधु । ४—अत्र स्त्रियाः पुंवद् इत्यनेनैव पुंवद्भावे दर्शनीयमानिनीत्येव साधु । ५—आक-डारसूत्रभाष्ये संज्ञाकृदन्ततद्धितान्तसमस्तसर्वनामसंख्यातिरिक्तः शब्दो गुणवचनशब्देनोक्तः । तेन नात्र कश्चिद्दोषः । द्वारवतीति तद्धितान्तम् । तद्धितान्तस्यागुणवचनत्वात् । ६—अन्यस्यां मनोऽस्येत्यन्यमनाः । सर्व-नाम्नो वृत्तिमात्रे पुंवद्भाव इति टाबन्तस्यान्याशब्दस्य पुंवद्भावः । ७—वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे इति पुंवद्भावप्रतिषेधस्य पुंवत्कर्मधारयजातीयदेशीयेष्विति प्रतिषेधाद् ऐश्वरीसृष्टेरिति दुष्टम् । पुंवद्भावे सति ऐश्वरसृष्टेरिति भाव्यम् । ऐश्वर्याः सृष्टेरित्यसमासोक्तिस्तु भव्या । ८—प्राचीदिश इत्यत्र पुंवत्कर्मधारयेत्यादिना पुंवत्त्वं दुर्वारम् । तेन प्राग्दिश इत्येव साधु । ९—द्वन्द्वेन क्वचित्पुंवद्भावः शिष्टैः शास्त्रेणेति

वैश्याराजन्याविप्रास्त्वित्येवं साधूक्तं स्यादिति पाणिनीयाः। १०—तामसी बुद्धिरस्येति बहुव्रीहिः। वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधः। ११—कर्त्रीत्वमिति तु युज्यते। कृदन्तस्यागुणवचनत्वादित्युक्तमधस्तात्। १२—परकाष्ठामित्येव साधु। परां काष्ठामिति वा। १३—पुंवत्कर्मधारयेत्यादिना पुंवद्भावे व्यवस्थापकसभाया इत्येव साधु। १४—सरसरसवत्सुरसरस्वतीत्याद्येव निर्दोषं पुंवद्भावस्य दुर्वारत्वात्। १५—परविद्यात्वमित्येव। आवश्यकः पुंवद्भावः। १६—दैवसम्पत्सम्पादन इत्येवं न्यसनीयम्। पुंवद्भावस्य दुष्परिहरत्वात्। दैव्याः सम्पदः सम्पादन इति व्यासेन वा वक्तव्यम्।

---

## पूर्वपदह्रस्वदीर्घाधिकारः सप्तमः।

१—खित्यनव्ययस्येति पूर्वपदह्रस्वत्वे नारिंमन्य इत्येव साधु। २—ङ्यापोः संज्ञाछन्दसोर्बहुलमिति संज्ञाया गङ्गाया ह्रस्वत्वे गङ्गदत्त इति साधु। बहुलग्रहणात्क्वचिद् गङ्गादत्त इत्यपि। ३—घरूप कल्पेत्यादिना ङ्यन्तस्यानेकाचो ब्राह्मणीशब्दस्य ह्रस्वत्वे ब्राह्मणित्रेत्येव शब्दः ४—ङ्यापोः संज्ञेति ह्रस्वत्वे वैदेहि बन्धोरिति साधु। ५—नहिवृतिवृषिव्यधीत्यादिना पूर्वपदस्य दीर्घत्वे मर्माविध इत्येव साधु। ६—मित्रे चर्षावित्यृषावभिधेये विश्वशब्दस्य पूर्वपदस्य दीर्घो भवति। अयं तु कश्चिन्माणवकोऽनृषिः, तेन विश्वमित्र इत्येव साधु। ७—इकः काशे इत्यनेन दीर्घे प्रतीकाश इति साधुः। ८—अन्येषामपि दृश्यत इति शाक्षाशक्षि, मुष्टीमुष्टि, बाहूबाहवि इति रूपाणि साधूनि। तत्र बाहूबाहवीत्यत्र इच् कर्मव्यतिहारे इति इचि सत्योर्गुण इति गुणे 'बाहूबाहवि' इति शुद्धं रूपम्। ९—परीमाणमित्यत्र ल्युडन्ते शब्दे पूर्वपदस्योपसर्गस्य दीर्घो दुर्लभः। १०—उपसर्गे घञ्यमनुष्ये बहुलमित्युपसर्गस्य दीर्घत्वे प्रतीहार इति साधु। क्वचित् प्रतिहार इत्यपि, बहुलग्रहणात्।

## समासनपुंसकताऽधिकारोऽष्टमः ।

१—सभा राजामनुष्यपूर्वेति समासस्य नपुंसकत्वे नृपतिसभम् इति साधु । २—छाया बाहुल्ये इति च्छायान्तस्तत्पुरुषो नपुंसकं भवतीति इक्षुच्छायनिषादिन्य इत्येव साधु । अत्र सूत्रे पूर्वपदार्थस्य बाहुल्यमभिप्रेयते । ३—उपज्ञोपक्रमं तदाद्याचिख्यासायामिति नपुंसकत्वे मदुपज्ञमित्येव साधु । सत्यपि तदादित्वे यदि तस्य विवक्षा नास्ति, तदा समासस्य नपुंसकता नेति न दोषः । भवति च सतोप्यविवक्षा यथाऽनुदरा कन्यका । ४—अशाला चेत्यनेन सभान्तस्य तत्पुरुषस्य नपुंसकतायां ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वे स्त्रीसभमिति निरवद्यम् । ५—सान्द्रे तरुच्छाये इति वक्तव्यम् । अत्र पूर्वपदार्थस्य बाहुल्यमिति छाया बाहुल्ये इत्यनेन प्रवर्तितव्यम् । ६—द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् इति समाहारद्वन्द्वे स नपुंसकमिति नेत्रश्रवणनासे इति वक्तव्यम् । ७—न दधिपयआदीनीति एकवद्भावनिषेधे उलूखलमुसले इति द्विवचनं प्रयोज्यम् । ८—येषां च विरोधः शाश्वतिक इत्येकवद्भावे स नपुंसकमिति नपुंसकत्वे च काकोलूकस्येत्येव साधु । ९—शशास्योर्णेति शशोर्णम् । स्थूणोर्णे नपुंसके च । गृहशशाभ्यां क्लीबे इति लिङ्गानुशासनमेतस्य साधुत्वे मानम् । १०—चञ्चुभिः सहिताश्चरणाश्चञ्चुचरणा इति शाकपार्थिवादित्वं कल्पनीयम् । अन्यथा प्राण्यङ्गत्वादेकवद्भावे चञ्चुचरणेनेति स्यात् ।

---

## समासाश्रयविधिपरिशेषाधिकारो नवमः ।

१—पेषंवासवाहनधिषु चेत्युदकस्योदभावे उदपेषमित्येव साधु । २—उदकस्योदः संज्ञायाम् ( ६।३।५७ ) । उत्तरपदस्य चेति वक्तव्यमित्युदकशब्दस्योदभावेऽच्छोदमित्येव साधु । ३—प्रकृत्याशिषीति सहशब्दः प्रकृत्या स्यादिति सहभर्तृकायै इति साधु । ४—मातृपित्र्यध्यापका इति साधु । न ह्ययमृकारान्तानां द्वन्द्वः । अध्यापकशब्दोऽत्रोत्तरपदम् ।

स च ऋकारान्तो न। तेनानङः प्रसङ्गो न। ५—द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योरिति आत्वे ऽष्टात्रिंशतमित्येव साधु। ६—गवि च युक्त इति वक्तव्यादष्टन आत्वेऽष्टागवेनेति वक्तव्यम्। ७—प्रस्कण्वहरिश्चन्द्रावृषी इत्यृषावभिधेये सुडागमो निपातितः। तेनानृषौ तु हरिचन्द्र इत्येव साधु। ८—प्रकृत्याशिषीत्यत्र अगोवत्सहलेष्वित्युक्तम्। तेन सवत्साय सहलायेत्यत्र प्रकृतिभावो नावश्यकः। वोपसर्जनस्येति पाक्षिकः सहस्य सादेशः। ९—सहपुत्रापि विद्यमानपुत्रापीत्यर्थः। भारवहने पुत्राणां गर्दभ्या सह तुल्य योगो न। तेन 'तेन सहेति तुल्ययोगे' इत्यनेन समासो न, अपि तु अनेकमन्यपदार्थे इत्यनेन। वोपसर्जनस्येत्यतुल्ययोगेपि विकल्पेन सहस्य सः। सहपुत्रा सपुत्रेति रूपद्वयम्। १०—ईषदर्थे (६।३।१०५) इति कोः कादेशः। तेन कामधुरं कालवणमित्युभयं साधु। ११—आन्महतः समानाधिकरणजातीययोरित्यात्वे महाबलेनेति वक्तव्यम्। १२—उक्षशब्द इत्येव साधु। सुब्लुकि सर्वनामस्थानं परं नास्तीत्युपधादीर्घस्याप्रसक्तिः। १३—प्रत्येकमित्येव साधु। एकमेकं प्रतीति प्रत्येकम्। वीप्सायामव्ययीभावः। नाव्ययीभावादतोऽम्त्वपञ्चम्या इति सुप अमादेशे प्रत्येकमिति रूपम्। १४—प्रतिगतः कशां प्रतिकशः प्रादिः समासः। प्रतिकशोऽश्वो यः कशां न गणयति। 'प्रतिष्कशश्च कशेः' इति शास्त्रेण प्रतिष्कश इति प्रतिपूर्वस्य कशेः पचाद्यजन्तस्य सुट् निपात्यते षत्वं च। प्रतिष्कशः पुरोयायी सहायो वोच्यते। तथा च श्रीरामायणे प्रयोगः त्वं मे भव प्रतिष्कश इति। १५—कोः कत्तत्पुरुषेऽचीति तत्पुरुषेऽयं विधिः। प्रकृते च बहुव्रीहिः। तेन दुर्लभोत्र कदादेशः। कुत्सिताचारा इत्येव वक्तव्यम्। १६—दिवो द्यावेति सूत्रेण देवताद्वन्द्वे 'द्यावा' इत्यादेशो विधीयते। तेन नात्र कश्चिद् दोषः। १७—तिस्र ऋचो यस्मिंस्तत्तृचम्। ऋचि त्रेरुत्तरपदादिलोपश्छन्दसीति वक्तव्यात् त्रेः सम्प्रसारणमुत्तरपदादिलोपश्च। अयं च छन्दसि विधिरिति लोके त्र्यृचमित्यपि साधु। १८—लुम्पेदवश्यमः कृत्ये इत्यस्याप्राप्तेरवश्यमवश्यमित्येव साधु। १९—नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् इत्येकशेषस्य

दुर्वारत्वात्तेष्विति वक्तव्यम् । ताश्च तानि चेति तानि, तेषु ।
२०—महल्लज्जास्पदम् इत्यत्र लज्जा महत्त्वेन विशिष्यते, नास्पदम् । तेन समास एवायम् । समासे च आन्महत इति विधिर्दुर्वारः । तेन महालज्जास्पदमित्येव साधु । २१—ह्नत्ते चेति वार्तिकेनादस आत्वे सवर्णदीर्घे चामूदृक्षा इत्यवदातम् । २२—संख्याविसायपूर्वस्याहस्याहन्नन्यतरस्यां ङाविति सायाह्नि सायाहनि, सायाह्ने इति त्रैरूप्यं भवति । २३—'श्वशुरः श्वश्रूः' इत्येकशेषे श्वशुराविन्त्येव वक्तव्यम् । २४—रामकान्तेत्यादिस्तत्पुरुषः । प्रतिबिम्बवचनः प्रतीकशब्दो नपुंसकम् । तस्माद्रामकान्ताप्रतीकमित्येत्र निर्दोषं स्यात् । २५—महदर्थस्य गौणत्वाद् आन्महत इत्यात्वं न । तेन महद्भूत इति साधु । २६—ग्रीवेत्यादि चरकवचनम् । प्राण्यङ्गत्वादेकवद्भावे प्राप्ते नासिकास्तनयोर्ध्माधेटोरिति निर्देशादनित्यताज्ञापनाद् यथास्थितं साधु । २७—अल्पाच्तरस्य पूर्वनिपाते प्राप्ते लक्षणहेत्वोः क्रियाया इत्यनित्यत्वज्ञापनाद् गर्भधारणपोषाभ्यामित्यपि साधु । २८—मध्यन्दिनमित्येकदेशि समासः । मध्यं दिनस्येति मध्यन्दिनम् । सर्वोऽप्येकदेशः कालेन समस्यते । संख्याविसायेति ज्ञापकस्य सामान्यापेक्षत्वात् । पूर्वपदस्य मान्तत्वं पृषोदरादित्वात् । २९—द्वौ पक्षौ परौ यत्र स द्वापरः । पृषोदरादित्वादात्वम् । ३०—देवासुराणां कादाचित्को विरोध इति येषां च विरोधः शाश्वतिक इत्यनेनैकवद्भावो नेति सर्वं सुस्थम् ।३१—मन्दं मन्दमिति प्रकारे गुणवचनस्येति द्विरुक्तिः । कर्मधारयवदुत्तरेष्विति सुब्लुकि मन्दमन्दमिति स्यात् । अत्र कथंचिद्वीप्सायामेव द्विरुक्तिर्निर्वाह्येति मल्लिनाथः । मन्दं मन्दमित्यत्राप्रकारार्थे द्विर्भाव इति च काव्यालङ्कारसूत्रवृत्तौ वामनः । ३२—अर्थे विभाषेति विभाषा दुगागमेऽन्यदर्थमन्यार्थमिति चोभयं साधु । ३३—अषष्ठ्यतृतीयास्थस्यान्यस्य दुग् इत्यादिना दुगागमेऽन्यदाशिषमिति ब्रूयात् । अन्याऽऽशीः, अन्यदाशीः, ताम् । ३४—ईषदर्थे इति कोः कादेशे साधु । ३५—ज्योतिर्जनपदरात्रिनाभिनामगोत्रेत्यादिना समानस्य सभावे सगोत्र इत्येव साधु । ३६—निर्गतानि त्रिंशत इति निस्त्रिंशानि । संख्यायास्तत्पुरुषस्येति डचि

समासान्ते टिलोपे च निस्त्रिंशानीति साधु। संख्ययाऽव्ययासन्नादूराधिक-संख्याः संख्येये इत्यनेन समासे बहुव्रीहौ संख्येये डजबहुगणादिति डचि ति विंशतेर्डिति इति तिशब्दस्य लोपे उपविंशानीति साधु। विंशतेः समीपे यानि वर्तन्ते तानि उपविंशानि। ३७—वयसाऽधिकपञ्चविंशा इति न्यासो युक्तः। अधिकाः पञ्चविंशतेः (वर्षेभ्यः) इति विग्रहः। अथवाऽधिकपञ्चविंशवर्षा इत्येवं न्यसनीयम्। ३८—महामहतीमित्यस्य स्थाने महत्या महतीमित्येव निर्दुष्टं वचः। सामानाधिकरण्यविरहाद् आन्महत इति विधेरप्रसङ्गः। ३९—स्थाने स्थाने इति वक्तव्यम्। वीप्सायां च समासविधायकं नेति व्यासेनैव स्थेयम्। प्रकारे गुणवचन-स्येति गुणवचनस्य प्रकारेऽर्थे द्विरुक्तेः प्रकृते गुणवचनाभावात् प्रकारार्थत्वा-भावाच्च वीप्सायामेव द्विरुक्तिः। तेन कर्मधारयवदुत्तरेष्विति विधे-रप्यप्रसङ्गः। ४०—यथेष्टानित्यपशब्दः, यथेष्टमिति च। यथाऽसादृश्य इत्यनेनाव्ययीभावे यथेष्टमित्येव साधु। ४१—उदकस्योदभावोऽत्र दुर्लभ इत्युदकशून्यत्वादिति वक्तव्यम्। ४२—जाया च पतिश्चेति दम्पती। जायाश्च पतयश्चेति दम्पतयः। तेषां दम्पतीनां वर्ग इति दम्पतिवर्गः। अत्र पतिशब्द उत्तरपदे दीर्घो दुर्लभ इति न परोक्षं प्रेक्षावताम्। ४३—यापिताशेषरात्रेर्मे इति वक्तव्यम्। अत्राच्समासान्तस्य दौर्लभ्याद् यापिताशेषरात्रस्येत्येतत् स्खलनमेवेति वृद्धाः।

---

## समासोक्त्यधिकारो दशमः।

१—नान्यपीडनमित्यत्र नञ्शब्दः प्रसज्यप्रतिषेधे नेष्यते, वाक्यभे-प्रसङ्गात्। तेन पर्युदासेऽर्थे वर्तमानस्य तस्य समासेऽनन्यपीडनमिति भवितव्यम्। २—शास्त्राण्यनभ्यस्यत इत्येव निर्दुष्टो न्यासः। यथा-स्थितम् असमासे तु नञो जायत इति क्रियया योगः स्याद् विवक्षितं च विपरीयात्। ३—आसन्नपञ्चानि वर्षसहस्राणीति न्यास एव शोभनः। अन्यथा-समासोक्तिर्वरम्। ४—नञ्समासेनाऽधारयित्वेति तु युज्यते।

ऽस्तिनाऽध्याहृतया क्रियया योगः स्यात्। अनिष्टार्थश्च प्रसज्येत। ५—अतटो भृगुर्भवति। प्रपातोऽपि। प्रकृते तु प्रपतनं प्रपात इति क्रियाशब्दः। तेन अतटात् प्रपातमिति साधु स्यात्। अथवाऽविद्यमानतटमिति शुद्धयौगिकत्वमङ्गीकृत्य प्रपातविशेषणमभ्युपेयम्। ६—स्युत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥ इत्यमरादुत्तरपद एवामी श्रेष्ठार्थस्य वाचकाः। तेन नृपुङ्गवा इति वक्तव्यम्। श्रीरामायणे त्वनेकत्र स्वातन्त्र्येण प्रयोगः। तद्यथा—प्लवङ्गमानामृषभेण युद्धे (६।५९।१) इत्यादि। ७—भिन्ना विषया येषां ते भिन्नविषया ग्रन्थाः। प्रकारे गुणवचनस्येत्यनेन द्विरुक्तौ तु भिन्नप्रकाराः किञ्चिद्भिन्ना इत्यर्थः प्रतिपद्येत। बहुव्रीहिरेवात्रेष्टार्थसमर्पको न तु कर्मधारयः।

---

## व्यासोक्त्यधिकार एकादशः।

१—स्वस्य समाजस्य च पत्तनस्य च विश्वस्य चाप्यभ्युदयं कामयन्ते सन्त इत्येवं न्यसनीयम्। द्वन्द्वे च सर्वनामसंज्ञानिषेधाद् विश्वेषामिति प्रामादिकम्। २—आयुः सहस्रं वर्षाण्यासीदित्येवं व्यासेन वक्तव्यम्। विधेयेन समासो नेति स्मरणीयम्। ३—मनोहरो नाम नापित इत्येवं व्यासोक्तिरेव साध्वी। विशेषणं विशेष्येण बहुलमित्यत्र बहुलग्रहणादत्र समानाधिकरणसमासो न। अर्जुनः कार्तवीर्य इतिवत्। ४—सम्मतशब्द इष्टापरपर्यायः। मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमानेऽत्र क्तः। क्तेन च पूजायामिति षष्ठीसमासनिषेधात्सर्वलोकस्य सम्मत इति वाच्यम्। ५—समासे सुप्तार्थो गुणीभूत इत्युद्भूततायै व्यासेन वक्तव्यम्। सुप्तां भावनाम् इति। ६—दीनैः सहैकतामिति पृथक् पदत्वमाश्रयणीयम्। अविहितश्चायं सहार्थे तृतीयया समासः शास्त्रेणेति नादरणीयः। ७—प्रत्येकं प्राधान्यख्यापनाय पाद्यम् अर्घ्यमाचमनीयमिति पृथक्त्वमाश्रयणीयम्। तथैव त्रैविध्यं जलस्याभिव्यक्तं भवति। विशेषणसमासे त्वेकस्य विशेषणत्वेऽपरस्य विशेष्यत्वं स्यात्, त्रैविध्यं च विहतं स्यात्। ८—प्रमीतपतिपत्नीकाविति

प्रत्येकं स्त्रीपुंसाभ्यामभिसम्बध्यते। तेनार्थसङ्गतिः स्फुटा। पतिश्च पत्नी चेति पतिपत्न्यौ। प्रमीते पतिपत्न्यौ ययोः तौ प्रमीतपतिपत्नीकौ। नहि स्त्री प्रमीतपतिपत्नीका भवति न वा पुमान् प्रमीतपतिपत्नीको भवतीत्युभयत्र विशेषणानुपपत्तिः। तेन प्रमीतपतिका स्त्री प्रमीतपत्नीकश्च पुमान् इत्येवं व्यासेन वक्तव्यम्। ९—यस्याभिमुखमिति पृथक्पदत्वेन वक्तव्यम्। नहि तदीयमित्येतद्गतस्तच्छब्दः समासेन्तर्गतं यच्छब्दं परामृशेत्। सर्वनाम्नां प्रधानपरामर्शित्वात्। १०—खल्वाटो निर्धन इत्येवं वाक्यविन्यासः कार्यः। निर्धन इति विधेयम्। ११—लब्धप्रचाराणि मतानीत्येवं पृथक्त्वेन प्रयोज्यम्। १२—यावदाभूतसंप्लवमित्यस्य स्थाने यावद् भूतसम्प्लवमिति आभूतसंप्लवमिति वा वक्तव्यम्। आङाऽऽव्ययीभावे यावता नार्थः, सति च यावति समासेन नार्थः। १३—प्राचीनाया नवीनायाश्च परिपाट्या इति विग्रहेणोक्ते प्राचीननवीनयोः प्राधान्यं परिस्फुरति। तदेव चाभिप्रैति वक्ता। १४—दिक्संख्ये संज्ञायम् इति संख्यावचनस्य समानाधिकरणेन सुबन्तेन संज्ञायामेव समासो विधीयते। तेनान्यत्र समासोऽवैधः। तस्माच्छतेन पुरुषैरिति वक्तव्यम्। १५—वात्सल्यातिशयलालिताङ्गयष्टिकस्य तनयस्य यमसदनस्यातिथींभवने इत्येवं वक्तव्यम्। विशेषणं हि परार्थत्वादुपकारकं गौणं भवति। समासे चोत्तरपदेन संसृष्टं सन्नितरां तथेति केवलं वाक्ये पृथक्प्रयोगेणं किञ्चिदपरतन्त्रं भवतीति तथा प्रयोग एषणीयः। अतिथीभवन इत्यत्राभूततद्भावे च्विरपेक्ष्यत इति स उच्चारितः। १६—परचक्षुषोर्धूलिनिक्षेप इत्येवं वाक्यं निर्मेयम्। सप्तमीसमासस्य दौर्लभ्यात्। सप्तमीति योगविभागात्समास इति तु शिष्टप्रयोगसमर्थनायागतिकस्य गतिः। १७—एकदिनपूर्वमिति सर्वथा दुर्घटोऽयं समासः। एकदिनं पूर्वं यस्मिन्कर्मणि तद्यथा तथेति विग्रहे तु नार्थो विवक्षितः स्फुटति। यत्सत्यं प्रचरद्भाषाच्छायैषा भवति, न तु संस्कृतम्। संस्कृतेऽयमर्थो भङ्ग्यन्तरेणोच्यते। तत्र एकाहे, अस्मात्पूर्वस्मिन्दिने इति वा भङ्ग्यन्तरम्। १८—अहं ते चरणौ शरणमापन्न इत्येवं व्यासेन वक्तव्यम्। कर्मधारयसमासे तु शरणचरणाविति स्यात्। विशेष-

णस्य पूर्वनिपातात्। मयूरव्यंसकादित्वाद्वा समाधेयम्। चरणावेव शरणमिति चरणशरणम्। तथाप्यसमर्थसमासोऽयं भवति। चरणार्थो हि युष्मदर्थेनाभिसम्बद्ध इति सापेक्षः। गत्यन्तरं च नास्तीति चरणौ शरणमित्येव ब्रूयात्। १९—संस्कृतेऽधीतिनामित्येव साधु। अधीतमेभिरित्यधीतिनः। क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति संस्कृते इत्यत्र सप्तमी। तस्याः समासो दुर्लभ ऋते योगविभागात्। स चागतिकगतिरित्यसकृदवोचाम। २०—अज्ञानमेघेनावृते वेदभानावित्येवं व्यासेन वक्तव्यम्। यथास्थिते तु समासार्थो न परिस्फुटः। अज्ञानमेघावृतत्वं विधातुमिच्छामः। विधेयं च न समस्यते। विशेषणत्वे पुनर्भावलक्षणसप्तमीत्वं न प्रतीतिमेति। २१—वदनं कलुषं चकारेत्येवं विग्रहेण वक्तव्यम्। कलुषमिति विधेयम्। समानाधिकरणसमासे तु कालुष्यविशिष्टं पितुर्वदनमिति पुत्रेण तत्र किंचक्रे। २२—यो विप्रोऽभिवादितः (सन्) इत्येवं वक्तव्यम्। उक्तोऽसकृद्धेतुः। २३—दिक्संख्ये संज्ञायामिति नियमेन संज्ञायामेव संख्या समानाधिकरणेन सुबन्तेन समस्यते। तेन सप्तविंशत्या मौक्तिकैरिति व्यासोक्तिः साध्वी।

---

## समासान्ताधिकारो द्वादशः।

१—'उरःप्रभृतिभ्यः कप्' इति नित्ये कपि समासान्ते व्यूढोरस्क इत्येव साधु। २—शोभनो राजाऽत्रेति सुराजानः। राजाहः सखिभ्यष्टच् इति तु तत्पुरुषसमास एव विधिः। ३—किमः क्षेपे इति समासान्तनिषेधात् किंसखायमिति साधु। कुत्सितः सखा किंसखा। ४—गोरतद्धितलुकीति टचि नवप्रसूतगव्य इत्येव साधु। ५—अर्थान्नञः इति गणसूत्रेण कपि समासान्तेऽनर्थक इत्येव भवति। अनर्थं इति तु तत्पुरुषेऽनवद्यम्। ६—सुप्रातसुश्वसुदिवेत्यादिना सुप्रातमिति बहुव्रीहौ निपातितम्। तेन तत्पुरुषे दुःसमाधानम्। ७—अहः सर्वैकदेशेत्यादिसूत्रे संख्याव्ययादेरित्यनुवर्तते, तेनाच्समासान्त इति दिवारात्रमित्यदुष्टम्। ८—नाडीतन्त्र्योः

स्वाङ्गे इति स्वाङ्गादन्यत्र नद्यृतश्चेति विहितः कब्दुर्वारः । तेन तन्त्रीका वीणेति पाणिनीयाः । ९—सुपथी नगरीत्यत्र इनः स्त्रियामिति विहितः कब्दुर्वारः । न पूजनादिति निषेधः स्यादिति मा स्म शङ्किष्ठाः, षचः प्राचीनानामेव स निषेधः । कप् प्रत्ययश्चायं तदुत्तरः । तस्मात्समासान्त-विधेरनित्यत्वादिति कथंचित्समाधेयम् । १०—अचतुरविचतुरसुचतुरेत्या-दिनाऽचतुरादयोऽजन्ता निपात्यन्ते । तेन ऋक्सामे इत्येव साधु । ११—किमः क्षेप इति समासान्तनिषेधात्किंगौरिति साधु । कुत्सितो गौः किंगौः । संश्चासौ गौश्चेति सद्गवः । गोरतद्धितलुकीति टच् । १२—समा-सान्ताप्रसङ्गादवमूर्धा इति वक्तव्यम् । द्वित्रिभ्यां परस्य मूर्ध्नः षविधिः । १३—प्रकटितानेकपरिपाटीकानां नटीनर्तकानामित्येवं न्यासो निर्दोषः । नद्यृतश्चेति कप् । निष्ठेति बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातः । १४—राजाहः-सखिभ्यष्टच् इति टचि कतिपयाहवास इत्येव न्याय्यम् । कतिपयाहान् वास इति कतिपयाहवास इत्यत्यन्तसंयोगे चेति द्वितीयासमासः । १५—शोभना माधुरी यस्याः सा सुमाधुरीका । नद्यृतश्चेति कप् । १६—अवसमन्धेभ्य-स्तमस इत्यन्धतमसमिति तु युक्तम् । १७—शोभना गन्धा(द्रव्याणि)अत्रेति सुगन्ध ( आपणः ) । गन्धस्येदुत्पूतिसुसुरभिभ्य इतीत्वं तु गन्धस्यैकान्तत्व एव भवति । एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थ इति श्री-दीक्षितः । तेन सुगन्धि पुष्पं सलिलं च । सुगन्धिर्वायुः । १८—पथिप्रदर्शक इत्येव साधु । ऋक्पूरब्धूपथामित्यः समासान्तः समासस्यान्तावयवो विधीयते पूर्वपदस्य पथिन्शब्दस्य तु न । १९—पञ्च वा षड्वेति पञ्चषाः । तान् पञ्चषान् । संख्ययाव्ययासन्नेत्यादिना समासः । बहुव्रीहौ संख्येये डजबहुगणात् इति डचि पञ्चषा इति रूपं निष्पद्यते । २०—वाक् च मनश्चेति वाङ्मनसे तयोः, वाङ्मनसयोः । अचतुरविचतुरेत्यादिनाऽजन्तत्व-निपातनात् । २१—भ्रातृत्वमल्पमत्रेति भ्रातृगन्धिः । अल्पाख्यायामितीकारः समासान्तः स्यादिति पाणिनीयाः । २२—अहश्च रात्रिश्चेत्यहोरात्रः । अहः सर्वैकदेशेत्यादिनाच्समासान्तेन भाव्यम् । रात्राह्नाहाः पुंसीति समा-हारद्वन्द्वस्यापि पुंस्त्वम् । २३—अन्तर्बहिर्भ्यां च लोम्न इत्यपि समासान्ते-

ऽन्तर्लोम इत्येव साधु। २४—द्वित्रिभ्यां ष मूर्ध्न इति षप्रत्यये टिलोपे स्वरदूषणत्रिमूर्धा इति भवितव्यम्। द्वित्रिभ्यां पाद्दन्मूर्धसु इति स्वरसूत्रे मूर्धसु इति निर्देशात्समासान्तोऽनित्यः। अन्यथा प्रक्रमाभेदाय मूर्ध्स्वित्येव वदेत्। २५—नित्यमसिच् प्रजामेधयोरित्यसिच् समासान्तो नञ्दुःसुपूर्वादेव मेधाशब्दाद्भवति नान्यपूर्वात्, तेन साधारणमेधसामिति प्रामादिकम्। अस्वरितत्वादेव अन्यतरस्यांग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो विधानार्थम्। तेनाल्पमेधस इति सिध्यतीति वृत्तिकारः। तथा च भारते प्रयोगः—श्रोत्रियस्येव ते राजन्मन्दकस्याल्पमेधसः। अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी (वन० ६५।१९)॥ साधारणमेधसाम् इत्यस्य साधुत्वे तु शिष्टानुग्रहो नास्तीति नेदं साधुत्वमवगाहते। २६—बहुव्रीहौ समास एव उदादिभ्यो गन्धस्येकारोऽन्तावयवो विधीयते, न तु तत्पुरुषे। तेन प्रकृते पूतिगन्ध इत्येव साधु। पूतिश्चासौ गन्धश्चेति विग्रहः। २७—गन्धस्येदुत्पूतीत्यादिसूत्रे शोभनशब्दस्यादर्शनात्ततः परस्य गन्धस्येकारोऽन्तावयवो न शक्नोति भवितुम्। तेन शोभनगन्धेनेत्येव प्रयोगार्हम्। २८—निश्चितं श्रेयो निःश्रेयसम्। इदं च अचतुरविचतुरेत्यादिनाच्प्रत्ययान्तं निपातितम्। तेन सप्तम्यां निःश्रेयसे इति स्यात्। २९—अचतुरविचतुरेत्यादिना सूत्रेण पुरुषायुषमित्यजन्तं निपातितम्, तेन पुरुषायुरित्यसाध्वेव। ३०—न पूजनात् इति समासान्तनिषेधे 'सुपथा' इति तृतीयान्तं स्यात्। ३१—अचतुरविचतुरेत्यादिना रात्रिन्दिवमित्यच्समासान्तं निपातितम्। तेन रात्रिन्दिवेति प्रमादः। ३२—अदन्तोपि दिवशब्दोस्ति दिवौकसि दर्शनात्। तेन षष्ठ्यन्तेन सह पारेमध्ये षष्ठ्या वेति समासः। नाव्ययीभावादतोम्त्वपञ्चम्य। इति सुपोऽमादेशे मध्येदिवमिति साधु। ३३—समेधितमेधा इत्येव। असिचोऽप्रसङ्गात्। ३४—आगामिवर्तमाने अहनी यस्याष्टप्रहरस्येति बहुव्रीहिः। तेन तत्पुरुषस्य राजाहः सखिभ्यष्टच् इति विधीयमानष्टच्समासान्तो नेह प्रसज्यते। ३५—वरतनु इत्यत्र यदि नदीसंज्ञकस्तनूशब्दः। अम्बार्थनद्योर्ह्रस्व इति ह्रस्वः। नद्य, तश्चेति कप् च प्राप्नोति।

परत्वात्कप् स्यात्। ह्रस्वोकारान्ते तनुशब्दे च ह्रस्वस्य गुण इति गुणे 'वरतनो' इति स्यात्। संज्ञापूर्वकविधेरनित्यत्वान्न भवतीति यथास्थितं साधु। ३६—स्वस्य राजा स्वराज इति भवितव्यम्। राजाहःसखिभ्यष्टच्। ३७—अह्नोऽह्न एतेभ्य इति सर्वाह्णमिति युक्तम्। अह्नोऽदन्तादिति णत्वम्। ३८—'बहुगणवतुडति संख्या' इति गणशब्दः संख्या। गणानां रात्रीणां समाहारो गणरात्रम्। अहःसर्वैकदेशेत्यादिनाऽच्समासान्तः। संख्यापूर्वं रात्रं क्लीबमिति क्लीबता। ३९—शान्तिश्च सम्पच्चेति समाहारे द्वन्द्वाच्चुदुषहान्तात्समाहारे इति टचि शान्तिसम्पदम् इति रूपम्। पश्चाद् बहुव्रीहिः। सुकर्मार्जितं शान्तिसम्पदं येन तत्। अतो नेह किञ्चिद्नवदातम्। ४०—संख्यासुपूर्वस्य पादशब्दस्य बहुव्रीहावन्तलोपो विधीयते। तेन प्रकृते एकपादः, एकः पाद इति वा वक्तव्यम्। ४१—अवसमन्धेभ्यस्तमस इत्यचि समासान्तेऽज्ञानान्धतमसे इत्येव साधु। ४२—अर्धरात्रो गत इत्येवं न्यसनीयम्। अहः सर्वैकदेशेत्यादिनाऽच्समासान्तः। रात्राह्नाहाः पुंसीति पुंस्त्वम्। ४३—ऋक्पूरब्धूःपथामानक्षे इत्यकारे समासान्ते स्त्रियां टापि वाजिधुरामिति वक्तव्यम्॥

---

## अथ लिङ्गविवेचनम्।

१—यद्यपि वा पुंसि पद्ममित्यमरः पाक्षिकं पुंस्त्वमभ्यनुजानाति तथापि पुंस्त्वे कविभिरप्रयुक्तत्वादालङ्कारिकाणां चासम्मतत्वात्पद्म इत्यप्रयोग एव। २—वेशन्तः पल्वं चाल्पसर इत्यमरात्पल्वलशब्दो नपुंसकम्। ३—पुंसि संज्ञायां घः प्रायेणेति घान्त आकरशब्दः पुंसि व्युत्पादितः। समस्तकार्याणामाकर इति षष्ठीसमासोऽयं न बहुव्रीहिः। तेन समस्तकार्याकर इत्येव ब्रूयात्। ४—आजिः स्त्रियाम् इति लिङ्गानुशासनात् महतीयमाजिरिति वक्तव्यम्। ५—अथास्त्रियौ धनुश्चापावित्यमराद्धनुः शब्दः क्लीबे पुंसि च। तेनाऽयमिति सर्वनाम्ना निर्देशो नानुपपन्नः। तूणीरशब्दस्तु नित्यं पुमान्। तूणोपासङ्गतूणीरनिषङ्गा

इत्यमरः। तेन तूणीरः क्व निहित इति वक्तव्यम्। ६—समाश्रयशब्द एरच् इत्यजन्तः। घाजन्तश्चेति लिङ्गानुशासनात्पुंसि प्रयोगो युक्तः। समाश्रयोऽसीति वक्तव्यम्। ७—समित्याज़िसमिद्युध इति स्त्रीलिङ्गो युच्छब्दः। तेन अतीतायां महायुधीत्येवं वक्तव्यम्। ८—सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगा इत्यमरे कलिः पुंसि पठितः। तेन पुराणोऽयं कलिः। नैष शक्यः शमयितुमित्येवं विपरिणमनीयम्। ९—ग्रन्थिर्ना पर्वपरुषी इत्यमराद्ग्रन्थिशब्दः पुमान्। १०—नीवृज्जनपदौ देशे इति जनपदशब्देन सहोक्तौ नीवृच्छब्दः पुमान्। तेन धन्यधान्यसमृद्धे स्मिन्निति वक्तव्यम्। ११—द्वौ परौ द्वयोः। भुजबाहू प्रवेष्टो दोरित्यमराद्बाहुःस्त्रियामपि। तेन सर्वमनवद्यम्। १२—इषुबाहू स्त्रियां चेति लिङ्गानुशासनाद् इषुशब्दः स्त्रीपुंसयोः। तेन इमा इति स्त्रीलिङ्गनिर्देशो न दुष्यति। छन्दसि च स्त्रीलिङ्गता विशेषतः प्रसिद्धा। तद्यथा-याश्च ते हस्त इषवः परा ता भगवो वप। ( यजुः १६।९।। )। १३—अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुल इत्यमराद् वितस्तिशब्दः पुंसि नियतः। तेन कियन्तो वितस्तय इत्येव साधु। १४—गिरां भाजनं भाजनानीति वा वक्तव्यम्। पदमास्पदं भाजनमित्यादयोऽजहल्लिङ्गाः शब्दा वाङ्मये प्रसिद्धाः। तेन लेखकप्रमाद एवायम्, न तु नाटककारस्य स्खलितम्। १५—आधारशब्दो घञन्तः। अवहाराधारावायानामुपसंख्यानम् इत्यौपसंख्यानिकोऽत्र घञ्। घञब्नन्त इति लिङ्गानुशासनादयं पुंसि नियतः। तेनाधारेत्यपशब्दः। १६—सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिष्वित्यमरान्न्याय्येऽर्थे सारशब्दो नपुंसकम्। तेन नेदं सारमिति ब्रूयात्। १७—केयूरमङ्गदं तुल्ये इत्यमरात्केयूरशब्दो नपुंकम्। तथा च पाठान्तरम्—केयूराणि न भूषयन्ति पुरुषमिति। १८—सम्मानशब्दो मन्यतेर्घञि व्युत्पद्यते। तेन सम्मान इत्येव साधु। १९—दुःखाश्रय इति पुंस्येकत्वे च साधु। उक्तोऽत्र हेतुः पूर्वत्र। २०—पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टका इत्यमरप्रामाण्यात्कण्टकमित्यपि साधु। पुंसि तु प्रायिकः प्रयोगः। २१—प्रकृत आम्रफलमभिप्रेतमित्याम्राणीति वक्तव्यम्। फले लुक् ( ४।३।१६३ )

इति विकारावयवप्रत्ययस्य मयटः फले लुकि लोकान्नपुंसकत्वम्। २२—सामान्ये नपुंसकमिति वचनाद् द्वे द्वे चत्वारि भवन्तीत्येव साधु। २३—देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक्प्रिये इत्यमराद्वरशब्दः श्रेष्ठवचनस्त्रिलिङ्गः। मयूरव्यंसकादित्वाद् विशेषणस्य परनिपातः। वरस्य त्रिलिङ्गत्वेपि पुंस्येवायं सरोवरशब्दः प्रयुज्यते लोकाश्रयत्वाल्लिङ्गस्य। २४—वल्मीकं पुन्नपुंसकम्। पुञ्जशब्दस्तु नियतं पुमान्। तथा चामरः—स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् इति। २५—सङ्घोद्घौ गणप्रशंसयोरिति सङ्घशब्दोऽप्प्रत्ययान्तः। घञन्त इति पुंसि रूढः। तेन बृहन्नयं राष्ट्रियः सङ्घ इति सर्वे एनं संनमन्तीत्येवं विपरिणमय्य वक्तव्यं सर्वदोषापहतये। २६—नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकैकशेषे व्याख्यातॄणीत्येव साधु। २७—पुमान् स्त्री नपुंसकमित्येवं प्रायो लिङ्गनिर्देशो दृश्यते। सूत्रकारप्रयोगश्च—स नपुंसकम् (२।४।१७)। भाष्यकारप्रयोगात्तु पुंस्यपि साधु। २८—प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिण इत्यमराज्जन्तुशब्दः पुमान्। तथा च सूत्रकारप्रयोगः—क्षुद्रजन्तव (२।४।८) इति। २९—क्लीबं मनाक्प्रिये इत्यमरोक्तेर्वरम् इति साधु। ३०—दुःखाकरैरित्येव साधु। उक्तोऽत्र हेतुः पूर्वत्र। ३१—नाड्यपजनोपपदानि व्रणाङ्गपदानीति पुंलिङ्गाधिकारे लिङ्गानुशासने पठितम्। तेन व्रणशब्दस्य केवलस्य पुन्नपुंसकत्वेपि नाडीव्रणस्य पुंस्त्वमेव। ३२—स्वरिति स्वर्गपर्यायवचनः। स्वरादिनिपातमव्ययमित्यव्ययसंज्ञा। क्रियाव्ययानां भेदकानि क्लीबानि भवन्तीति मनोहरम्, रहितमिति च वक्तव्यम्। ३३—मित्रशब्दो नपुंसकम्। अमित्रशब्दस्तु स्त्रीपुंसयोर्यथाविवक्षम् इति प्रकृते न किञ्चिदाक्षेप्यम्। ३४—दरी तु कन्दरो वा स्त्रीति कोषप्रामाण्यात्कन्दरशब्दः पुंस्त्रियोः। तेन इमे कन्दरा इमाः कन्दरा वेति वक्तव्यम्। ३५—स्थूणोर्णे नपुंसके चेति सूत्रेण केवले स्थूणोर्णे स्त्रियां क्लीबे च। गृहशशपूर्वे तु नियमेन नपुंसके। तथा च सूत्रम्—गृहशशाभ्यां क्लीबे। तेन जर्जरितं गृहस्थूणमित्येव साधु। ३६—गोचरसंचरस्यादिना गोचर-

शब्दो घान्तो निपातितः । घाजन्त इति चायं नैयत्येन पुमान् । गोचर इत्येव साधु । ३७—पिच्छबर्हे नपुंसके इत्यमराद्बर्हं नपुंसकम् । ३८—सन्तान इति समुपसृष्टात्तनोतेर्घञि रूपम् । तेन पुंस्त्वं व्यवस्थितम् । सन्तान इति कुलनामधेयम् अपत्येपि वर्तते । ३९—अन्तरालमिति नित्यं नपुंसकम् । अभ्यन्तरं त्वन्तरालमित्यमरः । ४०—नाड्यपजनोपपदानि व्रणाङ्गपदानीति लिङ्गानुशासनस्थसूत्रेण जनपदशब्दः पुमान् । ४१—सिद्धान्त इति पुंसि नियतम् । तथा चामरः—समौ सिद्धान्तराद्धान्ताविति । ४२—कुशलं क्षेममस्त्रियामित्यमरात्क्षेमशब्दः पुन्नपुंसकम् । तथाऽपि योगपूर्वोय भूत्यर्थे वर्तमानः प्रायः पुंसि दृष्ट इति योगक्षेमोऽवेक्षणीय इत्येव श्रेयः । ४३—स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियामित्यमरान्नरकशब्दः पुमान् । ४४—पुस्तकशब्दः पुन्नपुंसकम् । पञ्चतन्त्रे कामसूत्रेषु वात्स्यायनीयेषु नागरकवृत्ते च पुंसि प्रयोगदर्शनात् । ४५—पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वेति कोषादुदपानः पुंसि साधुः । ४६—वातायनं गवाक्ष इत्यमरे पुंस्त्वनिर्देशात्कोपि गवाक्ष इत्येवं वक्तव्यम् । ४७—पथः संख्याव्ययादेः क्लीबतेष्यत इति विपथमित्येव साधु । ४८—तालु तु काकुदम् इत्यमरात्तालु नपुंसकम् । ४९—द्रव्यं भव्य इति भव्यार्थे द्रव्यशब्दो निपातितः । स चाजहल्लिङ्ग इति ब्राह्मणीत्यनेन सामानाधिकण्येपि नपुंसकम् । द्रव्यं भव्ये गुणाश्रये इति चामरः । अत्र भव्ये वाच्यलिङ्गकमिति नोक्तम् । ५०—छदिः स्त्रियामेवेति लिङ्गानुशासनात्स्त्रीत्वं साधु । कोषान्तरे तु छदिर्नपुंसकम् । द्व्यच्कमसिसुसन्नन्तमिति वचनात् । ५१—कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले इत्यमरात्तुषानलवचनः कुकूलशब्दः पुंसि । ५२—ईषदसमाप्तं तृणं बहुतृणम् । सुपो बहुच् पुरस्तात्तु इति बहुच् । स्यादीषदसमाप्तौ तु बहुच्प्रकृतिलिङ्गके इति वचनात् बहुच्पूर्वस्य तृणशब्दस्य प्रकृतिलिङ्गता । तेन बहुतृणं नर इत्येव साधु । ५३—कुटीरः कुटीरमित्युभयं साधु । ५४—ह्रस्वा कुतूः कुतुपः । अमरे कुतुपः पुंसलिति पठः । ५५—चतुर्णां पथां समाहारश्चतुष्पथम् । स नपुं-

सकम् इति वा पथः संख्याव्ययादेः क्लीबतेष्यत इति वा नपुंसकं साधु। ५६—नाड्यग्जनोपपदानि व्रणाङ्गपदानीति लिङ्गानुशासनात् अपाङ्ग इत्येव साधु। अपाङ्गौ नेत्रयोरन्ताविति चामरः। ५७—अपथं नपुंसकम् इति निपातनादपथ इत्यपशब्दः। ५८—गभीरोऽयं जलाशयः। आशेरते जलान्यत्रेति जलाशयः। एरच् इत्यच्। घाजन्त इति पुंस्त्वम्। ५९—प्राचीनमिति सामान्ये नपूंसकम्। कंचिद्विशेषमविवक्षित्वा नपुंसकेनोपक्रमः। शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिन इत्यत्र शक्यमितिवत्। ६०—अर्थशब्दो नित्यं पुमान्। अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिष्वित्यमरः। ६१—गेहं गेहकमिति च नित्यं नपुंस्कम्। अतोन्तराणि गेहकानीति वक्तव्यम्। ६२—लाजा अक्षता इत्यादयः पंभूम्नि प्रयुज्यन्ते। तेन कियन्तोऽक्षता इति वक्तव्यम्। ६३—अयनमा-स्पदमित्यनर्थान्तरम्। अयनमिति नित्यं नपंसकम्। प्रशमस्यायनं प्रशमायनम्। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति परवल्लिङ्गतायां नपुंसकमेव साधु। ६४—पल्लवोऽस्त्री किसलयमित्यमरात्किसलयं नपूंसकम्। ६५—अमरे दृतिः पुमान् अन्यत्र तु पुंस्त्रियोरिति प्रकृते स्त्रीत्वं निर्दुष्टम्। ६६—वार्ता प्रवृत्तिर्वृत्तान्त उदन्त इत्यमराद वृत्तान्तः पुमान्। ६७—धर्मः किम्, अधर्मश्च किम् इत्येवमन्वये किमिति सामान्ये नपुंसकं युक्तमेव। को धर्मः ? भूतदयेत्यादिषु किंलक्षणको धर्म इति विवक्षायां पुंसि किंशब्दः सूपपन्नः। ६८—विहन्यतेऽस्मिन्निति विघ्नः। घनर्थे कविधानम्। विघ्नोऽन्तरायः प्रत्यूह इत्मरात्पुंस्त्वम्। ६९—ध्रुग्रचक्रमसिसुसन्नन्तमिति यजुः शब्दो नपुंसकम्। तेन यजूंषि प्रमाणमित्येवं वक्तव्यम्। ७०—पूगः क्रमुकवृन्दयोरिति नानार्थवर्गेऽमरः। इन्द्रियग्राम इति तु व्यवहारः। ७१—सत्यं चासत्यं चेति सत्यासत्ये। सामान्ये नपुंसकम्। ७२—प्रजनशब्दो घञन्तः। जनिवध्योश्चेति वृद्ध्यभावः। घञन्त इति पुंसि प्रयोगो युक्तः। ७३—उपसर्गे घोः किरित्युपाधिशब्दः किप्रत्ययान्तः। घोः किः प्रादितो-ऽन्यत इत्यमरवचनात्पुंसि। ७४—नपुंसकमनपुंसकेनेत्यादिना नपुंस-कैकशेषे विनिर्मितानीत्येव साधु। ७५—विशेषणत्वे क्रियाविशेषणत्वे वा

निरवधिशब्देन नपुंसकेन भवितव्यम्। तेन स्वमोर्नपुंसकादिति स्वमोर्लुकि 'प्रवर्तिष्यते निरवधी'ति वक्तव्यम्। ७६—क्लिक्षणेत्यर्थविवक्षायां का नाम मुक्तिरिति वक्तव्यम्। ७७—भिन्ने एवेति नपुंसकैकशेषे साधु स्यात्। ७८—कपाटमररं तुल्ये इत्यमरात्कपाटं क्लीबम्। ७९—भङ्गेति टाबन्तं स्त्रियाम्। ८०—कङ्कणं करभूषणमिति कोषात्कङ्कणं क्लीबम्। ८१—तादृशं वाहनं खर इत्येवं न्यासो निरवद्यः स्यात्। वाहनं नपुंसकम्। तथा च भगवतः सूत्रकारस्य प्रयोगः—वाहनमाहितात् (८।४।८)। न चेदमिह खरविशेषणं येन पुंसि प्रयोगः संगतः स्यात्। ८२—प्रत्ययस्थात् कात्पूर्वस्येत्यादिना टापि कात्पूर्वस्यात इकारे निरर्थिका इति साधु स्यात्। ८३—अनादि, अनादीनीति वा नपुंसकैकशेषे युज्यते वक्तुम्। ८४—अथ मुकुटं किरीटं पुन्नपुंसकम् इत्यमरान्मुकुटं नित्यं नपुंसकम्। ८५—तारक इत्यसुराख्यायामेव पुमान्। ऋक्षे तु तारका स्त्रियां तारकं च क्लीब इति प्रयोगचणाः। तथा च शाश्वतः—नक्षत्रे चाक्षिमध्ये च तारकं तारकापि चेति। लक्ष्यं च—द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकैः (इति विद्धशालभञ्जिकायाम्)। ८६—स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया इत्यमरात् त्रिदिवः पुमान्। ८७—अब्दौ जीमूतवत्सरावित्यमरेऽब्दः पुमान्। ८८—इमान्येवेति वक्तव्यम्। नपुंसकशेषो हि युक्तः। ८९—गोचरशब्दः पुंसि नियत इत्यसकृदुक्तमवस्तात्। षष्ठीसमासश्चायं गोचरान्तः। तेन परवल्लिङ्गत्वाच्छ्रुतिगोचर इत्येव न्याय्यमिति पाणिनीयाः। ९०—पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरात्पदमिति नित्यं नपुंसकम्। तेन सर्वे पादा हस्तिपादे निमग्ना इत्येवं परिवर्त्य पठनीयम्। ९१—शक्यमिति सामान्ये नपुंसकम्। तथा च वामनसूत्रम्—शक्यमिति विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्। एवं विलिङ्गवचनस्य शक्यशब्दस्य वाक्यादावेव प्रयोग उपपत्तिमान्भवतीति सुधीभिर्मनसि करणीयम्। ९२—उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति कामचार इति कैयटः। प्रकृते तु यच्छब्देन नैकतरस्यापि लिङ्गमुपादीयत इति यदिति नपुंसकं

चिन्त्यम्। कथं वाऽन्तर्वाणयः पश्यन्ति ? ९३—जातिर्जातं च सामान्यमिति जातशब्दो नपुंसकम्। शब्दार्थंजातं शब्दार्थजातानीति वा साधु स्यात्। ९४—भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरित्यमराद्वीचिः स्त्रीति सामुद्रय इति स्त्रीलिङ्गं विशेषणं युक्तम्। ९५—निकष्यतेऽत्रेति निकषः। पुंसि संज्ञायामिति घः। वैदुष्यस्य निकषा इति वैदुष्यनिकषा इति साधु स्यात्। रचनासौष्ठवलाभाय वैदुष्यनिकषभूतानीत्येवं न्यसनीयम्। ९६—परितोषः प्रयोजनमस्येति पारितोषिकम्। प्रयोजनम् (५।१।१०९) इति ठञ्। यत्किञ्चित्परितोषफलकमभिप्रेतं न विशिष्टार्थः कश्चिदिति सामान्ये नपुंसकमेव युज्यते। ९७—श्रमं प्रसूत इत्यर्थे क्विप् चेति क्विपि कृदन्तत्वात्प्रातिपदिकत्वे ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वे स्वमोर्नपुंसकादिति सोर्लुकि 'श्रमप्रसु'इति साधु स्यात् ९८—प्रजन इति तु युक्तम्। युक्तत्वे चोक्तो हेतुः। ९९—शततमोंशः शतांशः। अंशभागौ तु वण्टके इत्यंशः पुमान्। १००—आभाणकः पुंसि। तथा च लौकिकानामाभाणक इत्यादिषु तथा दर्शनात्। १०१—सत्य एव भाति नाऽसत्य इत्येवं वक्तव्यम्। १०२—आस्पदमित्यजहल्लिङ्गं नित्यं नपुंसकम्। विवादास्पदं विषय इति निरवद्यम्। १०३—पङ्कोऽस्त्री शादकर्दमावित्यमरः। तेन कर्दमशब्दः पुमान्। १०४—अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् इत्यमरान्मृत्युः स्त्रीपुंसयोः। तेन नात्र कश्चिद्दोषः। १०५—सीमसीमे स्त्रियामुभे इत्यमरप्रामाण्यात्सीमन् इति नकारान्तमपि स्त्रियामेव। तेन चरमां सीमानमिति वक्तव्यम्। १०६—उपाश्रय शब्द एरजन्त इति पुंसि नियतः। १०७—कण्ठस्वर इति तु युक्तम्। १०८—पुंसि संज्ञायां घः प्रायेणेति आलयशब्दो घान्तः। घाजन्त इति पुंसि नियतः। १०९—विपूर्वाद् अञ्जेः क्तिनि व्यक्तिरिपि व्युत्पद्यते। तेन स्त्रीत्वं नियतम्। व्यज्यते जातिरत्रेति व्यक्तिः पृथगात्मता। ११०—पथः संख्याव्ययादेः क्लीबतेष्यत इति विपथमिति वक्तुमुचितम्। यत्तु व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इत्यमरो विपथशब्दं पुंसि पपाठ तच्चिन्त्यम्। १११—११२—शेष शब्दो घञन्तः। घञबन्त इति पुंसि प्रयोग इष्यते। भावे वध प्रति

पुंस्त्वमुक्तम्, करणादिघञन्तस्य नानालिङ्गतेति वल्लभः। ११३—मनाक्प्रिये वरमित्येव युक्तम्। तथा च कोषः—देवादीप्सितजामात्रोर्वरं श्रेष्ठे पुनस्त्रिषु। मनागिष्टे भवेत्क्लीबमन्ये त्वाहुस्तदव्ययम्। ११४—केतनं ध्वजमस्त्रियामिति ध्वजः स्त्री न। ध्वजो ध्वजं वेति वक्तव्यम्। ११५—अनर्थसार्थ इत्येवोचितम्। सार्थशब्दः पुंसि नियतः। संघसार्थौ तु जन्तुभिरित्यमरात्। मुख्यया वृत्त्या संघः सार्थश्च प्राणिसमूहमेवाचक्षाते। तत्पुरुषश्च प्रकृतः समासः। तत्पुरुषे संभवति व्यधिकरणबहुव्रीहिपरिग्रहस्यान्याय्यत्वात्। ११६—अक्षरशब्दो नपुंसकम्। वर्णो ब्रह्म मोक्षश्चाक्षराणि। ११७—खगाश्च बाल्यादि चेति विग्रहः। द्वन्द्वः। बाल्यादि इति च बहुव्रीहिः। बाल्यमादि यस्येति तद्विग्रहः। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति द्वन्द्वे बाल्यादीत्युत्तरपदस्य नपुंसकत्वात्खगबाल्यादिनोरिति सप्तमीद्विवचने रूपं साधु। ११८—स्यादालवालमावालमावाप इत्यमर आलवालशब्दं क्लीबे पठतीत्यालवालमित्येव पठनीयम्। मेघमालेति टाबन्तं युक्तम्। मेघानां माला मेघमाला। सेवेत्यौपचारिकः प्रयोगः। ११९—आत्मघात इति तु न्याय्यम्। घात इति घञन्तः। १२०—चाटु शब्दः पुन्नपुंसकयोरित्याभिधानिकाः। तथा च ऋतुसंहारे प्रयोगः—प्रियः प्रियायाः प्रकरोति चाटुम् इति। तेन प्रकृतेऽदोषः। १२१—मान इत्येवोचितं वक्तुम्। मन्यते घञि मानः। १२२ -उपकण्ठशब्दोऽव्ययमनव्ययं च। अव्ययत्वे तूपकण्ठमित्येकवचनान्तं क्लीबमेव साधु स्यात्। प्रादिसमासे त्वनव्ययम्। तथाभूतः स पुन्नपुंसकयोः। स्नुः प्रस्थः सानुरस्त्रियामिति त्रीणि पुन्नपुंसकलिङ्गानि। तस्मात्प्रकृते न कश्चिद्दोषः। १२३—दर्पणे मुकुरादर्शावित्यमरादेते त्रय एव पुमांसः। १२४—ललाटमलिकं गोधिरित्यमराल्लाटं नपुंसकम्। १२५—निकुरम्बं कदम्बकमित्यमरः। तेन दूरमुत्सारितानि दोषनिकुरम्बाणीति वक्तव्यम्। १२६—कोलाहलः कलकल इत्यमरः। १२७—अङ्कुरोऽभिनवोद्भिदीत्यमरादङ्कुरः पुमान्। १२८—उभयमिति सामान्ये नपुंसकम्। उभयं हतम्। किं तदित्याह—सा देवी मम प्राणाश्चेति। १२९—सीमसीमे स्त्रियामुभे इति परा सीमेति वक्तव्यम्। १३०—कौक्षेयको मण्डलाग्रः करवालः

कृपाणवत् इत्यमरात्कौक्षेयकः पुमान्। १३१—स्वेन पीतिम्नेति वक्तव्यम्। इमनिजन्तं पुंसि नियतम्। १३२—सुखहेतव इति तत्पुरुषे परवल्लिङ्गतायां साधु। न चायमन्यपदार्थप्रधानो बहुव्रीहिः। अर्थासंगतेः। रचनासौष्ठवाय तु वसूनि सुखहेतुभूतानीत्येवं वक्तव्यमिति प्रयोगचणाः। १३३—काष्ठं दार्वित्यमरः। तेन दारुणीति साधु स्यात्। १३४—कुणपः शवमस्त्रिया-मित्यमरः। १३५—ध्वनिः पुमान्। तथा चामरः—शब्दे निनादनिनद-ध्वनिध्वानरवस्वना इति। १३६—तारका तारकं वेति युज्यते वक्तुम्। १३७—मेदश्च मज्जा चेति मेदोमज्जानौ। तयोर्मेदोमज्जनोरिति न्याय्यम्। सारो मज्जा नरीत्यमरः। १३८—उपसर्गे घोः किरिति क्यन्त उपाधिशब्दः पुमान्। १३९—स्याद्गुच्छकस्तु स्तबक इत्यमरः। १४०—धर्मशब्दो-ऽर्धर्चादिषु पठ्यते। अपूर्वे पुंल्लिङ्गः, तत्साधने नपुंसकम्। तत्साधनं यागः। तथा च श्रुतौ प्रयोगः—तानि धर्माणि प्रथमान्यसन् इति।

---

## अथ पदवाक्यव्यवहार विवेचनम्।

१—कापीति विशेषणद्विरुक्त्या नार्थः। नशब्दश्चाधिको वाक्यार्थ-विपर्यासकृत्। क्रिययाऽभिसम्बन्धात्। वाक्ये पृथक् श्रूयमाणो नञ् क्रिययैवाभिसम्बध्यत इति नियमात्। तस्मात् काप्यर्थवत्यनर्थिका वेति वक्तव्यम्। २—स्वहिताय मद्धितायेति वा वक्तव्यम्। तदिति परोक्षे विजानीयादिति वचनात्तच्छब्दः परोक्षभूतमर्थं परामृशेन्न प्रत्यक्षं सनिहितम्। प्रत्यक्षश्च मनुष्यस्य स्वः। तेन स्वशब्देनात्मानं निर्दिशेत् अस्मच्छब्देन वा। तस्य हिताय तद्धितायेति वोच्यमानेऽसंनिहितस्य कस्यचिद्धिता-येति विज्ञायेत। तन्मा विज्ञायीति यथोक्तं निर्देष्टव्यम्। ३—न ह्युपाधे-रुपाधिर्भवति विशेषणस्य वा विशेषणम् इति भाष्योक्तेः कियानिति दुष्ट इत्येतन्न विशिंष्यात्। न चैषा संस्कृते भाषितभङ्गिः। विप्रदुष्टोपि चेत्स्यात्, सुदुराचारोपि इति वा वक्तव्यम्। ४—तुल्यगुणा स्त्री पत्नीनामादर्शो भवतीत्येवं व्यवहारानुसृतो भवति। आदर्शो हि दर्पणो भवति। आदर्श

इवादर्श इत्यौपमिकः प्रयोगः। ५—कुलूता नाम क्षत्रियाः, तेषां निवासो जनपदः कुलूताः। यथाऽङ्गाः, वङ्गाः, कलिङ्गाः। तेन कुलूतनामिति वक्तव्यम्। एकवचनं तु दुष्टम्। ६—वर्षा इति प्रावृडर्थे स्त्रियां बहुत्वे प्रयुज्यते। न चेह प्रावृडर्थः संगच्छत इति महती वृष्टिरिति वक्तव्यम्। वर्षशब्दो वा पुन्नपुंसकयोः प्रयोक्तव्यः। ७—एकादशाधिकामेकादशोत्तरां वा त्रिंशतं रूप्यकानिति एकादश च त्रिंशतं च रूप्यकानिति वा वक्तव्यम्। एकादशं शतमेकादशं सहस्रमिति च शक्यते वक्तुम्। तदस्मिन्नधिकमिति दशान्ताड्डः। शतसहस्रयोरेवेष्यत इत्युक्तम्। ८—इतो वर्षषट्केऽहमित्यादि व्यवहारानुपातीति भूमिकायां वितत्य निदर्शितमिति तत एवावधार्यम्। ९—मध्येभवं माध्यन्दिनम्। मध्यो मध्यं दिनण् चास्मादिति वार्तिकेन माध्यन्दिनमिति सिध्यति। तेन मध्याह्नार्कसन्तप्त इति वाच्यम्। मध्यन्दिनशब्दोऽप्यस्ति शिष्टप्रयुक्तः, मध्यन्दिनसवनादिषु दर्शनात्। तेन मध्यन्दिनार्कसन्तप्त इति वा वाच्यम्। १०—सम्पन्नाः शालय इति वक्तव्यम्। कुत इति चेल्लोकः सम्पत्स्यन्ते शालय इत्येवंजातीयकं व्यवहारं न मृष्यतीति। ११—यत्तदोर्नित्यः सम्बन्ध इति यदा व्यतीतानि तदेति सम्बन्धः (एवं प्रतिपद्यमानमपि वाक्यं नेष्टार्थमर्पयति किन्तर्हि विपरीतमर्थमेव गमयति) यदि प्रकृते विक्रमवत्सराः ख्रिष्टवत्सरा वाऽभिप्रेताः, ध्रुवं वत्सरविशेषा एव विवक्षितास्तदाऽर्वाक्तनतमोयं सिद्धार्थ इत्यापद्यते। तेन इतः पञ्चविंशतौ शतेषु वत्सराणामित्येवं वक्तव्यम्। अत्रार्थे विस्तरस्तु भूमिकायां द्रष्टव्यः। १२—निदानं त्वादिकारणम् इत्यमरः। अन्तार्थे तु नायं क्वापि प्रयुक्तः संस्कृते, प्रचरन्त्यां हिन्द्यां तु तत्रार्थे कामं प्रयुज्यते। १३—अर्थं ब्रवीत्यर्थं वक्तीत्यादेः प्रायशो दर्शनात्सर्वधात्वर्थानुवाद्यपि करोतिर्नेह प्रयोगमर्हति। १४—ओषध्यः फलपाकान्ताः सस्यविशेषः। नहि ता निर्मीयन्ते। औषधं तु निर्मीयते। तेनौषधनिर्माण इति वक्तव्यम्। १५—अवश्यम्भाव आवश्यकम्। आवश्यकेनैव भावस्योक्तत्वात्तल्प्रत्ययेन नार्थः। दुर्लभप्रायमावश्यकताशब्दः संस्कृते वाङ्मये। प्रकृतेऽपेक्षाशब्द एवापेक्ष्यते। १६—विशेष इति भावे घञन्तः। तेनापरो भावप्रत्ययो नापेक्ष्यते।

तस्माद्विशेषतेत्यपशब्दोऽव्यवहार्यः। १७—स्त्री नामोढा भवति। पुरुषस्तु वोढा। वहनक्रियायां पुरुषस्य कर्तृत्वं स्त्रियाश्च कर्मत्वम् प्रसिद्धम्। एवं परिणयनक्रियायामपि द्रष्टव्यम्। तेन सद्यः कृतदारः, अचिरकृतविवाह इति वा वक्तव्यम्। तत्राचिरं कृतो विवाहो येनेति विग्रहः। १८—नेदं संस्कृतं संस्कृताभासं ह्येतत्। श्रीरामचरिते बहु शिक्षणीयमस्तीत्येवं वक्तव्यम्। १९—अद्य पूर्णिमेति वक्तव्यम्। पूर्णिमा पौर्णमासीति च शुक्लपक्षान्त्या तिथिर्भवति। २०—सहस्रं दिव्ययुगानि ब्राह्मं दिनं भवन्तीत्येवं वक्तव्यम्। अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला इत्यादिषु संज्ञासंज्ञिनोः सामानाधिकरण्येन प्रयोगदर्शनात्। षष्ठी तु दुरुपपादा। क्वचित्संज्ञासंज्ञिभावमविवक्षित्वा करणे तृतीयां प्रयुञ्जते वाचि कोविदाः। द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिरित्यमरे यथा। अत्र भवतीति शेषः। २१—भावुकशब्दः सहृदयार्थे न क्वचित्संस्कृते वाङ्मये प्रयुक्तपूर्वः। भावुकं कल्याणं भवति। तथा चामरः—भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियामिति पठति। २२—परिणयनं हि पुरुषकर्तृकं भवति स्त्रीकर्मकं च। पुरुषः परिणेता भवति, स्त्री परिणीता। अग्निं परितो नयनं परिणयनम्। २३—प्रजापालनादिकर्तव्यकलाप इति वक्तव्यम्। रूपशब्देन गड्डुभूतेन नार्थः। २४—हेतुश्च हेतुश्च हेतुश्चेति हेतवः। तृणानि बन्धहेतवो भवन्तीत्येव शोभनम्। २५—तमसि दृष्टय इवेति वाच्यम्। उपमानोपमेययोर्लिङ्गवचनयोः साम्यमिष्यते। दृग्वचनः पुँल्लिङ्गशब्दो नास्तीति लिङ्गभेदस्तावद् दुष्परिहरः। वचनं तु शक्यं समीकर्तुम्। २६—विग्रहशब्दःशरीरवचनोऽस्तीति नैतावता विग्रहिशब्दोऽपि शरीरिवचनः समस्तीति युज्यते कल्पयितुम्। तत्रार्थे तत्प्रयोगादर्शनात्। २७—चेच्छब्दं वाक्यादौ न प्रयुञ्जते शिष्टास्तस्मात्कृष्णं चेन्नंस्यसीत्यादि वक्तव्यम्। २८—अनेकजन्मकृतानीत्येवं वक्तव्यम्। प्रस्तुते समासे पूर्वपदं जन्माविशेषितं तिष्ठति, इदमाऽनिर्देशात्। २९—इन्द्रियेणासम्बद्ध इन्द्रियेणासहचरितो वा गोचरशब्दो विषयार्थे लक्षणया तदुपभोगे वा प्रयुक्तो न दृश्यते। तथा प्रयुज्यमानोऽप्रयुक्तत्वदोषमवगाहत इति परिहार्यः।

३०—पतिपातनैकरतेति युज्यते वक्तुम्। निर्भरशब्दोतिशये सातिशये च वर्तते। ३१—पूर्ववाक्ये चेच्छब्दप्रयोगे उत्तरवाक्ये तर्हिशब्दो न प्रयुज्यत इति वाचो व्यवहारः। तमतिक्रामन्दुष्येदिति सोऽनुसर्तव्यः। ३२—दारुण-विरहवेदनाविदारितहृदया इत्येवं समासो निर्दोषः स्यात्। विरहे वेदना विरहवेदना, सेदानीं भूयो विशिष्यते दारुणेति। विरह इति स्वरूपावच्छेदे संनिपत्योपकारकमिति संनिकृष्टं विशेषणं दारुणमिति चारादिति विप्रकृष्टम्। ३३—अहश्च रात्रिश्च समाहृते अहोरात्रः। तेनैकवचनं प्रयोक्तव्यम्। अहोरात्रेणेति वक्तव्यम्। ३४—छात्रत्रयायेति वक्तव्यम्। त्रयेभ्यश्छात्रेभ्य इति वा। त्र्यवयवा अस्येति त्रयन्। त्रयशब्दः संख्यायां संख्येये च वर्तते। यदा संख्यायां वर्तते तदाऽयमेकवचने प्रयुज्यते। ३५—सर्वेषु जीवत्सु पुरुषेष्विति वक्तव्यम्। वर्तमानप्रत्ययेन शत्राऽयमर्थो युज्यते वक्तुं न तु भूते निष्ठाप्रत्ययेन। न च जीवतशब्दोऽत्रार्थे प्रयुक्तपूर्वः। ३६—द्विष अप्रीताविति सकर्मकः। तथा च कुमारे प्रयोगः—द्विषन्ति मन्दाश्चरितं महात्मनामिति। तेन महात्मनो द्विषन्तीति वक्तव्यम्। ३७—पर्यादयो ग्लानाद्यर्थे चतुर्थ्येति वचनाल्लिङ्गाद् ग्लायतिना योगे चतुर्थी व्यवहारानुपातिनी भवति। तेनाध्ययनाय परिग्लाना इति वक्तव्यम्। ३८—तत्रभवान् इति पदसमुदायः पूज्यवचन इति काव्यनाटकादीनां व्याख्यातारः। एतमर्थमाश्रित्य केचिदाधुनिकास्तत्रभवन्त इत्यतोऽनन्तरं भवन्त इति सर्वनाम प्रयुञ्जते। साहित्ये तु नाम्न एव प्रयोगो दृश्यते। तत्रभवान् कालिदास इत्यादौ यथा। तत्रपदसंनिधानेपि पूज्यार्थाभिधानेपि भवच्छब्दः सर्वनामत्वं न जहाति। सर्वनाम्नो द्विरुक्तिस्तु न दृष्टाऽन्यत्र वीप्सायाः। तेन द्वितीयं भवन्त इति पदं त्याज्यम्। ३९—नवमल्लिकया संसर्ग इति नवमल्लिकासंसर्गः, सोऽस्यास्तीति नवमल्लिकासंसर्गी। शोभनो गन्धोऽस्येति शोभनगन्धः। इनिना नार्थः। ४०—व्यय गताविति भ्वादिः। तस्माल्लुङि अव्ययीदिति रूपम्। वित्तसमुत्सर्गश्चार्थो विवक्षितः। तं नायमलं गमयितुम्। तेन व्यय वित्तसमुत्सर्गे इति चुरादेर्लुङि अवव्ययत् इति वक्तव्यम्। ४१—सांसारिकाणि स्वस्य सुखानीति वक्तव्यम्।

स्वशब्दस्य सुखानीत्यनेन सम्बन्ध इति तेनैव समसनमर्हति न सांसारिकाणीत्यनेन। समासार्हत्वेऽप्यसमास एव वरम्। ४२—अचेत्यधिकरणवृत्त्यव्ययम्, तेन नेदं समय इति प्रथमान्तेन समानाधिकरणम्। समयोऽयं जलागमस्येति तु युज्यते। ४३—यद्यप्यवरत इत्यत्राद्यादित्वात्सार्वविभक्तिकेन तसिना रूपसिद्धिः सुशका, अवरतोऽवरानित्येवं व्याख्यानं च सुकरं तथापि प्रकृतेऽर्थाभङ्गतिर्दुष्परिहरा। न ह्यवरान् द्वादशवत्सरानित्युक्ते विवक्षितोर्थः प्रतीयते। भवन्तु नाम केचन (द्वादशसंख्याकाः) अवरे वत्सराः केचिच्च परे, तैरिह नार्थः। तेन द्वादशावरान्वत्सरानिति वक्तव्यम्। समासेन तु संख्याया द्वादशात्मिकाया अवरत्वं गम्यते। अयमेव च वक्तुरभिप्रायः। तत्र द्वादश अवरे यत्र तानिति विग्रहः। ४४—आयुर्जीवितकाल इत्यमरः। तेनायुः पृष्टः कश्चिन्नाहं ज्यौतिषिक इति युक्तमाह। अत्र प्रष्टाऽपराध्यति। तेन वयः प्रच्छनीयम्, नाऽयुः। ४५—काव्यकल्पनकुल्या एव कैतवमिति रूपकम्। काव्यकल्पनकुल्याभ्यः कैतवादिति व्यस्तरूपकसमाश्रयेण वक्तव्यं समासेन वा मयूरव्यंसकादिना काव्यकल्पनकुल्याकैतवादितिरूपेण। ४६—द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिरित्यमरे सामानाधिकरण्यवैयधिकरण्याभ्यां संज्ञासंज्ञिनार्निर्देश इतीहाप्युभयथा शक्यं निर्देष्टुम्—द्वाभ्यामर्थाभ्यां द्वावर्थौ वेति। तेन नात्र कश्चिद्दोषः। ४७—आङ्पनेयः। ददिर इति वक्तव्यम्। आदानं ग्रहणं भवति न तु वितरणम्। ४८—भूमेति बहोरिमनिचि रूपम्। बहुत्वं चार्थः। भूतिमिति तु वक्तव्यम्। ४९—स्वर् इति स्वर्गनाम। तस्य राट्, तत्र राजत इति वा स्वाराट्। तस्य भावः कर्म वा स्वाराज्यम्। प्रकृते सोर्थो न विवक्षित इति स्वस्य राज्यं स्वराज्यमित्येत्र साधु। ५०—स्थितधीः स्थिरमना इति समानार्थौ शब्दौ। समानार्थौ च न सह प्रयुज्येते इत्येकतरः शक्योऽप्रयोक्तुम्। ५१—शरणं गृहरक्षित्रोरिति रक्षितृवचनः शरणशब्दः। तेन त्वां शरणमुपागतोऽहमित्येवं वक्तव्यम्। ५२—दीर्घं निद्राणः। (चिरं प्रसुप्तः) इति वक्तव्यम्। दीर्घनिद्रायामिति सप्तमी बाढं दुरुपपादा। यदि चावश्यं सप्तमी प्रयोक्तव्या तदा दीर्घनिद्रायां

वर्तमान इति वाच्यम्। ५३—प्रकृतिरिति जगन्निदानं यत्साङ्ख्याः प्रधानमित्याचक्षते। सा चात्मवत्सूक्ष्माऽतीन्द्रियेति न दृष्टेर्गोचरः। यद् दृश्यते सा विकृतिः, स सर्गः। तेन अहो सुन्दरः सर्ग इति वक्तव्यम्। ५४—अहिंसायां व्रतमहिंसाव्रतम्। तदस्त्येषामित्यहिंसाव्रतिन इति मत्वर्थीय इनौ सिद्धम्। व्यधिकरणबहुव्रीहिस्वीकारे त्वहिंसाव्रता इत्येव शोभनम्। ५५—परमोत्तमे इति पर्यायौ। तत्पर्यायाणां पर्यायत्वं यत्पर्यायेणार्थं ब्रुवन्तीति। अतश्च पर्यायवचना इत्युच्यन्ते। तेन परम इति वोत्तम इति वा भणितव्यम्। ५६—नॄन् शंसति हिनस्तीति नृशंसो घातुक उच्यते। इदं च पुरुषविशेषणं भवति न कर्मविशेषणमिति व्यवहारः। तेन नृशंसस्य कर्मेति वक्तव्यं नृशंसत्वमिति वा। ५७—यद्यपि वैरशोधनं वैरनिर्यातनमित्यनर्थान्तरं प्रसिद्धं तथापि प्रतिशोधशब्दः शोधनशब्दो वा तत्रार्थेऽप्रसिद्ध इति परिहार्यः। ५८—ज्यायसि हिंसके सिध्यतीत्येवं वक्तव्यम्। ज्यायांसं हिंसकमासाद्येत्यर्थमाश्रित्य तु सर्वं यथास्थितं-समञ्जसम्। तत्र ल्यब्लोपे कर्मण्युपसंख्यानमिति पञ्चमी। ५९—अनुष्ठित-मननुवृत्तमनाचरितमिति वा वक्तव्यम्। क्रिययाऽसहचरितमिति वा। निष्क्रियं निश्चेष्टं भवति। ६०—द्विष अप्रीतावित्ति सकर्मकः। तेन न भूतमात्रं द्विष्यादिति वक्तव्यम्। ६१—जनवचनः प्रजाशब्दः प्रायेण बहुवचने प्रयुज्यते। सन्ततिवचनस्तु यथापेक्षमेकत्वेपि दृश्यते—प्रजाः प्रजानाथ पितेव पासीति कालिदासे यथा। ६२—सृज विसर्गे इत्ययं धातुर्विपूर्व उत्पूर्वः समुत्पूर्वो वा त्यागे प्रसिद्ध इति विसिसृक्षव इति वक्तव्यम्। ६३—परार्थप्रिय इति वक्तव्यम्। परमार्थस्तु भूतार्थो भवति, तत्त्वमिति यावत्। परमः पुरुषार्थो वा परमार्थः, यं परमं पुमर्थमाहुः। स च प्रकृते नापेक्ष्यते। ६४—निलीना इति प्रच्छन्नास्तिरोहिता उच्यन्ते। प्रविष्टा अवगाढा इति वा वक्तव्यम्। सन्तमसमिति च द्वितीयान्तं प्रयो-ज्यम्। ६५—सुकृतदुष्कृतानामिति वक्तव्यमुपक्रमसाम्याय। ६६—अस्ति कारकत्वविवक्षेति पुष्पाणि पुष्पेभ्य इति वा वक्तव्यं सम्प्रदायान् सम्प्रदायेभ्य इति च। सम्बन्धाविवक्षायां तु नातीव युक्तेति षष्ठी नोपपद्यते। ६७—'न हि

वचनात्मको धर्म' इति वक्तव्यम्। यथास्थिते तु वागतीतोऽर्थो धर्म इत्यर्थः प्रतीयते। ६८—समाजस्येत्यपनीय समष्टेरिति वक्तुमुचितम्। अनन्तरं व्यक्तेरित्युक्तत्वात्। व्यक्तिसमष्ट्योश्च साहचर्यस्य प्रसिद्धत्वात्। ६९—ईश्वरमुपासीन इत्येव वक्तव्यम्। सविधस्योपेनैव गतार्थत्वात्। ७०—निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि स इत्यमराद् दुर्विधादयः पर्यायवचना इति न युगपत्प्रयोगमर्हन्ति। ७१—प्रतीक्ष्यः पूज्य इत्यनर्थान्तरम्। प्रतिपूर्वस्येक्षेस्तिङि तु न पूजनमर्थः क्वचिद् दृश्यते। तेनाभिपूजयतीति वक्तव्यम्। ७२—प्रकाशं याचेतेत्येवं न्यासो निर्दोषः स्यात्। ७३—प्रान्तः सीमान्तो भवति न तु प्रदेशो जनपदो वा विषयो वा। हिन्दीमनुसरंस्त्वेवं प्रयुङ्क्तेऽप्रगल्भः। ७४—स इति विधेयप्राधान्यात्पुंस्त्वेन निर्देशः। तेन नात्र कश्चिद्दोषः। ७५—जाया च पतिश्चेति दम्पती भवतः। तयोरेकः परिणेता भवति, परा तु परिणीता। परिणीता दशेत्यपार्थकम्। विवाहपूर्वकमेव दाम्पत्यमित्यव्यभिचारात्परिणीतादि विशेषणमनर्थकम्। कामं गृहस्थौ गृहिणौ वा सन्तावपीत्येवं विशेषणयोगो न वार्यते। ७६—आयतिरुत्तरकालो भवति प्रभावोपि। तेन प्रकृते फलं विपाकः परिणतिरिति वा वाच्यम्। ७७—जीवनं जीवि प्राणो भवति न तु जीवनकालः। आयुर्जीवनकाल इति कोषात्सर्वमायुरिति वक्तव्यम्। ७८—प्राचीनः श्रूयते, सनातनश्च दृश्यत इति वक्तव्यम्। लटः शतृशानचावप्रथमासमानाधिकरणे इत्यप्रथमान्तेन सामानाधिकरण्ये लटः शतृशानचावादेशौ विहितौ। तेनेह न प्रसज्येते। विस्तरस्त्वत्रार्थे भूमिकायां द्रष्टव्यः। ७९—चिन्ता संजाताऽस्येति चिन्तितमिति शक्यव्युत्पत्तिकोप्ययं शब्दोत्रार्थे पूर्वैः सूरिभिरप्रयुक्त इति सचिन्तमिति वक्तव्यम्। चिति स्मृत्यामित्यस्मात् क्ते तु चिन्तितं। मे चेत इत्यस्य चिन्ताकर्म चिन्ताविषय इत्यर्थः स्यात्। सकर्मकः स धातुरिति कर्मणि निष्ठा वेदितव्या। ८०—संकोचे क्षुद्रतायां वा संकीर्णतेत्यशक्तम्। संकीर्णं संकरवत्प्रकीर्णमिति यावत्। लोकभाषायां तु कामं क्षुद्रतां संकीर्णतां व्यवहरन्ति। ८१—एकसत्तात्मक इति पदे सत्तापदं शक्यमिवापीत्यभिमानः। संस्कृते नायमस्यार्थ इत्यभ्युपगमः।

तेन चिन्त्योऽयं व्यवहारः। एकाधिकारिणि राज्य इत्येवं न्यासोऽनवद्यः स्यात्। ८२—संश्रयणं संश्रीयत इति वा संश्रयः। उभयथाऽपि प्रीत्यामिति सहयोग इति च सप्तम्यौ नोपपद्येते। प्रीतिः सहयोगश्च राष्ट्रस्य संश्रय इत्येवं व्यवहरणीयम्। ८३—जनवचनः प्रजाशब्दः स्त्रियां भूम्नि प्रयुज्यते प्रायेणेत्युक्तमधस्तात्। तेन प्रजानामित्यादि वक्तव्यम्। ८४-सुखस्यैका वसतिर्निवासस्थानमित्यर्थे न कश्चिद्दोषः। ८५—भवतामस्माकं च को विशेष इत्येवं वक्तव्यम्। भेदे षष्ठ्येव व्यवहारानुगेति वाग्योगविदः। ८६—अन्यायार्जितेन संगतं भवतीति वक्तव्यम्। संगतं सम्पृक्तम्। ८७ – एकशतमित्येकाधिकं शतमित्यर्थे रूढम्। तेन सार्धं शतं वर्षाणीति वक्तव्यम्। ८८—स्त्री नामोह्यते न तु वहति। वहनस्य पुरुषकर्तृकत्वस्य प्रसिद्धेः। तेन नापरं पतित्वे वरीतुमिति युज्यते वक्तुम्। ८९—परस्परं कलह इत्येव शोभनं वचः। पारस्परिकशब्दस्याधुनिकैः कल्पितत्वात्। न हि यतस्ततस्तद्धितमुत्पाद्य नूत्नाश्शब्दा निर्मेया वैयाकरणत्वं च स्वस्य प्रख्याप्यम्। ९०—उपयोगिनी, औपकारिकीति वा प्रयोज्यम्। ९१—तत्पदेऽभिषेकमर्हेयुरित्येवं वाच्यम्। न हि पदं नामाभिषिच्यते किन्तर्हि पदे कश्चित्तदर्होऽभिषिच्यते। ९२—अत्र प्रागित्येव पर्याप्तम्। काले इत्यनेन नार्थः। एवमन्यत्रापि प्रातःकाले सायंकाल इत्यादौ कालशब्दोऽप्रयोज्यः। ९३—संस्कृतेन भवेदित्येव साधु। वाग्घि करणं द्वारमन्यापनस्येति तृतीयैव युक्ता। ९४—प्रणिदध्यामेत्यत्र मन इति कर्मापेक्ष्यते। केवलस्य चिन्तनेऽप्रयुक्तेः। बाढं ल्युडन्तस्य तत्रार्थे तदन्तराऽपि प्रयोगो दृश्यते। तदेतच्छब्दस्वाभाव्यम्। ९५—गुरुणा कृतं कुशलप्रश्नमुत्तरयतीति वक्तव्यम्। भावलक्षणायाः सप्तम्या नैव विषय इति भूमिकायां सविस्तरं निगदितमिति तत एवावधार्यम्। ९६—तॄ प्लवनतरणयोरुत्पूर्वः पारगमने वर्तते न तु प्रतिवचने। तेनोत्तरशब्दात्तत्करोतीत्यर्थे णिचि लङि 'उदतरयत्' इति साधु स्यात्। ९७—दिलीपात्सुदक्षिणायाभिति व्यवहारः। सम्बन्धमात्रविवक्षायां दिलीपस्येति षष्ठ्यपि नासाध्वी। भूमिकायां चायं विषयः कारकाधिकरणे वैतत्येन निरूपित इति तत एव विशेषोऽवधार्यः।

९८—मयेति करणविवक्षया तृतीया। करणविवक्षा चैवंजातीयके विषये नान्यत्र दृष्टेत्युक्त्वा वाचि स्वतन्त्रा महर्षय इति भूयो विमर्शं विरमयामः। ९९—यदा यस्मिन्काले इत्यनर्थान्तरम्। यदेति पूर्ववाक्येनाभिसम्बध्यत उत्तरवाक्येन वा। उभयथापि विवक्षितोऽर्थो न गम्यते। यदा पञ्चसहस्र्याः शरदां व्यत्ययोऽभूत्तदा संगरोऽभूदिति नतरां विवक्ष्यते। अयं च शरद्व्यत्ययः किंसम्बन्धिक इति च नोच्यते। संगरसम्बन्धी चासौ न भवति। संगरो हि स्वतन्त्रो व्यतिकरो वर्ण्यते सति तस्मिञ्छरद्व्यत्यये। तस्मादद्य प्रायः पञ्चसहस्री शरदां कुरुपाण्डवानां संगरस्य भूतस्येति वक्तव्यम्। इतः पञ्चसु शरत्सहस्रेष्विति वा वाच्यम्। एवं व्यवहारोऽनुसृतो भवति। १००—आरभ्ययोगे भाष्यकारादिप्रयोगात्पञ्चमी साध्वी। व्यवहारस्तु दुष्यति। व्यवस्थायां वर्तमान एवारभ्यशब्दः पञ्चमीं प्रयोजयति। इह व्यवस्था नार्थः। सप्तत्रिंशद्वर्षाणि हि प्रीणनक्रिययाऽभिव्याप्नोतीति ततोऽत्यन्तसंयोगे द्वितीयेष्यते। तेन सप्तत्रिंशतं वर्षाणीति वक्तव्यम्। अयमित्यस्यानन्तरमद्यशब्दश्च प्रयोक्तव्योऽर्थाभिव्यक्तये। १०१—निर्भरशब्दो भरेण समानार्थः। साहाय्यमवलम्बमिच्छन्तः, साहाय्ये लम्बमाना इति वा वक्तव्यम्। १०२—यत्स इत्याद्युत्तरवाक्येनार्जुनकर्तृकं शस्त्रसंन्यासादिकर्मकं निर्णयं विवक्षति। स च निर्णयोऽर्जुनमुखेरितैः शब्दैरेव वक्तव्य इति वाग्व्यवहारः। अर्जुनश्च तं निर्णयं वक्ष्यमाण आत्मानं परोक्षार्थवृत्तिना तच्छब्देन न परामृशेत्। आत्मा हि सर्वस्य संनिहित इत्यस्मच्छब्दं प्रयुञ्जीत, अयं जन इति वा ब्रुवीत। तेन अहं शस्त्राणि संन्यसिष्यामीत्यादि प्रयोक्तव्यम्। यच्छब्दश्च परिहार्य इतिशब्दश्चान्ते कार्यः। १०३—परोवरपरम्परपुत्रपौत्रमनुभवति (५।२।१०) इति सूत्रे वृत्तौ प्रत्ययसंनियोगेन परपरतराणां परम्परभावो निपात्यते। अत्र च खप्रत्ययो नास्तीति परम्परशब्दोऽसिद्धः। परम्परेति स्त्रियामव्युत्पन्नं प्रातिपदिकमस्ति। तच्च प्रबन्धं वक्तीति न प्रकृत उपयुज्यते। तेन ततः परः, परतर इति वा वक्तव्यम्। १०४—ससर्गे आयत्तेति वक्तव्यम्। निर्भरा भरा भवति तद्वान् सातिशयो वेत्यसद्दुक्तम्।

१०५—काठिन्यं दुर्बोधता न भवति, किन्तर्ह्यन्तः सारता क्रूरता च। तेन दुर्बोधं दुरवगमं वेति वक्तव्यम्। १०६—श्रद्धा संजाताऽस्येति श्रद्धित इति व्युत्पत्तिसंभवेऽपि नास्य साधुत्वं व्यवतिष्ठते। प्रयोगादर्शनात्। विवक्षितार्थस्य चासमर्पणाद्धेयोऽयं प्रयोगः। १०७—यथास्थिते भगवानादिगुरुः कश्चिदन्यो विश्वनाथश्चान्य इति विरुद्धार्थप्रतीतिर्जायमाना न वार्यते। यदि च स भगवान् विश्वनाथ इति सम्बोध्येत तदा विरोधोऽपेयात्। एवं तर्हि वक्तव्यम्—अये विश्वनाथ प्रेरय नः सन्मार्गे इति। यदिति स्वकृपयेति च त्याज्यम्। प्रार्थनायां लोटैव तस्यार्थस्योक्तत्वात्। न हि शिष्टाः प्रार्थनायां लोटं प्रयुञ्जानाः कृपयेत्यादि प्रयुञ्जते। शिष्टाश्च वाचि प्रमाणम्। १०८—युवयोरपि मङ्गलवचनं प्रभवतीति लक्ष्यत इत्येवं वाग्व्यवहारानुसारो भवति। युवयोरिति षष्ठी शैषिकी। १०९—ब्रह्मण्यन्तर्निविष्टमिति सप्तम्येव व्यवहारानुपातिनी। ११०—वशेर्भाषायां प्रयोगो वार्तिककारमतेन साधुरिति कैयटः। तेन नात्र दोषगन्धोऽपि। १११—अत्र करिशब्दः सुत्यजः करिणां घटना घटेति कोषाद् घटाशब्देनैव तदर्थगतेः। तथापि लोके लाघवं प्रत्यनादर इति महाकवयोऽपि करिघटा गजघटेत्यादि प्रयुञ्जते किमुत कवयः। ११२—मालाशब्दो ग्रथितेषु माल्येषु रूढ इति रत्नहार इति वक्तव्यं मौक्तिकमय इति च विशेषणं देयम्। ११३—अपस्किरते विलिखत्युत्किरतीत्यनर्थान्तरम्। कर्मसव्यपेक्षं चेदं क्रियापदम्, तथापि भूम्यादि कर्म गम्यत एव न तु शब्देनोच्यते। एष व्यवहारः। सोऽनुविधेयः ११४—अपादाने चाहीयरुहोरिति जहातेः पर्युदासादपादाने पञ्चम्यास्तसिर्न प्राप्नोतीति स्वार्थत इति दुष्टम् इति चेन्मैवम्। मन्त्रो हीनः स्वरतो वर्णतो वेत्यत्रेव प्रकृतेऽपि तृतीयायास्तसिः। स्वरेण वर्णेन वेत्यर्थः। ११५—चिरजाततर इति साधु। अल्पाच्तर इति वत्। चिरतरं जात इति चार्थः। ११६—प्रातर्नाम कालो भवति। प्रातरात्मैव कालो विवक्षितः। न हि तत्रभवं कालान्तरमस्ति येन ट्युलु स्यात्। एवं साम्प्रतिके समये, अधुनातने काले इत्यादयः प्रतिक्षिप्ता वेदितव्याः। ११७—भीष्ममुखेन शास्तीति वक्तव्यम्। प्रशासने निर्देश इत्युत्तरे रामचरिते धीरराघवः।

भीष्ममुखेनेति करणे तृतीया। पञ्चमी तु सर्वथाऽस्थाने। ११८—जातुशब्दे सति कदापीत्यतिरिच्यते। सति वा कदापीति शब्दे जात्वित्यतिरिच्यते। तेनैकतरं शक्यं विहातुम्। ११९—शतस्य कुरूणामिति वाच्यम्। संख्येये वर्तमानः शतशब्दो नपुंसकैकवचने नियतः। १२०—प्रथीयसीति पृथुशब्दादीयसुनि रूपम्। पृथुशब्दश्च विशालापरपर्यायो न प्रसिद्धपर्यायः। तेन प्रथिततरेति वाच्यम्। १२१—प्रविभङ्क्ष्यन्त इति भञ्जो आमर्दन इत्यस्माल्लृटि कर्मणि रूपम्। प्रविभागश्च विवक्षितः। तेन प्रविभक्ष्यन्त इति वक्तव्यम्। १२२—बहुरस्य परिजनः, अमितश्च परिच्छद इत्येवमेकत्वमाश्रित्य वक्तव्यम्। परिजनपरिच्छदावेकत्वेपि बहुत्वमाचक्षाते शब्दशक्तिस्वाभाव्यात्। १२३—समलोष्टाश्मकाञ्चन इति वक्तव्यम्। लोष्ट इति शब्दो न तु लोष्ठः। १२४—न चवाहाहैवयुक्ते इति युष्मदस्मदादेशौ ते मयेकवचने प्रतिषिद्ध्येते। तव च मम चेति वक्तव्यम्। १२५—सत्पथेन निनीषन्तीति वक्तव्यम्। प्रजासु कः केन पथा प्रयातीति कविकुलपतेः शाकुन्तले प्रयोगः पथस्तृतीयां युक्तां स्मारयति। १२६—मिथो दारकर्म नाभिनन्दतीति वाच्यम्। विवहन्तीत्यस्याः क्रियायाः पुरुषाः कर्तारः, स्त्रियश्च कर्माणीति प्रसिद्धम्। उभयं च कण्ठरवेण नोक्तम्। हिन्दवश्चोक्ताः कर्तारः। ते च स्त्रीपुरुषोभयस्वरूपा इत्ययुक्तं तेषां कर्तृत्वम्। १२७—निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिरिति बालमित्यत्र द्वितीया नोपपद्यते। पितेत्यत्र त्वनुपपन्ना द्वितीया परिहृता स्मृतिकारेणेति साधु कृतम्। १२८—सूर्यवंश एषामस्तीति सूर्यवंशिन इति व्युत्पत्तिसंभवेपि नायं शब्दः प्रयुक्तपूर्व इत्युपेक्ष्यः। सूर्यवंश्याः सूर्यवंशीया इति वा वक्तव्यम्। एवं सोमवंश्याः सोमवंशीया इति वा। १२९—संभाव्यत इति वक्तव्यम्। संभवतीति वा। शुद्धात्संभवते भावे कर्मणि वा प्रत्ययोऽस्थाने। १३०—अनुमन्यन्ते इति प्रयोक्तव्यम्। मन ज्ञान इति दैवादिकस्यैवानुपूर्वस्य प्रयोगमिच्छन्ति शिष्टा न तु मनु अवबोधन इति तानादिकस्यापि। १३१—द्वाभ्यामपत्याभ्यां त्रिभिर्वेति वक्तव्यम्। विंशतिप्रभृतयः संख्यावचनाः संख्यायां संख्येये च वर्तन्ते न

तु द्व्यादयोपि। इमे तु संख्येय एव नियम्यन्ते व्यवहारेण। १३२—अत्र वेन: स्थाने व्येन् प्रयोक्तव्यः। उपव्यायेति च वक्तव्यम्। आच्छाद्येत्यर्थस्य विवक्षितत्वात्। १३३—सम्भूयेति पदेनैव समुत्थानस्य गम्यमानत्वात्समुद्य्येरन्नित्यत्र समित्यधिकम्। १३४—साक्षात्प्रभृतीनि चेत्यत्राविःशब्दः पठितः। तेन गतिसंज्ञाऽभावपक्षे न कश्चिद्दोषः। गतेरेव धातोः प्राक्प्रयोगनियमात्। १३५—अत्र पूज्या इति त्याज्यम्। गुरुचरणा इति वृत्त्यैव तस्य गतार्थत्वात्। १३६—शिरसा धृत्वा, शिरसाऽऽदायेति वा वक्तव्यम्। १३७—परिवर्तने तत्परः, परिवर्तनतत्पर इति वा वाच्यम्। तत्परे प्रसितासक्तावित्यमरात्तत्परशब्द आसक्तमाह। आसक्तिश्च विषयमाकाङ्क्षतीति परिवर्तन इति वैषयिकी सप्तमी साध्वी। १३८—विघ्नैः कैरपि व्याहत इति वाच्यम्। काठिन्यशब्दो हि तत्रार्थेऽशक्तः। पटुपटुरिति पटुप्रकारो भवति न त्वतिपटुः। प्रकारे गुणवचनस्येति द्विरुक्तिः। कर्मधारयवदुत्तरेष्विति कर्मधारयवद्भावः। १३९—परापूर्वः पतिः प्रत्यावर्तने वर्तते। तेन आपतन्तीति वक्तव्यम्, उद्भवन्तीति वा। १४०—अस्ति मे लवणेन प्रयोजनमित्येव व्यवहारः। १४१—धातुद्वयादिति वक्तव्यम्। अत्र द्वयशब्दः संख्यायां वर्तते न संख्येय इत्येकवचनमेव युज्यते। १४२—सम्पूर्वस्य ख्या प्रकथन इत्यस्य तिङि प्रयोगो नेति न्यासकारः। तेन संचष्ट इति वक्तव्यम्। १४३—भूयानत्र प्रक्रमभङ्गः। नैकः कश्चित्प्रकारः समाश्रितः। प्रक्रमसाम्याय विंशतिः कुक्कुट्यः, पञ्चाजा मिष्टान्नं वाससी च समानीयन्तामिति वक्तव्यम्। १४४—उपरिशब्दोतिरिक्तः। स त्याज्यः। अधीगर्थदयेशां कर्मणीति कर्मणि शेषत्वेन विवक्षिते षष्ठी। कर्मणि तु द्वितीया स्यादेव। १४५—अत्र तसिना नार्थः। अन्तः शाक्ता बहिः शैवा इत्यत्र यथा। १४६—प्राणानिति बहुत्वे प्रयोगो व्यवहारमनुपतति। जातौ वैकवचनं व्याख्येयम्। यथा मानवे धर्मशास्त्रे प्रयोगः—तथेन्द्रियाणां नश्यन्ति दोषाः प्राणस्य निग्रहात् ( मनु० ६।७१ ) इति। १४७—द्वयानपीमान् इति वक्तव्यम् उभयानिति वा। द्वयमुभयं चैकत्वे बहुत्वे च प्रयुज्यते। द्वये प्राजापत्या देवाश्चासुराश्चेत्यादौ यथा।

द्विशब्दस्तु द्वित्वपरिच्छिन्नमर्थमाह। यमास्तु पञ्च भवन्ति नियमाश्चापि। ते समुदिता दश भवन्ति। तेन द्वावपीमान् यमनियमान् इत्युन्मत्त-प्रलपितम्। १४८—आत्मानं निवेशयेति वक्तव्यम्। कन्यां हि पुरुषः परिणयति नात्मानम्। परिणयमधिकृत्य बहूक्तमधस्तादिति नेह भूयो वचो वितन्यते। निवेशो हि दारकर्मपूर्वको गार्हस्थ्यप्रवेशः। दौःष्यन्तिमप्रतिरथं तनयं निवेशयेत्यत्र शाकुन्तले यथा। १४९—नहि निघण्टुनिरुक्त अनर्थके अपि कदाचिद्भवतो येन सार्थके इति विशेषणमर्थवत्स्यात्। तेन सार्थक-मिति क्रियाविशेषणं योज्यम्। १५०—पूर्ववाक्ये युष्मानिति बहुवचनम्। युष्मदर्थस्य बहुत्वविशिष्टस्योत्तरवाक्य एकवचनान्तेन भवच्छब्देन प्रत्यवमर्शो न युक्तः। तेन भवन्त आचक्षतामिति वाच्यम्। १५१—यथायथमिति यथास्वमित्यर्थे वर्तते। यथातथमिति तु वक्तव्यम्। १५२—शिशूनां भाव एव शैशवं भवति, नान्यत् किंचित्। तेन शिशूनामिति वा त्याज्यं शैशवस्य स्थाने वय इति वा प्रयोज्यम्। सामान्यवचनः कालशब्दो वा प्रयोक्तव्यः। १५३—अर्थादिति पञ्चम्यन्तं पदं मध्ये वाक्यं पदान्तरेणासंसृष्टं न संस्कृते प्रयुज्यते, लोकभाषायां तु बाढं व्यवह्रियते। तेन अर्थादित्यस्य स्थानेऽयमर्थं इति वक्तव्यम्। अथवाऽपित्येत्यादयो निपातसमुदायास्तु विकल्पं पक्षान्तर-माहुरिति नेह प्रयोगमर्हन्ति। समाप्तेवर्षमवशिष्यत इति शेषे षष्ठी व्यवहा-रानुपातिनी न तु सप्तमी, अधिकरणस्यासत्त्वात्। १५४—पुरुषार्थ इति पुरुषस्यार्थो भवति यस्तेनेह जीवता साध्यः। धर्मार्थकाममोक्षाश्च चत्वारः पुरुषार्थाः। एत एव चतुर्वर्ग इत्याख्यायन्ते। पुरुषार्थ उद्योगो न भवति। तत्र पौरुषं पुरुषकार इति च प्रवर्तेते। तेनोद्योगिन उद्यमिन इति वा वक्तव्यम्। १५५—संन्यस्तलोकः संन्यस्तसंकल्पः संन्यस्तकर्मेत्यर्थेऽत्र संन्यस्तशब्दः प्रयुक्तः। अत्रोत्तरपदलोपो द्रष्टव्यः। स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचर इति किराते विदितशब्दे यथा। १५६—द्विजाधीना इत्येवं समासवृत्त्या वक्तव्यम्। अध्युत्तरपदादेव प्रातिपदिकात्खो विधीयते न तु स्वतन्त्रादधिशब्दाद्येनाधीनमिति पृथक्पदं स्यात्। १५७—दशावराणां विद्वत्पुरुषाणामिति वक्तव्यम्। विदुषा चैव-

ज्ञातीयिका रचना पूर्वत्रेति नार्थ इह विस्तरेण। १५८—परैः परवन्तो वयम् इति वा। अधीनतेति प्रयोगो नास्ति। परदास्ये वर्तमाना इति वक्तव्यम्। १५९—अत्र भवत्तु विपश्चित्स्वति वक्तव्यम्। अत्र सामीपिकेऽधिकरणे सप्तमी बोध्या। इत्थमेवायमर्थोऽभिधीयते इति वाग्योगविदः। सेवायामिति निमित्तसप्तमी स्यात्। तथा सत्यत्र भवतां सेवानिमित्तं सेवायै प्रेष्यत इत्यर्थः प्रतीयेत, न चायं प्रत्यायिययिषितः। छायैषा लोकभाषाप्रकारस्येति संस्कृताभासमिदं न संस्कृतम्। १६०—अहं त्वां शरणं गतोऽस्मीति वक्तव्यम्। शरणं गृहरक्षित्रोरित्यमरप्रामाण्याच्छरणं रक्षितृ भवति न तु रक्षणम्। १६१—प्रबन्ध इति सातत्ये वर्तते यथा नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोरिति सूत्रे। संविधायां तु नास्य वृत्तिः। आधुनिकैः कैश्चित् परम्परागतमर्थमुपेक्ष्य संविधेति नूत्नोऽर्थः कल्पितः। स नार्हति प्रमाणकोटिमाटीकितुम्। १६२—'सरागया च दृष्ट्या' इति वक्तव्यम्। विषयशब्दो हीन्द्रियविषयेण समानार्थकः। तस्मात्तेन नार्थः। १६३—अश्नात्यभ्यवहरतीत्यनर्थान्तरम्। तेनानुभवति, समश्नुते संवेत्तीति वा वक्तव्यम्। १६४—ब्रह्मचारिण इति पञ्चम्यन्तम्। युज्यते च ब्रह्मचारिणं ब्रह्मचारिणेति वा वक्तुम्। हृक्रोरन्यतरस्यामिति करोतेरणौ कर्तुर्वा णौ कर्मत्वम्। १६५—यथा विभक्तं सत्सर्षपमात्रमपि नैकैकस्याभिष्यात्। अभिरभागे इति भागेऽर्थे उपसर्गसंज्ञा समवस्थितेति एकैकस्येति शेषे षष्ठी साध्वी। उपसर्गप्रादुर्भ्यामस्तिर्यच्पर इति षत्वम्। १६६—यथा ते वृत्तिर्वर्तनं वेति वक्तव्यम्। जीवनं तु प्राणधारणं भवति। १६७—संभवनं संभवः। ऋदोरप् इत्यप्। न ह्ययं पचाद्यजन्तो येन संभवतीति संभवः पुंसि, संभवेति च स्त्रियां साधु स्यात्। तेन संभविनीति वक्तव्यम्। संभवोऽस्या अस्तीति तद्व्युत्पत्तेः। १६८—वयम् आदयो येषामित्यस्मदादयः। न ह्यस्मदादिशब्दस्यास्मदर्थः। तेनास्मद्युत्तम इत्यस्याप्रसङ्गात् प्रथमपुरुषप्रयोग एव साधुः। १६९—पुराणवचनान्यन्यथाऽर्थापयस इति वक्तव्यम्। १७०—मेघाच्छन्नेऽह्नि दुर्दिनमित्यमरवचनाद् दुर्दिनमित्यभ्रिते वासरे रूढम्। तेन समुपस्थिते विषमे समय इति

वक्तव्यम्। १७१—समुत्पन्नस्य जगतः, समुत्पत्तेरिति वा वक्तव्यम्। उभयत्र शैषिकी षष्ठी। अधिकरणस्यासत्त्वात्सप्तमी नोपपद्यते। १७२—पानीयवृषतः सागरस्य के इत्येवं व्यवहारोऽनुगतो भवति। तथा च कुमारे प्रयोगः—कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये (३।१०॥) इति। १७३—तदाऽहोरात्रो वर्षसहस्रैर्जायेतेत्येवं वक्तव्यम्। अहोरात्रो वर्षसहस्राणि जायेतेत्येवं सामानाधिकरण्येन वा। १७४—फलासङ्गं परिहाय प्रवृत्ते नरे न कर्म लिप्यत इत्येवं वक्तव्यम्। कर्मलेपो हि पुरुषे कर्तरि भवति। तथा च वाजसनेयिनः पठन्ति—एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर इति। कर्म पुरुषं कर्तारं लिम्पतीति तेन कर्मणाऽसौ लिप्यते। तस्मात् फलासङ्गं विहाय प्रवृत्तो नरो न कर्मभिर्लिप्यत इत्येवमपि शक्यं वक्तुम्। भवति च तथाजातीयकः प्रयोगो गीतासु—न मां कर्माणि लिम्पन्तीति। लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति च। अन्यत्राप्येवञ्जातीयकः प्रयोगो लिपेः। लिम्पतीव तमोऽङ्गानीति मृच्छकटिकायाम्। १७५—तस्य च कारावासस्य चेत्येवं वक्तव्यम्। षष्ठ्या हि भेदनिर्देशः क्रियत इति पारम्पर्यागतो व्यवहारः, स मान्यः। १७६—अधिकरोमीत्यस्य स्वीकरोमीत्यर्थः। वशे करोमीति यावत्। तेन न कश्चिद्दोषः। अस्ति चाधिकरोतेरत्रार्थे वृत्तिः—भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्वितेति किराते (१।४३)। १७७—आत्मानं धर्मभ्रष्टं न मन्यन्त इत्येवं न्यासो व्यवहारानुगतः स्यात्। एको नः सर्वेषामात्मा नित्यो विभुश्चेति कृत्वैकत्वे प्रयोगमिच्छन्ति। प्रत्येकं वाक्यपरिसमाप्तं वा तथाविधो व्यवहारः। निदर्शितं चैतद् भूमिकायाम्। १७८—जायस्व म्रियस्वेत्येवाऽयं संसरतीति वक्तव्यम्। १७९—उपानहौ हि बध्येते न परिधीयेते। नहि ते शाटकादिवत् परिधानं भवतः। अत एव प्रतिमुक्तोपानत्कोऽवमुक्तोपानत्क इत्यादयः प्रयोगाः प्रथन्ते। सूत्रकारोऽप्युपानद्बन्धनमिच्छति यदाह—अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु (५।२।९) इति। उदाहृतं च वृत्तिकारेण—अनुपदं बद्धाऽनुपदीना उपानत् इति। १८०—पञ्चसहस्रामिति समासः पञ्चाधिकं सहस्रमाह ननु

पञ्च सहस्राणीति' विदितं विदुषाम् । तेन पञ्चभ्यो वर्षसहस्रेभ्य इति वक्तुमुचितम । तदपि सदोषं विवक्षितार्थासमर्पणात् । न हि ततः पूर्वं वैदिकेतरन्मतं नासीदिति विवक्षति । तेनेतः पञ्चसु वर्षसहस्रेष्विति वक्तव्यम् । असकृच्चायमर्थो विवृत इति नेह वितन्यते । १८१—संस्कृते कदापि कदाचिदिति चावृत्तिप्रतीतये न द्विरुच्येते । आवृत्तेर्वाक्यार्थेन्तर्भावात् । १८२—पण्डिततरैरिति तरबन्तं प्रयोज्यम् । १८३—मन ज्ञाने मनु अवबोधन इति धातू । तयोः स्वीकारो नार्थः । तत्रानुपूर्वो मन्यतिः प्रयुज्यते । १८४—उभयेऽपीति वक्तव्यम् । उक्तोपपत्तिः पूर्वत्र । १८५—मृत्युरप्युपनमेच्चेदित्येवं न्यासो निरस्तसमस्तदोषः स्यात् । नैषा विधा संस्कृते समाश्रियते या लोकभाषायामास्थीयते । अस्ति च प्रातिस्विको वाचां मार्गः । स वेदितव्यः । स शीलयितव्यः । उपपूर्वः सदिश्च गुर्वादेरुपश्लेषे रूढो न शक्यो यत्र तत्र कामतः प्रयोक्तुम् । उपसेदिवान्कौत्सः पाणिनिम् । १८६—पञ्चाशदुत्तरे वत्सरशते ( अध्यर्धे वत्सरशते इति वा ) वक्तव्यम् । एकशतमित्येकाधिकं शतं भवति न तु शतम् इत्यसकृदवोचाम । १८७—परिवृढ इति स्वामी भवति न तु समर्थः । तेनायं प्रयोगोऽसाम्प्रतम् । १८८—ममादेशं शिरसा न वहतीति वक्तव्यं मूर्ध्ना नादत्त इति वा । तृतीयैवात्र व्यवहारानुपातिनीति भूमिकायां वितत्य निदर्शितम् । १८९—अत्र विनार्थानां बहूनां निपातानां प्रयोगः स्वाभाविकीं वाग्धोरणीं विहन्ति । तेन सर्वत्र विनेति निपातः प्रयोक्तव्यः । १९०—दीयतामित्येव पर्याप्तम् । दानशब्देनोच्चरितेन को नाम नूत्नोऽर्थ उपजन्यते येन सोऽपेक्ष्येत । १९१—अस्या वार्ताया मिथ्यात्वे इति वक्तव्यम् । इदं मिथ्येत्यत्र कः सन्देह इति वा । १९२—एकोऽपिरतिरिक्तः, स त्याज्यः । यद्यपि गुरुचरणा गरीयः किमपि पापमाचरेयुरित्येष संस्कृतस्वरसः । १९३—कल्पनयेत्यपास्यम् । गतार्थत्वात् । कपोलकल्पिता इति च वक्तव्यम् । १९४—पारावार इत्यकूपारः समुद्र इत्यादिना समानार्थः । तेन शोकस्य पारावारे नास्तामिति वक्तव्यम् । पारावारे परार्वाची तीरे इत्यमरात्पारावारे नपुंसके । पारं च अवारं चेति पारावारे ।

१९५—एकादशप्रभृतीनुद्धराम इति वक्तव्यम्। एकादशेनेति तृतीयान्तमस्थाने। लोकभाषाच्छायैवेति व्यवहारं विचिदिषुणाऽत्रावधेयम्। १९६—अत्रैकस्मिन्नित्यधिकम्। नगरे इत्यनेनैवैकत्वस्योक्तत्वात्। १९७—कियच्छब्दः संख्याप्रश्ने प्रयुज्यते। एवोऽनर्थकः। बहूनामिति तु प्रयोक्तव्यम्। १९८—तूष्णीक इति तूष्णींशीलो भवति न तु तूष्णीं वाग्यामो वा। प्रकृते ताच्छील्यं नार्थ इति तूष्णीं मौनिन इति वा वक्तव्यम्। १९९—एकशतमित्येकाधिकं शतं भवति। मध्यमपदलोपी समासोऽयम्। एकं च शतं चाध्वर्युशाखा इति सम्प्रदायः। २००—चरणादिशब्दाः प्रायेण द्वित्व एव प्रयोगमर्हन्ति। न च चरणः स्पृश्यते किन्तर्हि चरणौ स्पृश्येते। उपसंग्रहणविधावुभयोः स्पर्शस्य विहितत्वात्। वामेन ( हस्तेन ) वामः स्प्रष्टव्यो दक्षिणेन च दक्षिण इत्युक्तत्वात्। २०१—परं कुतो बुद्धिरियत्येषु जायेत इति, बुद्धिरेतावत्येषामुत्पद्येतेति वा वक्तव्यम्। २०२—भीता इत्येव वक्तव्यम्। भयशब्देन नार्थः। अर्थप्रतिपत्त्यर्थं हि शब्दप्रयोगः, सोऽर्थो भीता इत्युक्ते प्रतिपन्न इति शब्दान्तरमप्रयोजकम्। २०३—उपयामकामः पुरुषो विधिवत् स्त्रियाः पाणिं गृह्णाति, अत एव निर्वृत्ते विधौ सा पाणिगृहीतीति व्यपदिश्यते। न च सा पुरुषस्य पाणिग्रहणे धिक्रियते। तस्मान्निकृष्टवर्णेन ( सह ) पाणिग्रहणं करोतीति वाक्यं दुष्टम्। निकृष्टवर्णेन ( कर्तरि तृतीया ) पाणिग्रहणं ( पाणिपीडनमिति वा ) प्राप्नोति, निकृष्टवर्णेन पाणिं ग्राहयति, निकृष्टवर्णेनोदुह्यत इति वा वक्तव्यम्। २०४—महत्यधिकारे नियुक्तोपि चेत्स्याद् इत्येवं वक्तव्यम्। एषा संस्कृते शैली शिष्टानाम्। एकेन वा वाक्येन महत्यधिकारे नियुक्तोपि चेत्कौसृतिको भवत्यवश्यं मानाद् हीयत इति वक्तव्यम्। २०५—बह्व्यो जनानां मण्डल्यस्तमुपतिष्ठन्तीत्यादि निर्दुष्टः प्रकारः। समुदायस्य समुदायिनोऽवयवा भवन्ति न तु समुदायानां समुदायो नाम कश्चिदर्थोऽस्ति। २०६—भवन्ति चेदित्यादेर्ग्रन्थस्य स्थाने आद्येऽन्तःक्रियावत्त्वमभ्युगतं भवति, अन्त्ये जडाभिन्नत्वमापततीति वक्तव्यम्। आद्य इत्यस्य स्थाने यदि पूर्वः पक्षः, अन्त्ये इत्यस्य च

यद्युत्तर इति च शक्यं वक्तुम्। सोऽपि वाचि प्रतियत्नः। २०७—अहो परिजनस्य प्रमाद इत्येवं स्वप्ननाटके पाठः। एतमेवार्थमाधुनिकोऽन्यथा प्रत्याययति वाक्पद्धतेरपरिचयात्। प्रमादस्य महत्त्वं त्वहो इति निपातेनैवाभिहितम्। कियत्त्वेन च महत्त्वं विशेषयितुमिष्टम्, तद्वैशिष्ट्यमप्यहो इत्यनेनैवोक्तम्। शब्दशक्तिस्वाभाव्यात्। अनल्पमुपक्रियते निपातैः, उच्चावचेष्वर्थेषु निपतन्तीति। २०८—प्रलापोऽनर्थकं वच इत्यमरात् प्रलापोऽनर्थक एव भवतीत्यव्यभिचाराद्विशेषणमपार्थकम्। २०९—अतिदुर्लभः सुदुर्लभः, सुदुरापः, दुष्प्रलम्भ इत्येतेषु यः कोपि शब्दः कामतः प्रयोज्यः। करोतिना सर्वधात्वर्थानुवादःक्रियत इति पक्षसमाश्रयेण त्वतिदुष्कर इत्यपि न दोषाय। २१०—अत्र पिधातृशब्दस्तृन्नन्तो न तु तृजन्तः। ताच्छील्यस्य विवक्षितत्वात्। न लोकाव्ययनिष्ठाखलर्थतृनाम् इति कृद्योगलक्षणायां षष्ठ्यां निषिद्धायां मुखं पिधातृभ्य इति स्यात्। तत्र द्वितीयासमासस्य प्राप्तिरेव नेति द्वितीयासमासो न। अकुर्वाणा इत्यत्र ताच्छील्ये चानश् बोध्यः। मुखं पिदधद्भ्यस्तदपिदधानाः श्रेयांस इति न्यासः शोभनतरः स्यात्। २११—निर्वाणतामेष्यति, निर्वाणा भविष्यति, निर्वास्यतीति वा वक्तव्यम्। निर्वाणं हि निष्पूर्वाद् वातेर्निष्ठायां रूपम्। २१२—मूत्रार्थे मूत्रणेच्छायां वा लघुशङ्काशब्दो न क्वापि कविभिः प्रयुक्तपूर्वो दृश्यते लोके वाढं प्रचरितोपीति लेखे नादरणीयः। २१३—मुण्डमिश्रश्लक्ष्णेत्यादिसूत्रे वस्त्रात्समाच्छादन इति पठितम्। समाछादने यो वस्त्रशब्दस्तस्माण्णिजित्यर्थः। संवस्त्रयति वस्त्राछादनं करोतीत्यर्थः। तेन प्रकृते संवस्त्रयन्तीति प्रयोगो न संगच्छते। चर्म हस्तयोर्बध्नन्त्यासजन्तीति वा वक्तव्यम्। २१४—पितुर्भवनमिति वक्तव्यम्। पित्रादयः सम्बन्धिशब्दास्तत्र सम्बन्धाख्यायकः स्वशब्दो नापेक्ष्यते न च दीयते। मातरं नमति, पितरं नमतीत्यादौ यथा। २१५—एकदा दैवाच्चिरस्येत्यादि वक्तव्यम्। संयोगशब्दो व्यतिकरवृत्तिर्न। संयोगः सम्पर्कः संनिकर्ष इत्यनर्थान्तरम्। २१६—पाठकोऽध्यापको भवति। पाठयतेर्ण्वुलि रूपम्। यद्यपि पठतेरपि ण्वुलि शक्यमिदं रूपं व्युत्पादयितुं प्रयोगस्तु पठितरि न भवति। तेन

तेन पठका इति वक्तव्यम्। पठतीति पठः। पचाद्यच्। स एव पठकः। स्वार्थे कन्। तथा च भारते प्रयोगः—पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः। सर्वे व्यसनिनो मूर्खा यः क्रियावान्स पण्डितः॥ ( वनपर्वणि यक्षयुधिष्ठिरसंवादे )। २१७—भवद्दृष्ट्येति वक्तव्यम्। परिहाय वा दृष्टिशब्दं भवत इति षष्ठ्यैवार्थाभिधानं साधीयः। तत्र सम्बन्धे षष्ठी वेदितव्या। २१८—अन्यद्धि प्रवृत्तिनिमित्तं शब्दानामन्यच्च व्युत्पत्तिनिमित्तमिति पुनातीति पावक इति व्युत्पत्तिलभ्येऽर्थे सत्यपि पावकशब्दोऽग्निमेवाह न त्वर्थान्तरम्। तेन पावनं पवितारं वेति वक्तव्यम्। २१९—आशिषमुच्चार्य, यजमानमाशिषाऽऽशास्येति वा वक्तव्यम्। २१०—मौनमिति भावप्रत्ययान्तम्। मुनेर्भावो मौनम्। तेन मौनी समभवदिति वक्तव्यम्, मौममातिष्ठदिति वा। २२१—स्वापोत्स्वप्नोपममित्यस्य स्थाने उत्स्वप्नायितमिवेति वक्तव्यम्। उत्स्वप्नशब्दो बहुव्रीहिः, उत्पन्नः स्वप्नोऽस्येति, न तूत्पन्नश्चासौ स्वप्नश्चेत्युत्स्वप्न इति प्रादिस्तत्पुरुषः। उत्स्वप्न इवाचरतीत्युत्स्वप्नायत इति प्रयोगः। तत्र बहुव्रीह्यर्थ एव घटत इति व्यक्तम्। सर्वथोत्स्वप्नशब्दः स्वतन्त्रो न प्रयुज्यत इति प्रयोगचुञ्चवः। २२२—अश्वारोहा विंशतिः कोटय आसन् इत्येवं वक्तुमुचितम्। विंशतिकोटिरिति समासोपि दुर्घटः। विंशतिः कोटयः समाहृताः, विंशतेः कोटीनां समाहार इति वा विग्रहे विंशतिकोटीति द्विगुः स्यात्। २२३—वञ्चकैरिव व्यवहृतमिति वक्तव्यमुपमानोपमेययोर्वचनसाम्याय। वतिर्वा प्रयोक्तव्यः। वञ्चकवद् व्यवहृतमिति। २२४—घृणार्हमिति तु वक्तव्यम्। तदर्हतीत्यधिकारे (५।१।६३) घृणाशब्दाद्यत्प्रत्ययविधेरसत्त्वात्। २२५—परमात्मना शपे न जात्विदमकरवम् इत्येवं वक्तव्यम्। सत्येन शापयेद्विप्रमित्यादिप्रयोगाल्लिङ्गात्तृतीयैव साध्वी। २२६—चरणौ गृहीत्वेति वक्तव्यम्। स्पृशतिरपि शक्यः प्रयोक्तुम्। धृञ् धारणे इति धातुस्तु नात्रार्थे प्रयुक्तपूर्वः। २२७—क्रुद्धः किं मां करिष्यीत्यादिषु भारते ( वन० २०६।२४ ) मामिति द्वितीयादर्शनात्प्रकृतेपि शासनमतिक्रामन्तं तं न किमपि कर्तुं शक्नोति व्यवहारानुगं स्यात्। नामाने तु (द्वितीयेङ्के)

भगवन्कुसुमायुध ! येन त्वं रूपशोभया निर्जितोसि तस्य त्वया न किमपि कृतमिति नायिकोक्तौ षष्ठीदर्शनादतिक्रामतोपि तस्येति यथास्थितमपि साधु स्यात्। २२८—सुकृतदुष्कृताभ्यामिति वक्तव्यम्। सुकृतदुष्कृते हि प्रतियोगिनी। २२९—अत्र यावच्छब्दमन्तरेणाप्यत्यन्तसंयोगलक्षणया द्वितीयैवार्थलाभात् किं तेन। २३०—न्यायाधीश इत्याधुनिकैः कल्पित-श्शब्द इति न समादरमर्हति। अत्रार्थेऽक्षदर्शकः प्राड्विवाक आधिकरणिक इति वा प्रयोज्यम्। २३१—सहस्रं वर्षाण्यायुरिति वक्तव्यम्। आयु-र्जीवनकालः। स विशेष्यते। विशेषणेन च समानाधिकरणेन भवितव्यम्। नात्र संबन्धो विवक्ष्यते येन षष्ठी साम्प्रतिकी स्यात्। २३२—महत्तराः प्रतिमार्चका इत्यस्य स्थाने प्रतिमार्चकतरा इति वक्तव्यम्। अर्चक इति क्रियाशब्दः। योतिशयेनार्चति सोऽर्चतितराम्, स एव कृदन्तात् तद्धित-वृत्त्याऽर्चकतर इत्युच्यते। २३३—अचौरमपि तं चौर्येणाभियुयुजिर इत्येवं वक्तव्यम्। अभिपूर्वो युजिर्दोषेण योजनायां वर्तते, धनाद्यागमस्य कुतस्त्यता-पृच्छायां च। यो नामाभियुक्त इत्युच्यते स पृष्टो भवति, दोषेण योजितो वा। तस्मादचौरमपि चौर इत्यभियुयुजिर इत्यपार्थो न्यासः। २३४—उप-योगिनी, उपयोगवती, उपकारिका, औपकारिकीति वा वक्तव्यम्। कृत इति शक्यमुपेक्षितुम्। २३५—अत्र कृतः प्रतिसंस्कारः पूर्वत्रेति नेह पुन-रुच्यते। २३६—न हि संस्कृते गभीरं निद्राणो गम्भीरं निद्रातीति वा क्वचिद् व्यवह्रियते। गाढत्वेन पुनर्विशेष्यते निद्रा। गाढं निद्राणः। गाढा निद्रेति। गाढनिद्रया ( उपलक्षितः ) सुखं शेत इति वक्तव्यम्, अयं गाढं प्रसुप्त इति वा। २३७—दिवा वा दोषा वेति वक्तव्यम्। अयं हि श्रेया-न्न्यासः। प्रतियोगिनोरर्थयोरव्ययेनैवाभिधानात्। भारतस्य विरोधे, भारतस्य विरोधाय, भारतं प्रतीति वा वक्तव्यम्। तत्र विरोधे इति निमित्तसप्तमी। विषमुद्वमन्तीत्यस्य बहूनपशब्दान् प्रयुञ्जते बलवन्निन्दन्ती-त्यर्थः। २३८—गङ्गाधरेणाहल्यायै यदावेदितं तत्तन्मुखेरितैरेव शब्दैराख्ये-यमिति शैलीं शीलयन्ति शिष्टाः। गङ्गाधरश्च संनिहितां पुरोवर्तिनीमहल्यां युष्मच्छब्देन परामृशेन्न तु परोक्षार्थवाचिना तच्छब्देन। तेन त्वया राज्य-

हिताय कश्चिद् बालो दत्तक इति स्वीकार्य इत्येवं न्यासः कार्यः। २३९—संस्कृतस्यावश्याध्येयतासम्पादनेन निमित्तेनेत्यादि वक्तव्यम्। न हि निमित्तेऽर्थे उपलक्ष्यमिति पुरा प्रयुञ्जते वाग्योगविदः। अनिवार्यताशब्दश्च विवक्षितमर्थं नासन्देहं स्फोरयतीति पराकरणीयः। २४०—नान्ये इदं विचारयन्तीति वक्तव्यम्। अनुकृतिरियं लोकभाषाया बालेष्वेवोपपद्यते न प्रौढेषु। २४१—सत्यां सभ्यताभासायामस्यां सभ्यतायाम् इत्येवं वक्तव्यम्। तथाकथितशब्द आधुनिकैर्भाषान्तरस्यानुकुर्वद्भिः कल्पित इति नादृत्यः। २४२—परीक्षामुत्तीर्णाश्छात्राः प्रत्येकं पुरस्कारेण संभावयिष्यन्त इति वक्तव्यम्। प्रत्येकमिति वीप्सायामव्ययीभावः। अव्ययीभावश्च क्रियाविशेषणमिति प्रयुज्यते, शब्दशक्तिस्वाभाव्यात्, न तु कर्त्रादिकारकत्वं भजते। २४३—उद्ग्रीवं करोतीत्युद्ग्रीवयति। णिच्। धात्वर्थनिर्दिशे ण्वुल्वक्तव्य इत्युद्ग्रीवयतेर्ण्वुल्। तेनोद्ग्रीविकेति सिद्धम्। उद्ग्रीवीकरणमर्थो ननूद्ग्रीवी भवनम्। तेन प्रकृतेऽसङ्गतिर्विस्पष्टा। तस्माद् उद्ग्रीविकेति प्रयोगो न युज्यते। द्रोहोदयावसर इति तु वक्तव्यम्। अभ्युत्थानावसर इति वा। २४४—सुखस्य ध्रौव्यं नास्तीति वक्तव्यम्। भावे प्रत्यय इष्यत इति भावे ष्यञ् कृतः। २४५—णिजधिक उत्पूर्वश्चरतिः प्रयोक्तव्यः। शब्द उच्चरति तमन्य उच्चारयति। भाष्येऽपि णिजधिक एवोच्चरतिः प्रयुक्तः। येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्द इति। २४६—देवदत्तोऽकामोऽपि गार्हस्थ्यधुरामवहदित्येवं वक्तव्यम्। नेदृशेऽर्थे बाधतिः प्रयुज्यते। २४७—का कथा विद्यालयस्येत्येवं वक्तव्यं किन्तु कथ्येत विद्यालयस्येति वा। २४८—अकृतविवाहायाः स्वसन्ततेः शैशवापक्रान्तिमित्यादि वक्तव्यम्। परिणीतशब्दमधिकृत्य बहूक्तमधस्तात्। २४९—सिन्धुं प्रति बिन्दवो यथेति वक्तव्यम्। २५०—सुमनोगुच्छक इत्येव संस्कृतम्। सुमन इति सकारान्तं प्रातिपदिकम्। २५१—अत्र नयनयोर्मुकुलत्वम रूपणं व्यर्थं दृगनिमीलितेरिविशेषणेनैव तदर्थगतेः।

२५२—पुनःशब्दः पक्षान्तरे वर्तमानो वाक्यादौ न प्रयुज्यते । दुर्दुरूटा इति च वक्तव्यम् । दुर्दुरूटाः पुनरित्येवं न्यासः कार्यः । २५३—कल्याणोदर्काय कल्पत इति तु युक्तं वचः स्यात् । उदर्कः फलमुत्तरमित्यमरः । तेनोदर्कोऽन्तो न भवति । २५४—पितरि सावकशब्दोऽप्रसिद्धः । न च प्रकृतिप्रत्ययपरिचयोऽस्तीति नूत्ना अप्रयुक्ताः शब्दा कल्प्याः । २५५—विनयिनि गुणाः, गुणिनि श्रीः, श्रीमत्याज्ञा, आज्ञापके च राज्यम् इत्येवं प्रक्रमसाम्यं भवति । २५६—लगनमिति भ्वादेर्लगतेर्ल्युटि रूपम् । प्रयोगस्त्वस्य धातोरत्यर्थं विरलोऽर्वाक्तनश्च । अत्रार्थे व्यसनमासङ्गो ऽभिनिवेशो वा प्रयोक्तव्यः । २५७—जनसामान्यस्येति वक्तव्यं जनसमष्टेरिति वा । जनसाधारणं तु जनैः साधारणं भवति । २५८—सक्षण इति निर्व्यापारस्थितिको भवति न तु सव्यापारः । क्षण उत्सव इत्यप्यर्थो न सुष्ठु संगच्छते । अनुप्रासप्रिय एव कश्चिद्द्रभसादेवमाहसमर्थसाङ्गत्यमनपेक्षमाणः । शिष्यशिक्षापरायणा इति तु वक्तव्यम् । २५९—संस्कृतज्ञा इति वक्तव्यं संस्कृतं विद्वांस इति वा । संख्या गणना विचारो विवेकश्च भवति । तद्वान्संख्यावान् विचारवान् विवेकी विमर्शकः । अमरेण तु पण्डितपर्यायत्वेन संख्यावानिति पठितम् । विविच्य तु पर्यायवचनाः प्रयोक्तव्या न साङ्कर्येण । २६०—अध्ययनमित्यधिकम् । अधीयानानामित्येव पर्याप्तम् । अथवाऽधीङ् क्रियाविशेषे पठितोपीह क्रियासामान्ये वर्तते । यथा शपथं शपत इत्यत्र शपिः । तेन न कश्चिद्दोषः । २६१—अस्मिन्वस्तुन्येते गुणा एते च दोषा इतीत्येवं वक्तव्यम् । न हि मुधा स्वाभाविकः पदक्रमोऽन्यथनीयः, अनपेक्षितं वा पदं प्रयोजनीयम् । २६२—प्रायेण समाप्तिरभूदिति वक्तव्यम् । आविष्काराः समाप्तप्राया इति वा । प्रायो भूम्न्यन्तगमने । समाप्तेः प्रायो भूमा बाहुल्यमिति समाप्तिप्रायः । अत्र क्लीबत्वं कुतः स्यात् । २६३—शिक्षाभासया यया शिक्षया···सा नार्हति समादरमिति वक्तव्यम् । शिक्षाया आभास इवाभासोऽस्या इति शिक्षाभासा । अथवा शिक्षावद् आभासत इति शिक्षाभासा । पचाद्यच् । यथा हेतुवदाभासते इति हेत्वाभासः । २६४—अत्र प्रसाद इति कृपया गतार्थ इति प्रसादभूतमित्यपनीय फलितमित्यादि पदं

देयम् । २६५—कर्तुमापत्येतेत्यस्य स्थानेऽकामेनापि क्रियेत, अवशमपि क्रियेत, अनिच्छयाऽपि क्रियेतेति वा वक्तव्यम् । कर्तुमित्यादिन्यासे लोकभाषानुकरणरभसादापत्येतेति भावे कर्मणि वा लकारः कथं युज्येतेति नेक्षितं प्रयोक्त्रा । आपततेरर्थोपि तस्यानवगतः । स सद्यः पतने प्रतिभाने वा वर्तते । सोर्थश्च प्रकृते न संगच्छत इत्यनुदितस्पष्टम् । २६६—भूयानत्रातिक्रमः । विषयेऽनेकस्मिन्नित्येव साधु । अनेकमन्यपदार्थे ( २।२।२४ ) इति चात्र लिङ्गम् । तथा च प्रयोगः—तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः ( काव्यादर्शे १।३३ ) इति । पूर्णरूपेण साकल्यमिति चैकार्थाभिधायि पदद्वयम् । केवलं विभक्ती भिन्ने, तेन पूर्णरूपेणेति शक्यं परिहर्तुम् । उपसीदन्तीति च प्राप्नुवन्तीत्यर्थेऽशक्तम् । विवृतोस्यार्थो विशेषात्पूर्वत्रेति नेह भूयो वितन्यते । २६७—महयन्तीति वक्तव्यम् । महीङ् कण्ड्वादिः पूजालाभे वर्तते न पूजायाम् । २६८—विद्वांस एव द्वार् इति रूपकम् । समस्तरूपके विद्वद्द्वारेति वक्तव्यम्, व्यस्तरूपके च विद्वद्भिर्द्वारेति । षष्ठ्या नार्थः । २६९—विशिष्टा विभिन्ना विधा यस्य सम्मानस्य स विविधः । तत्र विविधं सम्मानमर्हन्तीति वक्तव्ये विविधाभिर्विधाभिः सम्मानमर्हन्तीति वाक्प्रपञ्चेन न किमपि कार्यम् । वाग्डम्बर एव स भवति । २७०—च्विविषये सातिर्विधीयते विकल्पेन कार्त्स्न्ये गम्यमाने । अत्र च्विविषयोऽभूततद्भाव एव नास्ति । कार्त्स्न्यमभिविधिर्वास्ति नवेति विचार एव नोन्मिषति । लवणमयो न स्यादिति तु वक्तुमुचितम् । २७१—मन्दाक्षम् इति ह्रियि रूढमिति मन्ददृष्टेर्मन्ददर्शनस्येति वा वक्तव्यम् । २७२—मरीचिकामिवेति वक्तव्यम् । मरीचिरिव मरीचिका । इवार्थे प्रतिकृतौ कन् । २७३—स्वस्य भावः स्वभावः । स सहजः सहभूरेव भवतीति नार्थो विशेषणेन । संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवद् इत्युक्तेः । इह च व्यभिचारो नास्ति । २७४—यदि सिंहासनमधिकरोत्वित्यस्य सिंहासनं स्वीकरोत्वित्यर्थस्तर्हि न दोषः । यदि चाधिकारो नियोग इत्यर्थमाचष्टे तर्हि सिंहासनेऽधिक्रियेतेत्येव निर्दोषं स्यात् । २७५—पठितमस्या अस्तीति पठिता । अर्श आदिभ्योऽच् ।

एवं व्युत्पत्तिसंभवेऽपि दुर्लभोऽस्य प्रयोगः। व्याक्रियन्ते शब्दा व्याकरणेन न तु क्रियन्त इत्यसकृदुक्तमधस्तात्। तेन नहि यत्र तत्रार्शआदित्वं कल्पयित्वा नूत्नाश्शब्दाः कार्याः। किरातटीकायां मल्लिनाथेन द्रौपदी-मधिकृत्यापठितेत्युक्तम्—अत एवेयमपठितापि साधु वक्तीति युज्यते विस्मय इत्यर्थः (२।३) इति। तत्र अविद्यमानं पठितं पठनं यस्याः सेति विग्रहः। पठिताशब्दस्तु पाठवत्यर्थे न कचित्प्रयुक्तपूर्वः। तेन पठितवत्याः श्रुतवत्याः साक्षराया इति वा वक्तव्यम्। २७६—यथायथं यथास्वं भवति। तस्माद् यथातथमिति वक्तव्यम्। २७७—कार्यं नाम क्रियात्वं न व्यभिचरति, तेन क्रियात्मकमिति विशेषणं व्यर्थम्। किमपि साध्यं साध्येतेति शब्दान्तरै-रपि सोर्थः शक्योभिधातुम्। २७८—आयुर्विंशतिवर्षावरं त्रिंशद्वर्षपरं भवतीति वक्तव्यम्। यथास्थितेत्वर्थे एव कश्चिन्नास्ति। २७९—मिल संगमन इति तुदादिः। अयमकर्मकः। अस्य संगतिमात्रमर्थः, न तु लब्धिः। रूप्यकाणां विंशतिं दक्षिणामेकैकश्छात्रो लभते इत्येवं न्यासः कार्यः। अव्ययीभावाः क्रियां विशिंषन्ति। तेन च्छात्राः प्रत्येकं (यथा स्यात्तथा) लभन्त इति वक्तव्यम्, एकैकश्छात्रो लभत इति वा। २८०—ज्ञानिनामादर्शेन गुरुणा भवितव्यम्। आदर्शो दर्पणो भवति। आदर्श इवादर्श इत्यौपमिकः प्रयोगः। यत्र स्वरूपं यथावद् दृश्यते स आदर्शः। किंलक्षणा ज्ञानिनो भवन्तीति तत्र भवति गुरौ द्रष्टुमिष्यते। नृपतीनामदर्श इत्यादेश् च कादम्बर्यादिषु दर्शनादयमेव प्रकारः शिष्टजुष्ट इति संदेहानवकाशः। २८१—अध्यापकैरध्यायकैश्चेति न्यासः शोभनतरः स्यात्। २८२—जन-सेवाकार्यकलापेष्विवेति वक्तव्यम्। यथास्थिते तु कार्यकलापानां विद्यायाश्च साहचर्यं गम्यते तच्च न विवक्ष्यते। अपिशब्दश्चैवं व्यतिरिक्तो भवति। कार्यकलापाश्चाभिरुचेर्विषयो न भवन्ति। कार्यकलापैः सहाभिरुचिरित्यन्वये त्वस्थाने सहशब्दः। नहि सहशब्दो विषयं वक्ति, किन्तर्हि साहचर्यम्। २८३—वैद्यस्य संरक्षणे भवतीत्यपास्य वैद्येन संरक्षितं वर्तते। संरक्षण इति सप्तमी किमर्थिका। वैद्ये च महच्छब्द उपपदं न देयम्। तथा चोक्तम्—शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके

द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते ।। इति । २८४—जीवद् दशायाम् इत्यस्य जीवतोर्दशेत्येव विग्रहः । का सेति च नोक्तम् । पितरौ जीवन्तौ प्रीणयेयुरिति वक्तव्यम् । २८५—इति परिचितवन्तः स्युः । परिचिनोतेः कर्तरि क्तवतुः । परिचिता इत्यत्र कर्मण्येव क्तः, स चार्थमभिवाञ्छितं नार्पयति । २८६—उपयोगिनो ग्रन्था इति वक्तव्यम् । उपयुक्ता नियमपूर्वकमधीता भवन्त्युपयोगं वा येन केन प्रकारेण नीताः । २८७—आवश्यकतेति शब्द एव नास्तीत्यसकृदुक्तमधस्तात् । तेनेह अपेक्षितमर्थजातं संविधेयं कल्प्यमिति वा वक्तव्यम् । २८८—राजनैतिका इत्यत्रोभयपदवृद्धिर्दुर्लभा । अनुशतिकादिषु राजनीतिशब्दस्यान्तर्भावे प्रमाणविरहात् । तेन राजनीतिशब्दात् तदधीते तद्वेदेत्यण् प्रसक्तः, अनिष्टरूपप्रसङ्गश्च । तस्मान्नीतिविदो नृपनीतिविदो वेति वक्तव्यम् । २८९—वाक्यादावेव सामान्योपक्रमेऽशक्यमिति शक्यं विलिङ्गवचनमपि प्रयोक्तुं न तु मध्येऽवसाने वा । २९०—वाक्ये नञ् प्रसज्यप्रतिषेधे वर्तते क्रियापदेन चान्वेतीत्यत्रमानमिच्छुर्दिलीपसूनुः श्रीरघुर्नासीदित्यर्थः स्यात् । अथावश्यसमाधेयं नेच्छुरिति नशब्देन सुप्सुपासमासोऽभ्युपेयताम् । २९१—ककुदमिति शब्दोऽकारान्तः क्लीबे । तस्यावस्थायां गम्यमानायां लोपः शिष्यते न तु यत्र तत्रानियमेन । तेन ककुदं नृपाणां नृपतिककुदमिति वा वाच्यम् । २९२—सूत्रधारस्य वेषं परिगृह्णन्तीति सूत्रधारभूमिकायां वर्तन्त इति वा वक्तव्यम् । पात्रं त्वभिनेता भवति । सूत्रधारस्य पात्रं वहन्तीत्यनर्थकः पदसन्दोहः । २९३—इच्छावचनश्छन्दशब्दोऽदन्तः । तेन स्वच्छन्दमनुवर्तन्त इति वक्तव्यम् । २९४—अत्र सहार्थस्य संगत इत्यत्र समूशब्देनैव गमितत्वात्सहशब्दो व्यतिरिक्तः, स हेयः । २९५—आङ्पूर्वो धृञ् धारण इति धातुराश्रयदाने वर्तते न त्वाश्रयणे । कविकृतिभ्य आश्रयं दत्त्वा, तदाधारो भूत्वेति विपरीतार्थोपलब्धिः । अवहाराधारावायानामुपसंख्यानमित्यत्र आध्रियतेऽस्मिन्नित्याधार इति व्युत्पत्तिः काशिकायाम् । २९६—धर्मोऽर्थकामयोः प्रभवतीत्येव पर्याप्तम् । तत्र शेषे षष्ठ्यैवोपर्यर्थस्य गमितत्वात् । २९७—पारीण इति

शक्यं द्विधा व्युत्पादयितुम्। राष्ट्रावारपाराद् घखावित्येतद्विहितेन शैषिकेण खप्रत्ययेन, अवारपारात्यन्तानुकामं गामीत्यनेन वा खप्रत्ययेन। पूर्वत्र खप्रत्ययस्य तत्र जातः, तत्र भवः, तत्र प्राय भवः, तत्र संभूत इत्यादयोऽर्थाः। पारीणः पारे जात इत्यादिरर्थः। स च नेह घटत इत्युपेक्ष्यः। उत्तरत्र पारं गमिष्यतीति पारीण इत्येवार्थः, न त्वर्थान्तरमस्ति। तेन पारीण इति प्रभुः समर्थो वा न भवति। न चायमत्रार्थे प्रयुक्तपूर्वः। तस्मादप्रभुरक्षम इति वा प्रयोज्यम्। २९८—शरणं गृहरक्षित्रोरिति वचनाच्छरणं रक्षितृजन उच्यते। तेन शरणागतानिति वक्तव्यम्। २९९—काङ्ग्रेससदसा पतिरिति वृतः (पतित्वे वा वृतः) प्राप्ताधिकारोऽसावित्यादिर्विन्यासोऽपहतदोषः स्यात्। काङ्ग्रेससदसः सभापतिरित्येवं विन्यासे एकत्र सदःशब्दोऽपरत्र सभाशब्दः किमपि स्खलति श्रवणयोः। मनोनीत इति सर्वथा दुरूहम्। लोकभाषाज्ञैरिदानीमेव कल्पितमिदं संस्कृतज्ञानां नार्हति मात्रयाऽपि समादरम्। ३००—घट चेष्टायामिति भूवादिषु पठ्यते। तस्य पतनमर्थस्तु न क्वापि दृष्ट इति निराकृत्यमेतत्। ३०१—लोमापि नामीयतेत्येवं वचनं व्यवहारानुगं भवति। तत्र मीङ् हिंसायामिति दिवादिरनुदात्तेदकर्मको धातुः। ३०२—राजसत्ता राजभाव इत्यनर्थान्तरम्। तेन नात्र दोषः। अस्मिन्देशेधिकृतमिति तु दुष्टम्। अधिकरणं नाम नियुक्तीकरणम्, अधिकारवत्त्वसम्पादनं प्रसह्य स्वीकरणं वा भवति। अधिकारलाभस्त्वस्य नार्थः। राजसत्ता देशेधिकृता, देशमधिकृतवतीति वा वक्तव्यम्। ३०३—अत्र यदीति च चेदिति च समानाभिधेये प्रयुक्ते। एकतरं तु शक्यं परिहर्तुम्। तेन यदिशब्द एव परिहार्यः, लाघवात्। सति यदौ तदेति वक्तव्यं भविष्यति। ३०४—हार्दमित्यभिप्रायार्थेऽशक्तम्। हार्दमिति हृदिस्थं भवति। प्रेम वा। प्रेमा ना प्रियता हार्दमित्यमरः। तेनायं नो हृद्गतोऽभिप्राय इति वक्तव्यम्। ३०५—एतेन वयं पुस्तकानां पूज्यतासमयं स्मारिता भवाम इत्येवं वक्तव्यम्। एतेन पुस्तकपूज्यतासमयोऽस्मत्स्मृतिविषयतां नीयत इत्येवं वा वाच्यम्। ३०६—शतं क्रोशान्विप्रकृष्टेभ्य इति, शतात्क्रोशेभ्य इति वा

वाच्यम्। पूर्वत्र कालाध्वनोरत्यन्तसंयोगे इति द्वितीया। ३०७—सम्भालयितुमिति चिन्त्यम्। भल आभण्डने चुरादिरनुदात्तेत्। आभण्डनं निरूपणम्। प्रकृते तु नायमर्थः संगच्छते। इमं कार्यभारं वोढुमिति वक्तव्यम्। ३०८—आकृष्टिशक्तेरुपज्ञातेति उपज्ञाया इति वा प्रशस्यः श्रीन्यूटन इत्येवं वक्तव्यम्। तत्रोपज्ञाया इति हेतौ पञ्चमी। श्रेयःशब्दो मोक्षेण समानार्थकः। तथा ह्याह—मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतमिति। यत् किञ्चित्प्रशस्यतरं तदपि श्रेयः। उपज्ञायाः श्रेय इति तु नार्थं कमप्यर्पयति। ३०९—दशवर्ष एवेति वक्तव्यम्, वयसा दशहायन इति वा। दशवर्षावस्थेति दुर्घटः समासः। ३१०—यत्परिणाम इत्येव। स्वरूपशब्देन नार्थः। यत्परिणामभूत इति तु शक्यं वक्तुम्। ३११—आचार्यचरणेभ्य इति वक्तव्यम्। तत्पुरुषे समास उत्तरपदं चरणशब्दो बहुत्वे वर्तमानः पूजावचनो भवति न त्वेकत्वे। ३१२—स्थगनमावरणं भवति न रोधनं प्रतिषेधनं वा। प्रत्यादेशनमिति तु वक्तव्यम्। यथा विक्रमोर्वशीये जलदसमयं प्रत्यादिशामीति पुरूरवस उक्तिः। ३१३—व्यापारशब्दः कार्यासङ्गमेवाह न तु क्रयविक्रयव्यवहारम्। तेन रत्नानां व्यवाहरदिति वक्तव्यम्। व्यवहृपणोः समर्थयोरिति कर्मणः शेषत्वविवक्षायां षष्ठी। कर्मणि तु द्वितीया स्यादेव। रत्नानि व्यवाहरदिति। ३१४—अनुषङ्गादागतमानुषङ्गिकम्। अनुषङ्गः प्रसङ्गः परम्परासम्बन्धः। अत्र तेनार्थेन नार्थः। तस्माद् दैवाद्, यदृच्छयेति वा वक्तव्यम्। ३१५—न हि ष्यञः षित्त्वात्सुलभो ङीष् सर्वत्र समुत्पाद्यः। न हि भवति ब्राह्मणस्य भावः कर्म वा ब्राह्मणीति। एवमत्रापि ङीष्सौलभ्येपि पातिव्रत्यमित्येव प्रयोक्तव्यम्। व्याक्रियन्ते हि शब्दा व्याकरणेन न तु क्रियन्ते। ३१६—अधिमृत्युशय्यमित्येव ऋजुर्न्यासः। न हि स्वस्य कोषपरिचयो न घोष्यः। शब्दडम्बरस्तु परिहार्यः। ३१७—कृते इत्यस्थाने। तस्य कारणादित्येवार्थः। स च प्रकृते नोपपद्यते। षष्ठ्यपि च। तदर्थस्यानुपलम्भात्। तेन महान्तं कालं मौनमालम्ब इत्येवं वक्तव्यम्। अत्यन्तसंयोगे द्वितीया। यावच्छब्दो वा प्रयोज्यः, तद्योगेपि द्वितीयोप-

पत्तिमती भविष्यति। चतुर्थ्या अपि प्रसङ्गो न। तादर्थ्यविरहात्। ३१८—कः सिद्धान्त इति तु, सिद्धान्तस्तु वादिप्रतिवादिभ्यामित्यादि वक्तव्यं व्यवहारानुगमाय। पूर्वत्र विकल्पे विनिश्चेयमित्यनुषञ्जनीयम्। ३१९—वृणुत इति वाच्यम्। वृङ् सम्भक्ताविति क्र्यादिः प्रयोक्तव्यः। सम्यग् भजनं संभक्तिः। वृञ् वरण इति स्वादिस्तु प्रायेणाङ्पूर्वः प्रयुज्यते प्रच्छादनं चाह। ३२०—केवलः प्लवतिस्तरणे वर्तते। यल्लघु तत् प्लवते। उडुपस्तु प्लवः कोलः। आङ्पूर्वस्त्वभिषेके वर्तमानः सकर्मको भवति। तेन गभीरार्थाप्लुतेति वक्तव्यम्। ३२१—हर्षपरीत इत्यर्थे हर्षगद्गद इति पदमशक्तम्। गद्गद इति वाचि स्खलनं भवति। सगद्गदं ब्रवीति। सगद्गदया वाचा ब्रवीति। ३२२—अधिकारिपदमधिष्ठायेति तु साधीयः स्यात्। अध्यास्येति वा प्रयोक्तव्यम्। ३२३—यज्ञमाजहार, यज्ञं वितेने इति वा प्रयोज्यम्। अत्राङ्पूर्वो हरतिर्वा प्रयुज्यते विपूर्वस्तनोतिर्वा। विश्वजिता यज्ञेनेजे इति वा तृतीयायोगो व्यवहारानुपाती। ३२४—नात्रानादराधिक्यमभिप्रेयते भावलक्षण इति षष्ठ्या अप्रसङ्गः। अचिरप्रवृत्तोयं रक्षकपूर्वैः कृतो गोब्राह्मणघात इत्येव विवक्षितं न त्वस्माननादृत्य स प्रवृत्त इत्यर्थः। तेन भावलक्षणा सप्तमी साधुः स्यात्। पश्यत्स्वस्मास्विति। ३२५—परीक्षासु लम्बते, परीक्षाः संश्रयत इति वा वक्तव्यम्। निर्भरशब्दस्य तु नायमर्थ इत्यसकृदवोचाम। ३२६—प्रतिपक्षिणो दुष्टमप्युत्तरमभ्युपगमवादेनाङ्गीकृत्य प्रकारान्तरेण तस्य व्यवस्थापन इत्यादिरुपन्यासोऽनवद्यः स्यात्। दुरुत्तर इति भावलक्षणा सप्तमी प्रयुक्ता। न तु विषयसप्तमीति विस्पष्टम्। भावलक्षणायाश्च सप्तम्या नैव विषयः। तत्र हि यस्य भावेनान्यस्य तद्व्यतिरिक्तस्य भावो लक्ष्यते तत्र सप्तमी विधीयते। अत्र दुरुत्तरसद्भावेन स्वस्यैवाङ्गीकाररूपो भावो लक्ष्यते। प्रपञ्चितोऽयं विषयो भूमिकायामिति तत एव विशेषोऽवधार्यः। ३२७—लोभाय धर्मं बलिं ददतीति वक्तव्यम्। संमुखे इति व्यर्थम्। धर्मस्येति षष्ठी दुरुपपादा। धर्म एव बलिर्न तु धर्मसम्बन्धी कश्चिद् बलिर्नाम। ३२८—गत इति भूतकालः श्वो भवितेति भविष्यत्कालेन

सम्बध्यमानः साधुः। धातुसम्बन्धे प्रत्ययाः (३।४।१)। ३२९—समैर्वर्गः सङ्घसार्थौ तु जन्तुभिरित्यमरात्सङ्घ इति प्राणिसमुदाये रूढः। तेनानर्थसंनिपात इति वक्तव्यम्। ३३०—चक्षुषी क्रोधताम्रे भवत इति वा रोषारुणिते इति वा वक्तव्यम्। ३३१—करिणां घटना घटेति कोषात्करिसमुदाय एष शब्दो रूढः। मेघमालायां तु कादम्बिनीति प्रयुज्यते। तेन तमस्विन्यः कादम्बिन्य इति निर्दुष्टं स्यात्। ३३२—निष्क्रान्त इति निःसृतो बहिर्गत उच्यते। अतीतोऽतिक्रान्तो व्यपगत इत्यादिष्वन्यतमं प्रयोज्यम्। ३३३—समस्येव समस्येत्यौपमिकः प्रयोगः साधुः। दैनन्दिनमिति तु न क्वचित्प्रयुक्तपूर्वम् इति नादृत्यम्। दिने दिने, अनुदिनमिति वा वक्तव्यम्। ३३४—श्रेयान्स्वधर्मो विगुणः पारक्यात्स्वनुष्ठितादित्यत्र मनौ दर्शनात्पारक्यशब्दोऽष्टाध्याय्यामव्युत्पादितोऽपि साधुः। शिष्टप्रयोगात्। परं पारक्यः परकीयो भवति, न तु पर इति प्रकृते प्रयोगोऽस्थाने। परे इति तु वक्तव्यम्। ३३५—संकीर्णं प्रकीर्णं व्यतिकीर्णं संमिश्रमित्यनर्थान्तरम्। संकुचिते तु नास्य प्रयोगः। तेन सोऽयं हृदयसंकोच इति वक्तव्यम्। उपमानेन लिङ्गमास्थाय तु सेयं हृदयसंकुचिततेति वक्तव्यम्। ३३६—'उपस्थितमवसरमुपयोगं न नयन्ति' इत्येवं शिष्टशैल्यनुविहिता भवति। अवसरस्य लाभं गृह्णन्तीत्यस्यावसरं लभन्त इत्येवार्थः। ३३७—पदाब्जे इत्येकवचनं न युक्तम्। पदादीनां द्वित्वाविष्टा जातिः प्रायेणेति द्विवचनमेव युक्तम्। निलीन इति तिरोहितो भवति। पदाब्जे अभिलीन इति वक्तव्यम्। पदाब्जे इति द्वितीयाद्विवचनम्। अभिपूर्वो लीङ् सकर्मकः, यथा भुजतरुवनं मण्डलेनाभिलीन इत्यत्र मेघदूते। आश्रितश्चार्थः। ३३८—प्रेक्षामिति वक्तव्यम्। प्रेक्षेति बुद्धिपर्यायः। तथा चामरे पाठः—प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः। प्रेक्षणशब्दस्तु तत्राप्रसिद्धः। ३३९—शोभना विधा सुविधा भवति, न तु सौकर्यम्। केचित्सौविध्यमिति सौकर्यार्थे साधु पश्यन्ति। तन्न। सुकरमित्यर्थे सुविधानमिति भवति, न तु सुविधम। आतो युच् (३।३।१२८) इति खलर्थे युच्। ततोऽसति सुविधशब्दे सौविध्यमिति

भावप्रत्ययान्तं सुतरां दुर्लभम्। सुविधाशब्दात् स्वार्थे ष्यञि सौकर्यं नार्थं इति सुविधासौविध्ये उभे अपि हेये। सौकर्यमित्येव प्रयोगार्हम्। ३४०—कथनस्येदं तात्पर्यम् इत्यपूर्वः संस्कृते प्रकारः। एतदुक्तं भवतीति प्रयोज्यम्। अयमर्थ इति वा। ३४१—वारयितुमिति वृङ् संभक्तावित्यस्मात्तुमुनि रूपम्। अर्थस्तु विवक्षितो नार्प्यते। तेन हारयितुमिति वक्तव्यम्। ३४२—कुशलवृत्तान्तमिमं श्रुत्वेति वक्तव्यम्। संवादः संलापो भवति नोदन्तः। ३४३—प्रथमं तावच्छिशिरस्तत्रापि रात्रिरिति शिष्टजुष्टः प्रकारः। यथा शिशिरर्तुरित्यत्र ऋतुशब्दोऽतिरिक्तस्तथा रात्रेः समय इत्यत्र समय शब्दः। रात्रिः समय एव तु भवति। किं च रात्रेरिति षष्ठ्यपि दुःसमाधाना। ३४४—अवर्धतेत्यपास्य प्राक्रामत्, प्रासरद् इति वा वक्तव्यम्। वृधिस्तु नात्रार्थे प्रयुज्यते। ३४५—प्रभावयति प्रभून् शक्तिमतः करोतीत्यर्थं इति नेह कश्चिद्दोषः। ३४६—चरणाघातैरिति वक्तव्यम्। चरणावताडनैर्वा। चपेटश्चपेटा वा विस्तृताङ्गुलौ करे वर्तते। तथा चामरः—पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलाविति। नहि भवति करचपेट इति। कुतश्चरणचपेटः। ३४७—उच्चैरुच्चारयामासेति वक्तव्यम्। उच्चरतिस्तूर्ध्वगतौ वर्तते—उच्चरति वाष्प इति। अतिक्रमणे च—धर्ममुच्चरत इति। प्रभाषणे तु णिजधिक एवोत्पूर्वश्चरतिर्वर्तते न केवलः। व्यक्तवाचां समुच्चारण इति चात्र लिङ्गम्। ३४८—तपांसि तप्यमान इत्येवोचितम्। अर्जयन्नित्यर्थः। तपस्तपः कर्मकस्यैवेति कर्मकर्तरि यक्, लटः शानच्च। कर्मकर्तर्येव तपेरत्रार्थे प्रयोगो भवति न तु शुद्धे कर्तरि। तपस्तपतीति प्रयोग एव नास्ति। ३४९—वेदैः संमितो ज्ञाननिधिरस्ति इत्येवं वक्तव्यम्। संमितस्तुल्यो भवति न तु समितः। समितः संगतो भवति। ३५०—परं कारणमिति वक्तव्यम्। निदानं त्वादिकारणम् इति परत्वेन तस्य विशेषणमनर्थकम्। ३५१—वर्षास्विति वक्तुमुचितम्। आपः सुमनसो वर्षा अप्सरःसिकतासमाः। एते स्त्रियां वहुत्वे स्युरित्यमरवचनाद्वर्षाशब्दो नित्यं वहुवचनान्त एव प्रयोगस्य विषयः। तत्र चायं प्रावृषि वर्तते न वर्षे। ३५२—पर्यन्तभूः परिसर इत्यमरः। विस्तविसर इति तु

वाच्यम्। अनुप्रासेनापहृतधीस्त्वन्यथा वक्ति। ३५३—इयं विंशतितमी (विंशी इति वा) शताब्दीत्येवं वक्तव्यम्। विंशतेः शतानां समाहार इति विंशतिशती। एवं संख्यैव केवला प्रत्याय्यते न तु संख्येयमपि किंचित्। ३५४—यवनानीदेवनागर्योरन्यतरया लिप्येत्यादि वक्तव्यम्। अन्यतरशब्दे एकवचनमेव युक्तम्। द्वयोर्मध्ये यः कश्चिदेकोऽन्यतरशब्द-वाच्यो भवति। ३५५—वासरानक्षपयत्स इति वक्तव्यम्। क्षै क्षये इति णिच्सहकारेण प्रयुञ्जते वाक्यज्ञाः। क्षिपतिः क्षिप्यतिर्वा नात्रार्थे व्यव-ह्रियते। ३५६—एकं पातुं शीलं येषां ते एकपायिनः। क्षीरस्यैकपायिन इति क्षीरैकपायिणः। शिवभागवतवत्समासः। कुमति चेति नित्यं णत्वम्। ३५७—मा स्म देवः (वेधा इति वा) कस्यचिल्ललाटे परीक्षां भवित्रीं लिखत् इत्येवं विन्यसो निरस्तसमस्तदोषो जायते। अयमेव च व्यवहारः। ३५८—वयमन्यान्परीक्षामहे न त्वात्मानमित्येव वक्तव्यम्। ३५९—परमे-श्वरो नः कार्याणि प्रत्येकं परीक्षत इत्येवं न्यासः कार्यः। प्रत्येकमिति वीप्सायामव्ययीभावः। अव्ययीभावाश्च क्रियाविशेषणानि भवन्ति प्रायेणे-त्यसकृदवोचाम। ३६०—प्राचीनत्वमिति वक्तव्यम्। पराचीनत्वं तु वैमुख्यं भवति। ३६१—इदं पुनरुक्तम्। इदं विमृष्टं प्राक्। ३६२—प्रायेण किशोर इत्यश्वबाल उच्यते। बाल्यं च वय इत्येवं वाक्यं साधू स्यात्। ३६३—यद्यप्यमरे लालस इति शब्दो लालसया समानार्थकः पठितः। तद्यथा—कामोऽभिलाषस्तर्षश्च सोत्यर्थं लालसा द्वयोः। यादवस्तु लालस-शब्दं सतृष्णपर्यायेषु पठति। तद्यथा—लोलुपो लोलुभो लोलो लालसो लम्पटोपि चेति। तस्माद् द्रव्यलालस इति सप्तमीसमासो न तु व्यधि-करणो बहुव्रीहिः। तेन नात्र कश्चिद्दोषः। परकाष्ठाया इति षष्ठी तु दुष्यति। परया काष्ठयेति तु वक्तव्यम्। तस्य द्रव्ये लालसायाः परा काष्ठाऽऽसीत् इति वाक्यान्तरं वाऽऽश्रेयम्। ३६४—एकद्वा एवात्र संगृह्यन्त इत्येवं वाच्यम्। एका वा द्वे वेत्येकद्वाः। ३६५—समं जातम्। इति वा सह जातमिति वा। सहजमिति स्वाभाविकेर्थे रूढम्। ३६६—अत्र कर्मणि लङि अौह्यन्तेति वक्तव्यम्। कर्तरि तु न्यस्यन्दन्तेत्यर्थः स्यात्।

३६७—द्वैधीभावे इति वक्तव्यम्, संकटे इति वा। द्विविधाशब्दस्तु नात्रार्थे प्रयुक्तपूर्वो दृष्टः। द्वितीया विधा द्विविधा स्याद् द्व्यवयवा विधा वा। ३६८—मित्रं ज्वरोऽग्रहीदिति वक्तव्यम्। एष व्यवहारः। ३६९—हृदयङ्गमं संगतं भवति वचश्चेत्तद्भवति। 'क नु ते हृदयङ्गमः सखा' इत्यत्र कुमारसंभवे (४।२४) हृदयङ्गमो हृद्य इत्येवं व्याख्यातं मल्लिनाथेन। तेनाऽभिप्रायो हृदयं गतोऽभूदिति वक्तव्यम्। ३७०—विनोदं विहायेति वक्तव्यम्। अन्तराऽन्तरेणविनादयः शब्दा असान्निध्यं विरहमभावं वाऽऽहुः। प्रकृते विनोदव्यतिरिक्तं प्रयोजनं नास्तीत्यर्थः। ३७१—सामान्योपक्रममिदं विशेषाभिधानमिति भुज्यमानानीत्यत्र नपुंसकत्वं न दोषाय। यथा—न च देहवता शक्यं त्यक्तुं कर्माण्यशेषत इत्यत्र शक्यशब्दे सामान्योपक्रमान्नपुंसकत्वमेकत्वं च। ३७२—दायं दशांशान्कृत्वेति वक्तव्यम्। अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन्निति रघुवंशप्रयोगेऽन्धकारशब्दे यथा द्वितीया तथा प्रकृतेपि दायशब्दे द्वितीयैव युक्ता। ३७३—मुनित्रय्या इति वक्तव्यम्। त्रयशब्देऽवयवे तयपोऽयच्। अयं संख्यायां संख्येये च वर्तते। यदा संख्यायां तदा स्वभावत एकत्वे वर्तते। ३७४—सम्मानोऽस्तीति वक्तव्यम्। सन्मानस्तु सतां मानो भवति। ३७५—नासीराधिकारान्वयव्यतिरेकायत्ते नो जीवनमरणे इति व्यवस्थितमासीत्। एवमुच्यमानं संस्कृतं वाग्व्यवहारमनु विधत्त इति मन्ये। कथं वा दोषज्ञा मन्यन्ते। ३७६—बहहं तेभ्यो धारयामीति कृतवेदितया निवेदयामि। एवं हि शिष्टा अभिप्रायं प्रवेदयेयुः। आभारीति तु संस्कृते ऋणिनि न कश्चित्प्रयुज्यते। कार्तज्ञ्यमिति साध्व्पि परुषाक्षरमिति परिहरेयुर्वाङ्माधुरीं स्पृहयन्तः। ३७७—नहि दण्डो दीयत इति व्यवहारः। दण्डो नाम प्रणीयते, धार्यते निपात्यते वा। तेन प्रजासु कीदृशा दण्डा प्रणीयन्त, अधार्यन्त, न्यपात्यन्तेति वा वक्तव्यम्। ३७८—एवं विपरीतमुक्तं भवति। संस्कृतवाचमेवोपजीवन्तीति तु वक्तव्यम्। ३७९—चाटु करोतीति चाटुकारः। अयमर्थस्तु प्रकृतेऽसंगतः। चाट्वनुवर्तनाभ्यामिति तु वाच्यम्। ३८०—उत्तरोत्तरमपमान्यमानोऽप्यसौ न स्वसमाचारं समाधत्त

इत्येवं वक्तव्यम्। सर्वत्र प्रचरद्भाषाच्छायेयं भवत्युत परिशुद्धमकृतकं संस्कृतमित्यत्र प्रतिजागरितव्यम्। ३८१—त्वया तु नाहं ते वचोऽङ्गी करिष्यामीति शप्तमिव भातीत्येवं वक्तव्यम्। शपथ शपत इति च काचित्कः प्रयोगः। शपथं धरतीति तु न क्वचिदपि श्रुतः। ३८२—कोपनाऽऽसी-दित्येव पर्याप्तम्। ताच्छील्ये युच्। तेन प्रकृतिशब्दो गतार्थः। ३८३—उत्साहोऽवसीदतीत्येवं वक्तव्यम्। स्वाहा देवहविर्दाने इत्यमराद्-दीयमानं हविः स्वाहा न, येन प्रकृतः प्रयोगः साधुः स्यात्। लक्षणया देवता-सम्प्रदाने हविषि प्रयोग इति चेदनग्नौ तत्कथम्? न ह्यत्राग्निः श्रूयते। न चाध्याहारो युज्यते। ३८४—यथा ता इष्टानिष्टयोः समं तस्यावधेयवचना अभवन्नित्येवं वक्तव्यम्। ३८५—रक्षितारमवरयमिति वक्तव्यम्। चिञ् चयने इति धातुर्वरणे न वर्तते। ३८६—मुक्तामयं हारमजहात्पौष्पीं स्रजं चाधादित्येवमुपन्यासः साधुः स्यात्। हारशब्दो मुक्तामन्तरेणापि मौक्तिक-सरमाह, स्रक् च माला भवति। माला च ग्रथितं माल्यमाह। तेन पौष्पीमिति विशेषणं विस्पष्टार्थम्। ३८७—संस्कृते प्रत्यञ्चाशब्दो नास्ति। मौर्वी ज्या शिञ्जिनी गुण इत्येत एवामरेण स्वे नामलिङ्गानुशासने पठिताः। ३८८—अनन्तरकर्तव्यायेति वाच्यम्। ३८९—गद्यं सर्वसाधारणमासीत् गद्येन व्यवहारो वा सर्वेषां साधारण आसीदिति वक्तव्यम्। ३९०—शिष्टा ग्रन्थकारा इति वक्तव्यम्। लेखकस्तु लिपिकरो भवति। तत्रैवार्थेऽस्य रूढिः। ३९१—अनुरुन्धे इत्यस्यानुसरत्यनुबध्नातीति वार्थः। अनो रुध कामे इति तु दिवादिरात्मनेपदी। समयाल्पता मां बलात्संक्षेपं कारयतीति वक्तव्यम्। मां संक्षेपाय बलवत्प्रेरयतीति वा वाच्यम्। ३९२—प्रधनमिति युद्धनामसु पठितम्। तद्यथा—युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् इत्यमरे पाठः। तेन सधनं महाधनं धनीति वा वक्तव्यम्। ३९३—समर्थयत इत्यस्य चिन्तयतीति वार्थः, उपोद्बलयतीति वा। न समर्थाः, न प्रभवः, न प्रभवन्तीति वा वाच्यम्। ३९४—धनकामुका इत्यदुष्टम्। कमेर्भाषायाम-निषेध इति षष्ठीसमासः। कमलेति लक्ष्म्या नाम। साऽस्यास्तीति कमली। एवं व्युत्पत्तिसौष्ठवेऽपि कमलीति विष्णुं नाभिधत्ते, तेनेदं

परिहार्यम् । ३९५—राजसूयेन यियक्षु र्युधिष्ठिर इत्येव व्यवहरणीयम् । राजसूये यागे साधनभूतद्रव्यबुद्धिं विधाय तृतीयोपपाद्यते । ३९६—अयोध्यां प्रति प्रस्थान इति वक्तव्यम् । अयोध्याप्रस्थानमिति तु दुर्घटः समासः । ३९७—असमञ्जसे पतितेत्यस्य स्थानेऽनौचित्यसङ्कटे पतितेति वक्तव्यम् । समञ्जसमिति न्यायो भवति । अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् इत्यमरः । असमञ्जसं चान्यायः । सोऽर्थश्च नात्र घटत इति अनौचित्यसंकटे पतितेति वक्तव्यम् । ३९८—बन्ध्याऽफलोऽवकेशी चेत्यमरे वनौषधिवर्गे पाठः । ऋतावपि फलरहितो वृक्षो वन्ध्य उच्यते । तत्साम्यादृतुमत्यपि या स्त्री निरपत्या भवति सा वन्ध्येति कीर्त्यते । पुरुषे तु नायमभिलापो दृश्यते । अनपत्य इत्येव तु युज्यते वक्तुम् । ३९९—उदासीनमुद्विग्नं वेति वक्तव्यम् । चट स्फुट भेदने इति चुरादिषु पठ्यते । उच्चाटनं हिंसनं भवति । ४००—विनयादर्शा इमे परिचारका इति व्यवहार्यम् । विनयस्यादर्शा इति वा विनयमादर्शयन्तीति वा विग्रहः । ४०१—निरूप्य प्रक्रमः कार्य इत्येवं व्यवहारो नुगतो भवति । ४०२—नियतकालभृत्यास्वीकरणं परिक्रयणं भवति न तु क्रयणमात्रम् । तेन परिं परिवर्ज्य केवलं क्रीता इति वक्तव्यम् । ४०३—अनेकधेत्यपास्य बहुधाऽसकृदिति वा प्रयोज्यम् । अनेकधेत्यत्र धाप्रत्ययः प्रकारे । बहुधेत्यत्र तु अविप्रकृष्टकालिक क्रियाभ्यावृत्तिगणने धाप्रत्ययः । ४०४—स्वपाठ्याऽऽत्मपाठ्येति वा वक्तव्यम् । निजशब्दस्तु स्वकीयार्थकः । निजं सहजं भवति, अत एव तात्पर्यत आत्मीयं तदुच्यते । नास्य स्वशब्दवत्सर्वनामत्वमस्ति । ४०५—दृष्टिपथं गोचरयतीत्येवं विपरीतमुक्तं भवति । दृष्टिपथं गोचरं विषयं करोतीत्यर्थः प्रतीयते । दृष्टिपथस्य गोचरो भवतीति तु विवक्षितम् । अतो दुष्टो न्यासः । ४०६—शिक्षाशुल्काद् विमोक्षणेनेति वक्तव्यम् । न हि शिक्षाशुल्कं नामाऽऽगोभवति यत्क्षम्येत । क्षमापणमिति त्वपप्रयोगः । आपुकोऽप्राप्तेः । ४०७—भाषणानि चक्रुरिति वाच्यम् । भाषणं नाम क्रियते न च दीयते । ४०८—चरणेनावताडितमिति वक्तव्यम् । द्विवचनेन नार्थः । बहुवचनमपि शक्यं प्रयोक्तुम्—नैसर्गिकी सुरभिणः कुसुमस्य

सिद्धा मूर्ध्नि स्थिति नं चरणैरवताडनानीत्यत्र भवभूतिप्रयोगे यथा। वसुंधराधिपत्ये पार्ष्णि दत्त इत्यपि शिष्टजुष्टा स्मृतिः। ४०६—यज्ञमाहार्षीदिति वक्तव्यम्, व्यतानीदिति वा। ४१०—केषु चिज्जीवेषु घ्राणशक्ति र्नास्त्येव, परेषु सा प्रवृद्धा लक्ष्यत इत्येवं वक्तव्यम्। रक्षतिर्हि नात्रार्थे प्रयुज्यते। इदंजातीयकेष्वधिकरणनिर्देश एव व्यवहारानुपाती। ४११—रूढ्याऽस्पृश्यानामिति वक्तव्यम्। तथाकथितानामिति विशेषणं तु विपरीतार्थमाह। तथाशब्दो हि सत्यवचनः, यथा वितथशब्दे। अस्पृश्या इति तेषां मिथ्याऽभिलाप इति विवक्षति। ४१२—स्वशब्द आत्मवचन एकत्वे प्रयुज्यत आत्मवत्। एको नः सर्वेषामात्मेति, प्रत्येकं वाक्यपरिसमाप्तिरिति वैकत्वमुपपन्नम्। ४१३—ऊर्मिषु महत्सूल्लोलकल्लोलावित्यमरादुल्लोलकल्लोलौ समानाभिधेयौ। तेन लोलैः कल्लोलैरिति वक्तव्यम्। ४१४—घुट परिवर्तने भौवादिक आत्मनेभाषः। घुट प्रतिघाते तौदादिकः परस्मैभाषः। एतयोर्द्वयोरप्यर्थः प्रकृते न संगच्छत इति घोटित इति दुष्प्रयुक्तम्। तेन कण्ठो बलवन्निरुद्ध इति वक्तव्यम्। कण्ठो निपीडित इति वा। ४१५—लुठि लुठि स्तेय इति भ्वादिषु पठितौ। लुठ विलोडन इति तुदादिषु। प्रकृते स्तेयं विवक्षितमिति लुण्ठितसर्वस्व इति वक्तुमुचितम्। ४१६—पूर्णस्य शरच्छशाङ्कस्येति वक्तव्यम्। अल्पोऽर्थो बहुश्च शब्दडम्बर इति शारदानां वाचि लक्ष्यते न विशारदानाम्। ४१७—सम्प्रदायादागतं साम्प्रदायिकं भवति। सम्प्रदायश्च गुरुशिष्यपरम्परयाऽऽगतमनुशासनम्। तेनैकतमस्मिन्निकाये इति वक्तव्यम्। अथ सधर्मिणां स्यान्निकाय इत्यमरः। एकधर्मवतां समूहो निकाय इत्युच्यत इति तदर्थः। ४१८—बहु कार्यं करोतीति दिवाविभेति सूत्रेण टः। शुद्धयौगिकश्चायं शब्दः कविना प्रयुक्तः। तथापि खलप्वि अस्य रूढिः। तथा च कोषः—खलपूः स्याद्बहुकर इति। रूढिश्च बलीयसी योगादिति बहुकरशब्दो बलात्खलप्वं स्मारयति। तदनिष्टम्। तत्परिहार्यम्। सतां बहूपकारक इति तु वक्तव्यम्। ४१९—तदीयमुपकारभारं शिरसा वहाम इति वक्तव्यम्। आभार इत्यप्रयुक्तम्। ४२०—मातापित्रादिषु तद्भक्तेष्वपीति वक्तव्यम्। अभिपूर्वो

भवति न्यंक्करणे बाधने वा वर्तते न तु रक्षणेऽवेक्षणे वा। ४२१—इदमतोऽर्थादापद्यत इत्येवं वक्तव्यम्। अयं तर्ह्यार्थिको र्थ इति वा वक्तव्यम्। ४२२—पदात्पर एव निघातयुष्मदस्मदादेशा भवन्तीति वाक्यादौ व इत्यादेशो न प्राप्नोति। ४२३—न चवाहाहैवयुक्ते इत्यनेन चकारयोगे युष्मदस्मदादेशौ ते मे इत्येतौ न प्रसज्येते। तव च मम चेति वक्तव्यम्। ४२४—अन्तर् इत्यधिकरणवृत्ति मध्यमाह। नेदमन्तरङ्गाभिधाने शक्तम्। अन्तः शब्दोऽव्ययम्। तेन तद्विशेषणं नपुंसकं युज्यते तिमिरगहनमिति। सर्वमन्तर्गृहमिति वक्तव्यम्। ४२५—वैदिकं ते सुमतं मां परिग्राहयेति वक्तव्यम्। न हि मते कश्चिदादीयते किन्तर्हि मतं किमपि कश्चिदादत्ते। ४२६—स्वस्य भावः स्वभावः। स सहज एव भवतीति व्यभिचाराभावादनर्थकं विशेषणम्। भवभूतिस्तु स तस्य स्वो भावः प्रकृतिनियतत्वादकृतक इति विशेषणमपि प्रयुङ्क्ते। तत्तस्य स्वं दर्शनम्। ४२७—धूम्रं धूमवद्भवति न तु धूमः। उद्गच्छतीत्यपास्याऽऽक्रामतीति प्रयोज्यम्। ४२८—रोमाञ्चपुलकौ समानार्थकौ। समानार्थकाश्च पर्यायेणार्थं ब्रुवन्ति न तु युगपत्। तेन रोमाञ्चो जायत इत्येव साधु। बहुवचनेन नार्थः। ४२९—दह भस्मीकरण इति धातुः। नात्र भस्मीकरणमर्थः। तेन ज्वलयन्ति ज्वालयन्तीति वा वक्तव्यम्। ४३०—मुखरो वाचालो भवति। मुखरयति शब्दवन्तं करोतीत्यर्थो न तु शब्दयति शब्दमुच्चारयतीत्यर्थः। तेन कुटिललोकैः शब्दितं व्याहृतं वेति वक्तव्यम्। ४३१—अतिमात्रयाऽतिमात्रमिति वा साधु स्यात्। पूर्वत्र प्रकृत्यादित्वात्तृतीया। ४३२—स्वस्य दुष्कृतानामिति वक्तव्यम्। आत्मवाची स्वशब्द एकत्वे प्रयुज्यते नियमेन। ४३३—प्राणिमात्रमिति वक्तव्यम्। कृत्स्नाः प्राणिनः प्राणिमात्रम्। मात्रं कार्त्स्न्येऽवधारण इत्यमरः। मात्रशब्देनैकवचनान्तेनैव कार्त्स्न्येऽभिहिते बहुवचनेन नार्थः। ४३४—मुखेनोत्तरित इति वक्तव्यं वाचेति वा। तद्धितेन नार्थः। ४३५—सुवर्णमयः सम्पत्तिशाली वा बभूवेति वक्तव्यम्। अर्थादिति ल्यब्लोपे कर्मण्युपसंख्यानमिति पञ्चम्यां साधु। तथापि मध्येवाक्यमेवं प्रयोगो न दृश्यते। ४३६—तूष्णीमर्थे सुखे जोषमिति नानार्थवर्गे

ऽमरः। जोषमिति तूष्णीम् भवति न तु तूष्णीम्भावः। तेनाऽभज-दित्यनेनानन्वितं भवति। तेन जोषमास्तेति वक्तव्यम्। ४३७—गायनो गाथको भवति। ण्युट् चेति ण्युट्। तस्माद् गानेन गीतेनेति वा वक्तव्यम्। ४३८—मनुष्याणां स्वभावो यत्ते परेषां हास्यास्पदतायाः साधने यत्नं न शेषयन्तीति वक्तव्यम्। सर्वनाम्नां प्रधानपरामर्शित्वमिति मनुष्याणां स्वभाव इत्यसमासेन निर्देशः। ४३९—ऋषिमुनीनां शक्त्या स्वशक्तिर्न जातु तुलनीयेति वक्तव्यम्। अत्र सहशब्देन नार्थः। अत्रार्थे तुलां करोति तुलयतीति प्रयोगो भवति न तु तुल उन्माने इत्यस्य चौरादि-कस्य। तथा च मेघदूते प्रयोगः—प्रासादास्त्वां तुलयितुमलं यत्र तैस्तै-र्विशेषैरिति। ४४०—अर्थादिति पदं वाक्यादौ पदान्तरेणानन्वितं स्वातन्त्र्येण न प्रयुज्यते। तेन अयमर्थ इति वा एतदुक्तं भवतीति वा वक्तव्यम्। ४४१—ग्रन्थपत्त्राणां पूर्वपूर्वेषामधस्तान्निवेशादुत्तरोत्तरेषां चोपरिष्टाद् इति यत्पूर्वपत्त्रेषु विन्यस्तं तदधस्तादुक्तं भवति यदुत्तर-पत्त्रेषु तदुपरिष्टादिति व्यपदिश्यते। अत्र च किञ्चिदुक्तपूर्वं तेनाधस्ता-न्निगदितमिति वक्तुमुचितम्। ४४२—वसनमाच्छाद्य, वसनं निवस्येति वा वक्तव्यम्। यद्यपि स्तृञ् आच्छादने इति स्तृणोतिराच्छादने पठित-स्तथापि शय्यामास्तृणोतीत्यादिषु प्रयुज्यते न तु परिधानेऽस्य प्रवृत्तिः। ४४३—संसरतिर्योन्यन्तरोपसंक्रमणे रूढः। ये देहाद् देहान्तरं गच्छन्ति ते संसारिणः। परिक्रामन् इति पर्यटन्निति वा वक्तव्यम्। गवेष मार्गणे इति चुरादिष्वदन्तः पठितः। तेन णिचि गवेषयमाणे इति साधु स्यात्। ४४४—महत्यप्यस्मिन्प्रयत्नेऽसन्तुष्टा इत्येवं वक्तव्यम्। प्रयत्नो ह्यसन्तोषस्य विषय इति वैषयिक्या सप्तम्या भवितव्यम्। ४४५—विकरालनक्रचक्र-वालाध्युषितमिति वक्तव्यम्। पारावारो हि नक्रचक्रवालेनाध्युष्यते। उपान्वध्याङ्वस इत्याधारस्य कर्मत्वम्। यद्यध्युषितमित्यत्र कर्तरि क्त इति मन्यसे, मिथ्या ते दर्शनम्। सूत्रकारो ह्यधिपूर्वस्य वसेराधारस्य कर्मसंज्ञां शास्ति। सा कुप्येत्। बाहुभ्यां तरतीति बाहुकः। नौद्व्यचष्ठन् इति ठंस्तद्धितः। तरणमिह प्लवनम्। ४४६—को ऽसहायः समुत्तरीतुमलम्

इत्येवमल्पाक्षरतरं वाक्यं प्रयुञ्जीत प्राज्ञः। वृथा वाचं न तन्वीत। ४४७—स दिने दिने दीनतरामवस्थां प्रतिपद्यत इति वक्तव्यम्। दीनादिति हेयम्। दीनादित्यत्र पुंस्त्वं नपुंसकत्वं वा कथम्। न हि ब्रूमः स पटोः पटुतरो भवतीति। किन्तर्हि स पटुर्भूत्वा पटुतरो भवतीति। ४४८—इतो वर्षे बङ्गेषु नवद्वीपमण्डलान्तर्गते प्रथिते कृष्णनगरे प्रमथनाथ इत्यादि-रूपन्यास एव निरस्तसमस्तदोष आश्रेयः। वर्षमेकं व्यतीतमिति मध्ये-वाक्यमनन्वितं गडुभूतं पदकदम्बकम्। ४४९—प्राणपणेनाऽपि नित्य-मित्यादि वक्तव्यम्। प्राणाः पण इत्येकवचनं श्रेयः। पण इति ग्लहो भवति। प्राणाः पणत्वेन रूप्यन्ते तेन युक्तमेकवचनम्। ४५०—न हि तेन तस्य सुभाषितस्यार्थो लोकव्यवहारेऽनुभूत इत्येवं वक्तव्यम्। स्वस्या-नुभवः स्वानुभवः। स्वस्येति कर्तरि षष्ठी। अनुभवो नाम ज्ञानं भवति। प्रत्यक्षं च ज्ञानविशेषः। ज्ञानेन प्रत्यक्षज्ञानं लब्धमित्यर्थः प्रत्यायितो भवति। न चैष प्रत्यायिययिषित इत्यलमनेन वाग्डम्बरेण। ४५१—राजराज इति कुबेरस्य रूढिः। तथा चामरः—मनुष्यधर्मा धनदो राजराजो धनाधिप इति। तेन परमराजो महाराज इति वा वक्तव्यम्। ४५२—साक्षात्प्रत्यक्ष-तुल्ययोरित्यमरे साक्षाच्छब्दः प्रत्यक्षपर्यायः पठितः। तथापि लक्ष्येषु क्रियाविशेषणत्वेन प्रयुक्तो दृश्यते न तु विशेषणमात्रत्वेन। तेन प्रत्यक्षत्वा-दिति वक्तव्यम्। ४५३—अन्यासामादर्तारो मानयितार इति वा वक्तव्यम्। अवेक्षका इति वा। ४५४—मादृशामित्येव। विषये इति तु परिहार्यम्। सम्बन्धमात्रं तु विवक्षितं न वैषयिकमधिकरणम्। ४५५—स्नेहसर्वस्वमीष्ट इति वक्तव्यम्। ४५६—यथातथमिति वक्तव्यम्। यथायथं यथास्वमिति भवति। यथा ते यथायथं गृहाणि सम्प्रस्थिताः। स्वं स्वं गृहं प्रति गन्तुं प्रवृत्ता इत्यर्थः। ४५७—वल्गेति रश्मिवद्बहुत्व एव प्रयुज्यते। तथा च प्रयोगः—आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यत इति। ४५८—राष्ट्रभाषात्वं गायसीत्येव संक्षिप्तं वचो निर्दुष्टं च। किं च राग इति गीतेन समानार्थको न। आङ्पूर्वो लपिरपि संबोधने वर्तते नोच्चारणे। ४५९—वैषम्ये गम्ये द्वौ क्वौ प्रयुज्येते, न तु कुत्रशब्दो

द्विरुच्यते। तथा चोक्तं द्वौ क्वौ महदन्तरं सूचयत इति। ४६०—हस्त-शतव्यवहिता द्वे द्वे शते हस्तिनः संस्थापिता इत्येवं वक्तव्यम्। हस्तशतान्तरा हस्तशतान्तरिता इति वा। द्विशतमिति द्व्यधिकं शतमित्यस्मिन्नर्थे प्रयुज्यते न शतद्वये। संख्याशब्दाः क्वचिद् वृत्तौ वीप्सायां वर्तन्त सप्तपर्णादिवत्, तेन द्विशब्दस्य द्विः प्रयोगो नापेक्ष्यते। ४६१—एकतस्तावन्निसर्गात्तामसी भाद्ररजनी, अपरतो नीलनीरधरपटल-संस्तरेणेत्यादि वक्तव्यम्। घटाशब्दो मेघमालां नाहेत्युक्तमधस्तात्। ४६२—सन्निभवनं परिष्कृत्य समरज्यत सुदर्शनेन रागेणेत्येवं वक्तव्यम्। रागेण हि रज्यतेऽर्थः, तेन रक्तं रागादिति लिङ्गात्। रक्तस्याकारो वर्णः। रागजन्यो हि स भवति न तु रजनसाधनम्। ४६३—कषायेण रक्ता काषायी। तत्र रागशब्देन नार्थः। किं च रागो रजनसाधनं वा भवति लौहित्यं वा, न जातु वर्णः। ४६४—वार्ता प्रवृत्तिर्वृत्तान्त उदन्त इति पर्यायाः। वार्तां पृच्छति वृत्तान्तं जिज्ञासत इत्यर्थः। तेन न कश्चिद्दोषः। ४६५—दिष्ट्येत्यव्ययं क्रियाविशेषणत्वेन प्रयुज्यते सहर्षमिति चार्थः। तेन वादेन नार्थः। वर्धने वाक्प्रयोगोऽन्तर्भूतः। वर्धयामो वृद्धिमाशंसामह इत्यर्थः। तत्र सम्शब्दोऽस्थाने। संवर्धनं हि पोषणं भवति जलादिना पादपादीनां पय आदिना वा शिशुकादीनाम्। तदप्ययुक्तः। ४६६—अत्र व्यवच्छिदिर्व्यवच्छेदनपूर्वकेऽपनयने वर्तत इति सूच्या अपादानता। अपादाने चाहीयरुहोरिति तसिः। ४६७—वाराणसीमेवाधिकृत्य प्रस्तूयतां विचार इत्येवं वक्तव्यम्। परिग्रहः स्वीकारो भवति। समानमेव सामान्यम्। नहि सामान्यात्सामान्यतरं नाम किञ्चिदस्ति येन सामान्यादित्यत्र पञ्चमी विभक्ते इति पञ्चम्युपपद्येत। ४६८—धारासारैरवर्षद् देव इति वक्तव्यम्। मुशलशब्दो धारायामुपमानमुपमेयं वा न युज्यत इति व्यवहारः। ४६९—जागरूक इति वक्तव्यम्। सतर्क इति जागरूक इत्यर्थेऽप्रयुक्तम्। ४७०—कथाशेषतां यातमित्येवमुपन्यसितव्यम्। कथा शेषोऽस्येति कथाशेषम् ( बहुव्रीहिः ), तस्य भावस्तत्ता, ताम्। कथायामवशिष्टमित्यर्थे विग्रहे कथावशिष्टमित्यपि निर्दुष्टं भाति, तथापि प्रयोगोऽस्य

नेति परिहार्यमेतत्। ४७१—पुरा वन्यानामधुना सभ्यशिरोमणिंमन्यामप्ययमेव देशः शिक्षागुरुः किमुत सामान्येन सभ्यानाम् इत्येवं वक्तव्यम्। तत्र सामान्येनेति प्रकृत्यादित्वात्तृतीयौपसंख्यानिकी। ४७२—आयतनमिति स्थानमुच्यते देवतायतनादिषु दर्शनात्। ईश्वरेच्छायत्तेति तु वक्तव्यम्। ४७३—शकटीवाहनाद्यभ्यासं कारितस्तुरग इत्येवं वक्तव्यम्। अभ्यासः परिशीलनं भवति। तेनाभिपूर्वोऽस्यतिर्ज्ञानार्थको न, येन णिचि कर्तुः कर्मत्वं स्यात्। ४७४—आयुर्जीवनकाल इत्यसकृदुक्तम्। तेनायुः शब्दोऽस्थाने। न कृत्स्नेप्यतीते वयसीति वक्तव्यम्। नेतः पूर्वं कदाचिदित्येवं वा। ४७५—हृदयं शल्येनेवाविध्यतेति वक्तव्यम्। शल्यं हि विध्यति न तु स्वयं विध्यते। ४७६—एकोऽपरं नान्वभवत् इति, एकः सदेशे स्थितमपरं नालोकतेति वा वक्तव्यम्। ४७७—अपनयावगुण्ठनमित्येवोचितं वक्तुम्। अवगुण्ठनं नाम न किञ्चिदुद्घाटनीयं भवति। ४७८—तदुत्तरे इत्यादेर्वाक्यखण्डस्य स्थाने तांश्चैवं प्रत्युवाचेति वक्तव्यम्। ४७९—प्रजास्वत्याचारा बभूवुरिति वक्तव्यं प्रजासु दारुणवृत्तयो वेति। अतिक्रान्त आचारमित्यत्याचारः। इदं प्रायेण विशेषणमिति प्रयुज्यते न तु विशेष्यमिति। आचरतिः सकर्मकः। उपमानादाचारे (३।१।१०) इत्यत्र शिष्यं पुत्रमिवाचरति पुत्रीयति शिष्यमित्युदाहृतत्वात्। अतिक्रम्य मर्यादामाचरन्नित्यत्याचरन्। तेन कर्मणि द्वितीया साम्प्रतिकी स्यात्। ४८०—भीष्माध्यक्षिता सती, भीष्मेणाधिष्ठितेति वा वक्तव्यम्। ४८१—शरीरे न मातीति वक्तव्यम्। मा माने आदादिकोऽकर्मकः, स प्रयोक्तव्यः। ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्पदो मुद इत्यत्र माघे यथा। ४८२—विस्मयास्पदेषु वस्तुष्विति वक्तव्यम्। अभूततद्भावे च्विः। अभूततद्भावश्च नेह विवक्षित इति च्विना नार्थः। पदास्पदस्थानभाजनादीन्यजहल्लिङ्गान्येकत्वमतिक्रामन्त्यपि दृष्टानि। भवादृशा एव भवन्ति भाजनान्युपदेशानामित्यत्र कादम्बर्यां तथा दर्शनात्। ४८३—रजः कृष्यासुतिपरिषदो वलच इति रज इति प्रातिपदिकाद् वलचि रूपसिद्धिः। इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते। तेनेह

इत्यादिषु जीवत्पुत्त्र इत्यर्थोपलब्धेश्च। ४९६—स्वशरीराणि शवराशीकृतानीति वक्तव्यं स्वशरीराणि शवराशयः कृतानीति वा। षष्ठ्या तु नार्थः। ४९७—पौर्वापर्येणानुगमयितुम् इति वक्तव्यम्। पदं पदान्तरेणान्वेतीति व्यवहारः। कश्चित्पदं पदान्तरेणानुयद् अनुगमयति। ४९८—भूयो विचारणीयमित्येव पर्याप्तम्। प्रकर्षवतोऽपि प्रकर्षविवक्षास्तीति चेद्यथान्यासं साधु। ४९९—भीता इत्येव पर्याप्तम्। भयशब्देन नार्थः। ५००—अभिध्या तु परस्य विषये स्पृहेत्यमरात्परकीयेऽर्थे ममायं स्यादिति संकल्पः। तेनेष्टदेवतामनुध्यायेदिति वक्तव्यम्।५०१—अत्र विद्यालये त्रिंशत्संख्याकाः शिक्षकाः, अत्र विद्यालये त्रिंशच्छिक्षका इति वा वक्तव्यम्॥

इति पदवाक्यव्यवहार विवेचनम्।

---

## अथ प्रकीर्णकविवेचनम्।

१—करुणैव पय इति करुणापयः। मयूरव्यंसकादिः। करुणापयसां पयोनिधिरिति करुणापयः पयोनिधिः। स चागाध इति अगाधकरुणापयःपयोनिधिरित्युचितं वक्तुम्। २—तीक्ष्णैः स्वदन्तैरिति वक्तव्यम्। उक्तो हेतुः समासविवेचने। ३—नायमृकरान्तानां समास इत्यानङ् नेत्यदोषः। ४—बङ्गानामिति तूचितम्। बाङ्गमिति तूच्यमानं साधीयः स्यात्। पूर्वत्र बङ्गानां (क्षत्त्रियाणां) निवासो जनपदो बङ्गाः। ५—तं नेतारमाश्रिता इति वक्तव्यम्। इयमेव संस्कृतभाषितभङ्गिः। ६—शान्तिः संभविनीति वक्तव्यम्। संभवनं संभवः। ऋदोरप्। सोऽस्या अस्तीति संभविनी। ७—द्वित्रशब्दः संख्येय एव वर्तते न तु संख्यायाम्। तेन द्वित्राः स्वनिबन्धा मे प्रेर्या इति विज्ञप्तिरित्येवं विपरिणमय्य वक्तव्यम्। ८—न हि पथिभ्रष्टः कश्चिदित्येवं वक्तव्यम्। यदि नाम पथशब्दोप्यस्तीत्याग्रहस्तर्हि यथान्यासमेवास्तु। ९—मनोवचनकर्मभिरित्येवं वक्तव्यं मनसा वाचा

कर्मणा चेति वा। पूर्वत्र समाहारस्तु नेष्टः, पृथगात्मताया अभिव्यक्तेरिष्टत्वात्। १०—चक्षुषामिति बहुवचनमपार्थकम्। चक्षुषोर्गोचर इत्येव साधु। एकत्र गोचरशब्दप्रयोगोऽपरत्र विषयशब्दप्रयोग इति वैषम्यं सहृदयहृदयमाकुलीकरोति। ११—विनाशः परिवर्तनं चेति वक्तव्यम्। अत्र चकार उपेक्षितः, स दोषः। १२—अहो अस्मीति साधु। ओत् इति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यमिति प्रकृतिभावः। १३—अविनश्वरीति वक्तव्यम्। इण्नशजिसर्तिभ्यः क्वरप्। टिड्ढाणञ् इत्यादिना ङीप्। १४—उपस्तम्भकमिति वक्तव्यम्। मूर्धन्यादेशस्याप्रसङ्गात्। १५—कल्पयन्तीति ण्यन्ताल्लटि साधु स्यात्। कृपू सामर्थ्ये इत्यकर्मक एव धातुः। १६—यदर्थमयं जीवेत्तन्नायं विस्मरेत्। योऽस्य परमः पुरुषार्थस्तं नायं विस्मरेत्, इह (लोके) यदस्य लक्ष्यं तन्नायं विस्मरेदिति वा वक्तव्यम्। १७—अनुकरोषीत्येव साधु। अनुपराभ्यां कृञ इति परस्मैपदम्। १८—स्तुसुधूञ्भ्यः परस्मैपदेष्विति नित्यमिटि प्रास्तावीरित्येव साधु। १९—उपायतेति साधु। विभाषोपयमने इति वा सिचः कित्त्वेऽनुदात्तोपदेशवनतितनोत्यादीनामित्यादिनाऽनुनासिकलोपः। २०—गृधु अभिकाङ्क्षायामिति धातुरकर्मक इति प्रसाधितं भूमिकायाम्. तेन परकीयेर्थे गृध्यतीति वक्तव्यम्। २१—प्रतिभातियोगे द्वितीया भवति यथा यावद्-योग इति दुर्घटवृत्तिकारः। २२—पञ्चमी भयेनेति समाससूत्राल्लिङ्गाद्भयशब्दयोगे पञ्चमीष्टा। तेन दण्डाद्भयादित्येव साधु। एवं भीषाशब्दयोगेपि पञ्चमी। यथा—भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाग्निश्च वायुश्च मृत्युर्धावति पञ्चमः॥ इति कठोपनिषदि। २३—टाबृचीति पादन्तात्टापि त्रिपदा गायत्री भवति न तु चतुष्पदेति वाच्यम्। २४—समासेऽनञ्पूर्वे क्त्वो ल्यप् इति प्राथ्येति साधु। २५—ऊह वितर्के इत्यनुदात्तेत्। तेन ऊहत इति वक्तव्यम्। २६—अद्यतना इत्येव साधु। सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् चेति ट्युल्-प्रत्ययस्तु[illegible]। ल प्रत्ययस्य तु प्रसङ्ग एव नास्ति। २७—यदा प्रकर्षवतामपि प्रकर्षो विवक्ष्यते तदा ऽऽतिशायिकादपर आतिशायिकः

प्रत्यय इष्यत इति श्रेष्ठतम इत्यदुष्टम्। २८—ननु इनः स्त्रियामिति कपः प्रसङ्गः। शोभनाः पन्थानोऽस्यां नगर्यामिति सुपथिकेति स्यात्। न पूजनादिति निषेधस्तु षचः प्राचीनानामेव। कप्प्रत्ययस्तु षच उत्तरः। सत्यम्। समासान्तविधेरनित्यत्वात्समाधेयम्। युवोरनाकौ इति सूत्रे सुपथीति भाष्याच्च। सुपथीति रूपं च स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपे सिद्धम्। २९—क्रमेरुदात्तत्त्वादिटि आक्रमितार इति साधु। ३०—चिरायुभूँया इत्येव साधु। स्त्रीप्रत्ययानां ङीप्ङीष्ङीनामप्राप्तेः। ३१—वणिग्व्यापारेणेति वक्तव्यम्। व्यापारशब्दः केवलो वाणिज्यं नाह। ३२—आत्मावलम्बाः स्वाश्रया इति वा वक्तव्यम्। निर्भरशब्दस्तु नात्रार्थे क्वचित्प्रयुक्तपूर्वः। ३३—प्रेम पय इति वक्तव्यं समस्तेन व्यस्तेन वा रूपकेण। षष्ठ्या तु नार्थः। ३४—अपाङ्गशब्दो नेत्रप्रान्ते रूढः। रूढिर्योगाद्बलीयसीत्यपाङ्गशब्दो बलान्नेत्रप्रान्तं स्मारयति। तेन न्यङ्गानामिति वक्तव्यम्। ३५—रिक्तमित्यनुक्त्वाऽनुपयुक्तं निर्व्यापारमिति वा वक्तव्यम्। ३६—पञ्चवैंशतिक इति तु वक्तव्यम्। पञ्चविंशतिस्तत्त्वानि परिमाणमस्य पदार्थव्यूहस्येति विग्रहः। तदस्य परिमाणमिति ठञ्। संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः। ड्वुंस्तु विंशतित्रिंशद्भ्यां विहित इति पञ्चविंशतेर्न भवति। प्रातिपदिकग्रहणे तदन्तस्याग्रहणात्। ३७—योऽनया शिक्षां रहयति ( त्याजयतीत्यर्थः ) इति वक्तव्यम्। रह त्यागे चुरादिष्वदन्तः। ३८—यदाऽयं गाढं निद्रातीति वक्तव्यम्, गाढया निद्रया शेत इति वा। तत्रेत्थम्भूतलक्षणे तृतीया। शेते इति च निपद्यत इत्यनेन समानार्थकम्। यथा शयाना वर्धते दूर्वेत्यत्र। ३९—मया मुखेनोत्तरितः प्रश्न इति वक्तव्यं मया वाचा प्रत्युक्तः प्रश्न इति वा। तद्धितवृत्त्या नार्थः। ४०—श्रीबालस्यानुत्तमं चरितमिति वक्तव्यम्। आदर्शो मुकुरो भवति। तेन श्रीबालस्य चरितं लोकस्य लोकचरितस्य वाऽऽदर्श इति वक्तव्यम्। ४१—दृशेरत्नेति वक्तव्यमिति णिच्यणौ कर्तुः कर्मत्वम्। अभिवादिदृशोरात्मनेपद इत्यात्मनेपद एव विकल्पः। ४२—परेणोदीरितोर्थस्तद्वचो-

भिरेव परस्मा आवेद्यत इति संस्कृतस्वालक्षण्यम्। तेन त्वया राज्यहिता-येत्यादि वक्तव्यम्। ४३—काश्मीरा नाम जनपद इत्येवं बहुत्वे काश्मीर-शब्दः प्रयोज्यो व्यवहारं चेदनुविधित्ससे। लक्षणैकचक्षुष्को मास्म भूः। ४४—अतीतं मासत्रयं प्रवृत्तस्येत्यादि वाच्यम्। अत्यन्तसंयोगे द्वितीयैव साध्वी। मासत्रयं स्वयं निर्मितः कालोऽस्ति न तु यतः कालनिर्माणम्, तेन यतश्चाध्वकालनिर्माणं तत्र पञ्चमीति पञ्चम्या अप्रसङ्गः। ४५—प्रस्था-प्यन्ते तत इति वक्तव्यम्। विष्ठापयतिस्तु विशिष्टं स्थापनमाह। ४६—विदु-षितरेति वाच्यं विद्वत्तरेति वा। उगितश्चेति ह्रस्व विकल्पः। ह्रस्वाभावपक्षे तसिलादिष्विति पुंवत्त्वम्। ४७—अन्तरायेण भवन्त्या त्वयेति वक्तव्यम्। प्रातिपदिकार्थे प्रथमा तु नेह युज्यते। ४८—विश्वजनेभ्यो हिता इति विश्वजनीनाः। आत्मन् विश्वजनभोगोत्तरपदात्खः। उपपराभ्यामित्यनेन सर्गेऽर्थे परापूर्वात्क्रमेरात्मनेपदमेव साधु। तेन मास्म पराक्रमध्वमिति वक्तव्यम्। ४९—वासिष्ठो गोत्रेणेति वा वसिष्ठेन सगोत्र इति वा वक्तव्यम्। गोत्रान्ताच्छस्य तु प्रसङ्ग एव न। ५०—संयते बन्दिरिति बन्दीति च प्रयुज्येते स्त्रियां नियते। तेन कियत्यो बन्द्यः कारायामिति वक्तव्यम्। ५१—तमाम्नायं वा सम्प्रदायं वोत्सृजेयमिति युक्तं वक्तुम्। ५२—मामिकेति तु साधु। केवलमामकभागधेयेत्यादिना छन्दसि स्त्रियां ङीब्विधीयते। मामकशब्दश्चाणन्त इत्यणन्तत्वादेव सिद्धेस्तद्ग्रहणं नियमार्थम्। तेन भाषायां ङीब्न। ५३—सहोदरा इवेति वक्तव्यम्। षष्ठ्या नार्थः। ५४—गभीरो ऽयं जलाशय इति वक्तव्यम्। जलाशयः पुमान्। ५५—विपरीयत इति विपरिपूर्वाद् ईङ् गतावित्यस्माद्दिवादेः कर्तरि लटि रूपम्। ५६—षुञ् अभिषवे। अभिषवः स्नानं सुरासन्धानं च। तेन सुनो-त्युत्पादयतीति यदुक्तं तन्न साधु। सवितृशब्दश्च षू प्रेरणे इति तुदादेः परस्मैपदिनो व्युत्पाद्यते। सुवति लोकं कर्मणीति सविता। ५७—पराभव-तिरकर्मको दृष्टः। ते सुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुरित्यत्र भाष्ये तथा दर्शनात्। परिपूर्वस्तु सकर्मकः। तेन विपदः (कर्त्र्यः) परिभवन्तीति वक्तव्यम्। ५८—अभितः परितः समयानिकषाहाप्रतियोगेऽपीति परितो-

योगे द्वितीयैव साध्वी। तेन दुष्कृत इति वक्तव्यम्। ५९—परिग्लायति मधुरायाभ्यवहारायेति वक्तव्यम्। पर्यादयो ग्लानाद्यर्थे चतुर्थ्येति समासविधानाल्लिङ्गाच्चतुर्थ्येव साधुः। ६०—कुचाग्रं औषधविशेषेण लेपयेत् इत्येवं वक्तव्यम्। लिप उपदेह इति धातुस्तस्येदृशो व्यवहारः। कुचाग्रे इति द्वितीयाद्विवचने रूपम्। ६१—द्वयेऽपि, उभयेऽपीति वा वाच्यम्। द्वयम् इति चोभयमिति च स्वभावत एकत्वे बहुत्वे च प्रयुज्येते। द्विशब्दस्तु द्वित्वाविष्टां संख्यामाह। ६२—भिषगभिषजोरिति वक्तव्यम्। चोः कुरिति कुत्वे झलां जशोन्त इति जश्त्वे च निर्दिष्टं रूपं साधु। ६३—सुवर्णमयः सम्पत्तिशाली वाऽऽसीदिति वक्तव्यम्। अर्थादिति पञ्चम्यन्तं मध्येवाक्यं पदान्तरेणानन्वितं न प्रयोगमर्हति। नायं संस्कृतवाग्व्यवहारः। ६४—पुरुषस्यार्थः प्रयोजनमिति व्युत्पत्त्या पुरुषार्थशब्दो धर्मार्थकाममोक्षाणामन्यतममाह। ते धर्मादयश्चतुर्वर्ग इत्युच्यते। मोक्षवर्जं च त्रिवर्ग इति। मोक्षश्च परः पुरुषार्थ इत्याख्यायते। पौरुषं तु नायं पुरुषार्थशब्दः कदाचिदाचष्टे। तस्मात्पुरुषकार उद्योगोऽभियोगो वेति वक्तव्यम्। ६५—कस्मा अप्यागन्तुकायेति वक्तव्यम्। अत्र तुमुन्प्रयोगविषये भूमिकायां विस्तरशो निगदितमिति सा विलोक्या। ६६—चतुर्दशोत्तरेष्वेकोनविंशतौ वत्सरशतेष्विति वक्तव्यम्। अन्यथा एकोनविंशत्यधिकं शतमिति मध्यमपदलोपिसमासः स्यात्, अर्थश्च विपरीयात्। एकोनविंशतिशतीति द्विगुर्वा स्यात्। ६७—भवेदिति तु वाच्यम्। लिङ्निमित्ते लृङ्ङनुशिष्टः क्रियातिपत्तौ गम्यमानायाम्। हेतुहेतुमद्भावश्च लिङो निमित्तम्। स चेह नास्तीति कुतो लृङोऽवसरः। ६८—जोषमिति तूष्णीमित्यर्थे पठितम्, मौनं तु नाह, येनाभजदित्यनेनान्वियात्। जोषमिति मकारान्तमव्ययम्। ६९—प्रभवेयुरित्येव साधु। हेतुहेतुमद्भावो लृङो निमित्तम्। हेतुहेतुमद्भावश्चशब्दोक्त इष्यते न त्वार्थिकः। स चेह नास्तीति लृङोऽविषय एषः। ७०—अन्तर् इत्यभिमन्यत इत्येव साधु। अन्तरिति रकारान्तमव्ययम्। तेन रुत्वयत्वयलोपानामप्रसङ्गः। ७१—नित्यं वृद्धशरादिभ्य इति मयटा भवितव्यम्। क्वचिदुत्सर्गा अपवादविषयेऽभिनिविशन्त इत्यपि काञ्चनीति

साधु । ७२—णाविष्ठवद्बहुलमिति बहुलग्रहणात्क्वचिदिष्ठवद्भावो न । तेन दवयामीत्यस्य प्रसङ्गे क्वचिद् दूरयामीत्यपि । ७३—द्विषश्चेति लङो झेर्जुस्वेति साधु । पक्षेऽद्विषन्निति रूपम् । ७४—निगलितुमिति वा निगालितुमिति वा वक्तव्यम । तुमुनि इटि गुणो दुर्वारः । ग्रोऽचि विभाषेति पाक्षिकं लत्वम् । वृतो वेतीटो वा दीर्घः । ७५—प्रोपाभ्यां समर्थाभ्यामिति क्रमेरात्मनेपदं साधु । ७६—अभ्युपेयमित्यस्य साधुत्वमभिशङ्क्यते । एतिस्तुशास्वृदृजुषः क्यप् इतीण् गतावित्यस्मात्क्यपा भवितव्यम् । सत्यम् । ईङ् गतौ दैवादिकाद्यत् । ७७—अनद्यतने लङ् इत्यत्रानद्यतने इति बहुव्रीहिः । अविद्यमानोऽद्यतनो ( कालो ) ऽस्येति विग्रहः । अत्र तु व्यामिश्रः कालः, अद्यतनानद्यतनयोर्व्यतिकरात् । तेनात्राभुज्महीत्येव वाच्यम् । ७८—समुदस्थादिति वक्तव्यम् । चेष्टाया अभावादात्मनेपदं न । कर्तरि समुदस्थीयतेति रूपमनुपपाद्यम् । ७९—पूर्वं श्रुतमनेनेति श्रुतपूर्वी । सपूर्वाच्चेतीनिः । इनिरयं तद्धितः । तद्धितप्रत्ययेनानुक्ते कर्मणि द्वितीया । ८०—पावनी देववाणीति वक्तव्यम् । पूञ् पवने इत्यस्माण्ण्यन्ताल्ल्युप्रत्यये पावनमिति निष्पद्यते । पावयतीति पावनम् । पावनशब्दो गौरादिषु पठ्यते । ततो ङीषि पावनीति शब्दरूपनिष्पत्तिः । ८१—ऋचेति वक्तव्यम् । आपं चैव हलन्तानामित्यापि 'ऋचा' इति सिध्यति नाम, प्रयोगस्त्वस्य न दृश्यते । ८२—प्राणैः कण्ठगतैरित्यत्र इत्थम्भूतलक्षणे तृतीया वेदितव्या । कण्ठगतैः प्राणैरुपलक्षित इत्यर्थः । ८३—आनि लोट् इत्युपसर्गात्परस्य लोट् सम्बन्धिन आनेर्नस्य णत्वम् । ८४—विराडादिशब्दानामित्येव साधु । व्रश्चभ्रस्जेत्यादिना जस्य षत्वे जश्त्वे च रूपसिद्धेः । ८५—तत्रोमिति ब्रूमः । ओमाङोश्चेति पररूपमेकादेशः । ८६—अवधारणं निश्चयनं भवति । तेनावमपास्य विमुपसृज्य विधार्येति वक्तव्यम् । ८७—दूरान्तिकार्थेभ्यो द्वितीया चेति पञ्चमी । ८८—न्यस्येदिति तु वक्तव्यम् । असु क्षेपण इति दिवादिषु पठितम् । गणकार्यमनित्यमित्येवं समादधति । ८९—बहुव्रीहिरेवान्यपदार्थप्रधानैरित्यादिरुपन्यासोऽदोषः ।



अत्रोपमानोपमेययोर्वचनभेदः सचेतसामुद्वेगकरो नेत्यदोषाय । ९०—व्यामो-

हयितुः परमेश्वरस्य शैतानस्य चेत्यादि वक्तव्यम्। भेदे षष्ठीव्यवहार एव प्रतिष्ठितः ९१—संकरोऽवकरः। ऋदोरप्। वर्चस्केऽवस्कर इति पाणिनीयेऽवस्कर इत्यत्र सुट् निपातितः। प्रत्ययस्त्वबेव। उच्चारावस्करौ शमलं शकृत्। पुरीषं गूथं वर्चस्कमित्यमरः। ९२—चक्षिङः ख्याञ् इति क्शादिरयमादेशः। ख्शाञः शस्य यो वेत्युक्तम्। तच्चासिद्धकाण्डे द्रष्टव्यम्। तेन यत्वस्यासिद्धत्वेन शकारव्यवधानान्न णत्वम् इति प्रथितप्रख्यानामित्येव साधु। ९३—परिष्ठितेरित्येव साधु। उपसर्गात्सुनोतिसुवतीत्यादिना मूर्धन्यादेशो दुर्वारः। ९४—अकर्मकाच्चेत्युपपूर्वात्तिष्ठतेरात्मनेपदं विधीयते, तस्मात्परस्मैपदं दुष्टम्। उपतिष्ठते उपस्थितो भवतीत्यर्थः। ९५—एकतमत्साधनमिति वक्तव्यम्। नपुंसके स्वमोरड्डादेशस्य दुर्वारत्वात्। ९६—अध्ययनेन लेखनेनाभ्यसनेन चानल्पं प्रयोजनमिति तु वक्तव्यम्। तृतीयाप्रयोग एव प्रायिकः। गीतासु तु यावानर्थ उदपाने सर्वतः सम्प्लुतोदके इत्यत्र सप्तम्यपि दृश्यते। ९७—आकाशपाताले एकीकरोतीति तु वक्तव्यम्। समाहारस्त्वेकोर्थः, तत्राभूततद्भावविषयस्य च्वेरनवसरः। ९८—अवश्यम्भाविनमपायमित्यादि वक्तव्यम्। अवश्यमिति मकारान्तमव्ययम्। लुम्पेदवश्यमः कृत्ये इति कृत्ये परे मलोपविधिर्न तु कृन्मात्रे। ९९—एष वस्तुतो दर्शनकाल इति शक्यं व्यपदेष्टुम्। दार्शनिक इति तु दर्शनमधीते वेद वेत्यर्थे व्यवह्रियते। न च व्यवहारो न्यथयितव्यः स्वैरितया। १००—संस्कृतेतरया भारत्येत्येवं ब्रूयात्। वाग् हि साधनमर्थोक्तौ न त्वधिकरणमिति सप्तम्यनवसरग्रस्ता। १०१—अद्यतनार्यसंस्कृते रूपमिति तु निगाद्यम्। खप्रत्ययस्याप्राप्तेः। १०२—ब्रह्महस्तिभ्यां वर्चस इत्यच् समासान्तो न कृतः, स दोषः। ब्रह्मवर्चसकामनेति तु वाच्यम्। १०३—महोपयोगाया अपि शिक्षाया इति वक्तव्यम्। कीदृश्या इति शिक्षाया एव विशेषणं भवितुमर्हति न तूपयोगिन्या इति विशेषणस्यापि। वक्ता तु तत्राप्यस्यान्वयमिच्छति। तन्न संभवति। नहि विशेषणं विशेषणान्तरं विशिनष्टि। १०४—यदा वाक्ये चेच्छब्दः प्रयुज्यते तदा तदेति वा तर्हीति वा न प्रयुज्यत इति संस्कृतवाग्व्यवहारः।

१०५—ज्ञानालोकप्रवर्तकानामिति वक्तव्यम्। तकारव्यवधानेन अट्कुप्वाङ्नुम्व्यवायेपीति णत्वं न। १०६—प्रबन्धशब्दः क्रियासातत्ये वर्तते, यथा नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्यत्र पाणिनीये। तेन संविधानं किञ्चिद्विधेयमिति वा संविधा काचिद्विधेयेति वा वक्तव्यम्। १०७—निबन्द्धव्या इत्येव साधु। तव्येऽनुनासिकलोपस्याप्रसङ्गात्। १०८—ख्रिष्टाब्दतो द्वयोर्वर्षसहस्रयोरिति वक्तव्यं प्रागिति चाप्रयोज्यम्। उपपादना च भूमिकायां कारकाधिकरणे द्रष्टव्या। १०९—स्पर्धायामाङ इत्यात्मनेपदे आह्वयमानमिति साधु स्यात्। ११०—अभाययत्सीतामिति वक्तव्यम्। पुगात्मनेपदं च हेतोरेव भये सति भवतो न तु करणादपि। १११—अबिभेत् इत्येव साधु। शपः श्लुः। तिपि गुणः। ११२—विचेष्टे-रन्नित्यत्र विशब्दो विरुद्धार्थमाह। नहि भवति विशेषेण चेष्टते विचेष्टत इति, किन्तर्हि विरुद्धं चेष्टते इति। यथौदनस्य पूर्णाश्छात्रा विचेष्टन्त इत्यत्र। ११३—विघ्न इति बाध इति च (बाधेत्यपि च) पर्यायौ। पर्यायौ च पर्यायेणार्थं ब्रूत इति तथोच्येते। तेन युगपत्प्रयोगो नेति विघ्ना इत्येव पर्याप्तम्। ११४—ऐषम इति सकारान्तमव्ययम्। तेन नैषमः संभाव्यत इति वक्तव्यम्। ११५—अलंकरणमिति ल्युडन्तम्। ल्युडन्तं नपुंसकम्। ननु करणाधिकरणयो विंहितो ल्युट् विशेष्यलिङ्गको भवति यथा राज-भोजनाः शालय इत्यत्रेति चेदत्र ब्रूमः—यत्र खलु विशेष्यं नास्ति ल्युडन्तं च शब्दरूपं प्राधान्येन विवक्षितं भवति तदा नपुंसकमेव तद्भवतीति व्यवहारः। राजधानीत्यादिष्वश्रुतमपि विशेष्यं गम्यत एव। राजा धीयतेऽस्यां नगर्यामिति तद्व्युत्पत्तेः। ११६—गानेनेति वक्तव्यम्। गायनो गाथको भवति। गस्थकन्। ण्युट् च। ११७—प्रोपाभ्यां युजेरयज्ञपात्रेष्विति तङा भवितव्यम्। लृटि उपयोक्ष्यन्त इत्येव साधु। ११८—ओजःसहोऽम्भसा वर्तत इति ठकि साहसिकशब्दनि-ष्पत्तिः। साहसिकः पुरुषो भवति। तस्य कर्म साहसिक्यं भवति। तेन साहसिकं कर्मेत्यपास्य साहसमित्येवोच्यताम्। ११९—विंशत्याद्य आनवनवतेः क्रियामिति विंशतिर्नवनवतिश्चैवेति वक्तव्यम्।

१२०—भाषायां तिङन्तेन समासो नेति नाद्रियन्त इति वक्तव्यम्, न तु नञ्तत्पुरुषः समाश्रेयः। अपचसि त्वं जाल्मेत्यत्रापचसीति नञ्समासो न, पृथक्पदद्वयमेतत्। नलोपो नञस्तिङ्क्षेप इति वार्तिकमप्राप्तं नलोपमेव विधत्ते। १२१—व्युत्क्रम्येतेति तु वाच्यम्। क्रमः परस्मैपदेष्विति परस्मैपद एव क्रमेरुपधाया दीर्घविधिर्न तु कर्मण्यात्मनेपदे। १२२—द्वात्रिंशतो निबन्धानां संग्रह इति वक्तुमुचितम्। विंशतिप्रभृतयो नवनवत्यन्ताः संख्यावचनाः स्त्रियामेकत्वे प्रयुज्यन्ते संख्येये वर्तमानाः। १२३—कठिनमिति कठोरेण समानार्थकं सुषिरप्रतियोगि। क्रूरेप्युपचर्यते। कृच्छ्रसाध्ये तु नास्य प्रवृत्तिः क्वचित्साहित्ये दृष्टेति तत्रार्थे आधुनिकोऽस्य प्रयोगो दूष्यः। १२४—त्रिंशद्वर्षः, वयसा त्रिंशद्वर्ष इति वा वक्तव्यम्। त्रिंशतं वर्षाणि भूत इति विग्रहः। चित्तवति नित्यमिति ठञो लुक्। १२५—संस्कृतज्ञ तरेषामिति तु साधु। इतरशब्दो हि सर्वनाम सर्वादिगणे पाठात्। न च तत्पुरुषे सर्वनामता प्रतिषिद्धा शास्त्रेण। १२६—ब्रह्महस्तिभ्यां वर्चस इत्यचि समासान्ते ब्रह्मवर्चसमिति भवति। तत, इनौ ब्रह्मवर्चसिन इति रूपम्। सान्तत्वाभावाद्विनेरभावः। १२७—कियन्तिचिद्वर्षाणीत्यत्यन्तसंयोगे द्वितीया प्रयोज्या। तृतीया त्वपवर्गे विहिता। अपवर्गश्चेह नास्ति। १२८—भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियामित्यमराद् भावुकं भव्येन समानार्थकं क्लीबम्। सहृदयं सचेतसं तुनेदमाचष्टे। तेन सहृदयानामिति वक्तव्यम्। १२९—बाष्पयानमित्यत्र पूर्वपदात्संज्ञायामग इति णत्वं प्राप्नोति। क्षुभ्नादित्वान्न भवति। क्षुभ्नादिराकृतिगणः। अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्य इति ह्युक्तम्। १३०—शृणोतिः परस्मैपदी। तेन शृणु इत्येव साधु। १३१—उच्चावचा इति मयूरव्यंसकादित्वात्साधु। उच्चावचं नैकभेदमित्यमरप्रामाण्यादुच्चावचं नानेत्यनेन समानार्थकम्। तेनैकतरं शक्यं हातुम्। नानेति हीयताम्। १३२—दोषविशेषं विशिष्टं दोषमिति वा वक्तव्यम्। १३३—कांश्चन मासानित्यत्यन्तसंयोगे द्वितीया प्रयोक्तव्या। तृतीयया नार्थः। १३४—ऋक्पूरब्धूःपथामानक्ष इत्यः समासान्तो विहितः। तस्मिन्सति स्त्रियां टापि च वाजि-

धुरां वहन्तीति वक्तव्यम् । १३५—संस्कृतज्ञमानिन इत्येव साधु। णिनौ मुमागमस्याप्रसङ्गात्। १३६—अपि चेन्मनुष्योऽतिमात्रं बुद्धि-प्रमाणक इत्यादि वक्तव्यम्। १३७—दिने दिन इति वक्तव्यम्। दिना-द्दिनमित्यत्र दिनशब्दे पञ्चमी च द्वितीया चोभे विभक्ती अनुपपन्ने। १३८—प्रसितोत्सुकाभ्यां तृतीया चेति तृतीया साध्वी। १३९—संस्था त्वया चकास्ति, त्वं तु न चकास्सि संस्थयेत्येवं वचनं निर्दूषणं स्यात्। समासो बुद्धिलक्षणमिति यदुक्तं पूर्वसूरिभिस्तन्मनसि करणीयम्, यथा प्रक्रान्तं तथा च समापनीयम्। १४०—सुभ्रु इत्यत्र भ्रूशब्दस्योवङ्स्थानी-यत्वाद् नेयङुवङ्स्थानावस्त्री इति नदीसंज्ञाप्रतिषेधाद् अम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वं न स्यादिति शङ्क्यते। अप्राणिजातेश्चारज्वादीनामित्यत्र 'अलाबूः' 'कर्कन्धूः' इत्यूकारान्तादप्यूङ् प्रत्ययमुदाजहार भाष्यकारः। एतस्मादेव ज्ञापकात्क्वचिदूकारान्तस्य प्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्या-हुरिति मल्लिनाथः। भट्टोजिदीक्षितादयस्तु प्रमाद एवायमिति प्रतिपन्नाः। १४१—पोटायुवतिस्तोकेत्यादिना वकधूर्त्त इति तु युज्यते । १४२—विपूर्वः श्वसिरकर्मकः, तेनात्मनश्छायायामिति वक्तव्यम्। १४३ – निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिरित्यसाम्प्रतमित्यनेन निपातेनाभिहितत्वाद् वृक्ष इत्यत्र प्रातिपदिकार्थमात्रे प्रथमा। १४४—आशिषि नाथ इति नियमाद्याच्ञायां परस्मैपदमेव युक्तम्। नाथस इति वा पाठः कल्पनीयः। १४५—ईदृशीति शौ रूपं साधु। अत्र शिप्रत्ययेऽङ्गं नान्तं न, किन्तर्हि शकारान्तम् नकार उपधा, न ऋकारः। १४६—सरूपाणीति वक्तव्यम्। ज्योतिर्जनपदरात्रिनाभि-नामगोत्ररूपेत्यादिना समानस्य सभावः। १४७—डुलभष् प्राप्ताविति धातुः। सर्वा प्राप्तिर्गतिपूर्विका। तथापि क्वचिन् सा गतिरुद्भूता प्राधान्येन विवक्ष्यते क्वचिदनुद्भूता गौण्येन। यदाह वामनः—लभिरयं क्वचिद् गत्युपसर्जनां प्राप्तिमाह, क्वचित्प्राप्त्युपसर्जनां गतिमिति। पूर्वत्र गत्यर्थ-त्वाभावाण्णिच्यणौ कर्तुः कर्मत्वं न, सितं सितिम्ना सुतरां मुनेर्वपुर्विसा-रिभिः सौधमिवाथ लम्भयन्निति माघकाव्य उदाहरणम्। ... प्रकृत-

मुदाहरणम्। अणौ कुमुदानि विकासं लभन्ते। णौ शिशिराः शशिभास (प्रयोजककर्त्र्यः) कुमुदानि विकासं लम्भयन्ति। १४८—केतकानां गन्ध इति केतकगन्धः। सोऽस्त्येषामिति केतकगन्धिनः। अत इनिठनाविति इनिः। तेन नात्र कश्चिद्दोषः। शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात् इति वामनीयसूत्रेण व्याख्यातम्। १४९—अन्यतो ङीष् (४।१।४०) इति वर्णवाचिनः कल्माषशब्दादनुदात्तान्तान्ङीषि कल्माषीत्येकवचनेम रूपम्। बहुवचने च कल्माष्य इति। १५०—ग्राहकानन्नमुपसर्पतीत्येवं वक्तव्यम्। उपसर्पतिः सकर्मकः। ग्राहकाणां सेवायामिति च संस्कृतवाग्व्यवहारो नेति वर्जयेदिमां पदावलिम्। १५१—अनुस्रियन्ते श्रियेति वक्तव्यम्। रिङ् शयग्लिङ्क्षु इति रिङादेशः। १५२—ते यदि जीवन्ति के मृता इत्येवमुपन्यसितव्यम्। जीविता इति तु निष्ठायां रूपम्। निष्ठा च भूते। वर्तमाना च प्राणधारणक्रिया विवक्षिता। १५३—वर्तमान इत्येव शोभनं वचः। तद्धितवृत्त्या नार्थः। प्रियतद्धितत्वं चेदात्मनोभिव्यङ्क्तु मिच्छसि कामं प्रयुङ्क्ष्व। १५४—समाजसंघटनमित्येव संस्कृतम्। संगठनमिति त्वपभ्रंशः। संग्रन्थनेर्थे संगठनमिति प्राकृतम्। १५५—अस्तवमित्येव लङ् युत्तमैकवचने रूपम्, गुणस्य दुर्वारत्वात्। १५६—कामधेनूरिति वक्तव्यम्। देवाः कामधेनव इति रूप्यन्ते। व्यस्तं चेदं रूपकम्। पुंस्त्वं तु दुर्लभम्। १५७—स्वे स्वे धर्मे निरता इति वाच्यम्। धर्मादनिच्केवलादित्यस्याऽप्राप्तेः। १५८—धर्मशब्दोर्धर्चादिषु पठ्यते। तेन पुन्नपुंसकयोर्वर्तते। तत्रेयं व्यवस्था—अपूर्वे पुँल्लिङ्गः। तत्साधने नपुंसकम्। तत्साधनं च यागः। प्रकृते चायमेवार्थ इति नपुंसकत्वं निर्दिष्टम्। १५९—प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योञ् इति भावेऽञि कौमारमित्येव साधु। स्थविरशब्दो युवादिषु पठ्यते तेन हायनान्तयुवादिभ्योण् इत्यणि स्थाविरमित्येव साधु। १६०—शूद्रातापस्यफलमिति क्वचिद्रामायणे इत्येवमुपन्यासो व्यवहारमनुपतेत्। व्यवहारश्च नातिपात्यो वैयाकरणंमन्येनापि।



१६१—अनुहरतीति वाच्यम्। कत्रभिप्राये क्रियाफले त्वात्मनेपदं न

दुष्यति । हरतेर्गतताच्छील्य इत्यनेन तु न प्राप्नोति । तत्र गतमिति गतिर्गृह्यते । गतविधप्रकारास्तुल्यार्था इति तुल्यतां [illegible] इति साम्प्रति सतमर्वाचीनं न बह्वादरणीयम् । १६२—[illegible] । रात्रिन्दिवमिति द्वन्द्वोऽधिकरणवृत्तिरपि व्यस्तरात्रिन्दिवस्य द्वे इत्याद्-विधान्यत्रापि प्रातिपदिकार्थवृत्तिर्भवति । १६३—प्रेमाश्रुवर्षमिति वाच्यम् । वर्षाशब्दः स्त्रियां बहुत्वे प्रावृषमाह न वृष्टिम् । १६४—किं करिष्यामीति वक्तव्यम् । हेतुहेतुमद्भावविरहाल्लृङ् न । लृट्-प्रयोगविषयो भूमिकायां विस्तरेण विवेचित इति तत एव विशेषो वेद्यः । १६५—कतिषुचिद् दिनेष्विति वक्तव्यम् । न हि चिदिति निपातः समासघटकतां याति पूर्वपदं वोत्तरपदं वा । १६६—पथो णो नित्यमिति व्युत्पादितः पान्थशब्दो पन्थानं नित्यं गच्छतीत्यर्थमाह । तेन प्रकृतेऽप्रसङ्गोऽस्य । पथिकशब्दस्तु शक्यप्रयोगः । तथापि नयनगोचरीकृत्य, नेत्रविषयीकृत्येति वाऽनवद्यहृद्यो न्यासः । १६७—भविष्यति गम्यादय इति भाविशब्दः साधुः । प्रयोगस्तु न साधुः । भविष्यतीत्येव वक्तव्यम् । १६८—इत उपविंशेषु वर्षेष्विद-मघटत, नेदं विस्मृतो लोक इति वक्तव्यम् । विस्मृत इत्यत्र कर्तरि क्तः, यथा व्यवसितादिषु । तथा च वामनसूत्रम्—व्यवसितादिषु क्तः कर्तरि चकारात् । १६९—भूकम्पाद् दिनत्रये इति वक्तव्यं पूर्वमिति चा-वक्तव्यम् । १७०—नार्थो दीक्षयेति वाच्यम् । अवश्यम्भाव आवश्यकं भवति । वुञा भावस्योक्तत्वादपरो भावप्रत्ययो व्यतिरिक्तः । अर्थश्चापि विवक्षितो नार्प्यते । १७१—तेषामेवेति पर्याप्तम्, तान्प्रतीति वा, नार्थो दुष्टिशब्देन । अथ प्रयुयुक्षसे दृष्ट्येति तृतीयान्तं प्रयुङ्क्ष्व । १७२—आप्लृ व्याप्तावित्यस्य लृदित्वाल्लुङि च्लेरङि अवाप इति रूपम् । १७३—चतसृणां दिशां समाहारश्चतुर्दिक् । द्विगुः । स नपुंसकम् इति नपुंसकत्वे स्वमोर्लुकि रूपम् । इह चतुर्दिगिति द्वितीयान्तम् । विचरतेरकर्मकत्वेपि देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति कर्मत्वम् । १७४—सहिशुरराज्यमुपजीवतीति वक्तव्यम् । अन्यथा विपरीतमुक्तं भवति । १७५—आङः स्थः प्रतिज्ञान इति प्रतिज्ञान

आत्मनेपदविधिः, इह त्वाश्रयणमात्रमर्थः। तेन आतिष्ठेदिति परस्मैपद मेव युक्तम्। १७६—स्वरूक्षैरित्यसमर्थसमासः, स्वस्य वचोभिरित्य-नेनाभिसम्बन्धात्। किञ्च। स्वशब्दोऽधिक इति त्याज्यः। १७७—भवि-त्रीति तृचि ङीपि रूपम। इदं कृदन्तम्। किं नाम तिङन्तमिहाध्याह्रियेत। 'अस्ति' इति 'भविष्यति' इति वा। यद्येवं भवित्रीत्यनुक्त्वाऽस्तीति भविष्यतीति वा किं नोच्येत लाघवात्। १७८—स्फीतिरित्यपशब्दः, स्फातिरित्येव शब्दः। निष्ठायामेव स्फायः स्फीभावो विधीयते। १७९—अन्वादेश एनादेशो विहितः। इह चान्वादेशो नास्ति। किंचि-त्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेश इति तल्लक्षणात्। १८०—नित्यं वृद्धशरादिभ्य इति मयटि काञ्चनमयमिति साधु। १८१—उदो नूर्ध्वकर्मणि, उदईहायामिति चेष्टायां यत्नेर्थे आत्मने-पद न तूत्थाने। तेनोत्तिष्ठतीत्येव साधु। १८२—आत्मावलम्बतामनु-शिष्या इति वक्तव्यम्। निर्भरो भरः। अतिशय इति यावत्। १८३—बह्व्य आपोऽत्रेति बह्वपानि। ऋक्पूरब्धूः पथामानक्ष इत्यकारः समासान्तः। १८४—दिवेत्यधिकरणवृत्ति। प्रातिपदिकार्थमात्रे दिवस इति वक्तव्यम्। एकत्वेप्युत्तरत्रयमिति समेत्येकवचनं साधु। १८५—गरलस्य भरो यत्रेति व्यधिकरणबहुव्रीहिरास्थेयो भवति। साऽगतिकस्य गतिः। तेन गरलभृत-येति वाच्यम्। १८६—आदिखाद्योर्नेति णिच्यणि कर्तुः कर्मत्वं न। तेन तनूजेनेति वाच्यम्। १८७—इच्छाऽभूद्यदहं पक्षिगण इवाकाश उड्डीयेति। परेणोदीरितोऽर्थः परकीयैरेव पदैरविकलं ज्ञाप्य इति संस्कृतसरणिः। वक्ता चात्मनं तच्छब्देन परोक्षवृत्तिना न जातु ब्रूयात्। सर्वस्यात्मा संनिहितो यतः। १८८—स्वशब्द आत्मवचन एकत्वे प्रयुज्यत आत्मत्रदिति स्वं निरायतिकं मन्यन्त इति वक्तव्यम्। १८९—संचरन्तीत्येव साधु। १९०—अभिलाषशब्दो घञन्तः, तेन पुंसि नियतः। अयमुत्कटो मेऽभि-लाष इति वक्तव्यम्। १९१—चित्तवति नित्यमिति ठञो लुकि द्वादश-वर्षामिति वक्तुमुचितम्। १९२—एकद्वान्वासरानिति वक्तव्यम्। एको वा द्वौ वा वासरावित्येकद्वा वासराः। संख्ययाऽव्ययासन्नाधिकसंख्याः

संख्येय इति बहुव्रीहिः । संख्येये डजबहुगणादिति डच् । १९३—स्निह्यति-रकर्मकः । तेन शिशुके स्निह्यतीत्येवं वक्तव्यम् । १९४ – ईक्षतिरिह दैव-पर्यालोचने वर्तत इति कर्मण उपसंग्रहादकर्मकः । तेन दैवमिति कर्म न पृथक्प्रयोगमर्हति । १९५—मेघर्तिभयेषु कृञ इति खचि मुमागमे टापि भयंकरेत्येव रूपम् । ङीपोऽप्रसक्तेः । १९६—कौसल्यायां रामो जातः, सुमित्रायां च लक्ष्मण इत्येवं वक्तव्यम् । जनिक्रियायां मातुरधिकरणतां विवक्षन्ति शिष्टाः । सोऽयं विषयो भूमिकायां विशदं सविस्तरं च व्याख्यातः । १९७—मायावि मित्रमित्येव साधु । मित्रमिति नित्यं नपुंसकम् । स्वमोर्नपुंसकादित्यमो लुकि नलोपः प्रातिपदिकान्तस्येति नलोपे सिद्धं मायावीति । १९८—सुन्दर्याऽनया शैल्येति वक्तव्यम् । गौरादित्वान्ङीष् । १९९—यती प्रयत्ने इतीदित् । श्वीदितो निष्ठायामितीण्निषेधे यत्तमित्येव साधु । २००—जागृ निद्राक्षये इत्ययं सेट् । अनेकाच्त्वात् । जाग्रोऽविचिण्णल्ङित्सु इति गुणः । तेन जागरित इति साधु रूपं निष्पन्नम् ॥

इति प्रकीर्णकं विवेचितम् ।

इत्थं विवेचिते रूपे शब्दानां साध्वसाधुनी ।
विनेयानां प्रबोधाय विनोदाय च तद्विदाम् ॥ १ ॥
यद्यमीभ्यः स्वदेतेयं हारिणी हृदयङ्गमा ।
विवेचना प्रसन्नेति सकामः स्यामहं तदा ॥ २ ॥
तेनेति मेऽर्थना नम्रा दोषज्ञा वीतमत्सराः ।
कृपया परयाऽऽविष्टा विमृशन्तु क्रियामिमाम् ॥ ३ ॥
न वैदुष्येऽभिमानो मे कर्मण्यत्र प्रयोजकः ।
न च दोषैकदृक्त्वं तु प्रपित्सा केवला मता ॥ ४ ॥
वाचामुपस्क्रियां कां चिदियमाधास्यति ध्रुवम् ।
कृतिः शैक्षस्य लोकस्य प्रत्ययोऽयं ममान्तरः ॥ ५ ॥
तामिमां प्राभृतीकृत्य वाग्विद्योभयजन्मनि ।
अर्पयामीश्वरे प्रह्वः प्रमना विरमामि च ॥ ६ ॥

इति श्रीचारुदेवशास्त्रिणः कृतिषु शब्दापशब्दविवेको नामाऽयं ग्रन्थः पूर्तिमगात् । शुभं भूयादध्यापकानामध्येतॄणां च ॥

